# कुमारसम्भवम्।

सप्तमसर्गान्तम्।

महाकविकालिदासविरचितम्।

मल्लिनाथसूरिकृतव्याख्यया सहितम्।

---

पण्डितकुलपतिना
वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विवृतव्याकरणसूत्राद्यंशसमन्वितम्।
तेनैव संस्कृतं प्रकाशितञ्च।

सप्तमसंस्करणम्।



कलिकातानगर्य्याम्
वि, एल, यन्त्रे, श्रीदक्षिणाचरण चक्रवर्त्तिना
मुद्रितम्।

ई १८०२।



पण्डित कुलपतिः श्रीजीवानन्द विद्यासागर बि, ए,

PANDIT-KULAPATI
JIBANANDA VIDYASAGARA, B. A.
*Superintendent, Free Sanskrit College, Calcutta.*

# विज्ञापनम्।

---

इह खलु सकलेषु सुखसाधनेषु काव्यमेव परमसुखसाधनं तद्धि मुहुर्मुहुः अनुशीलितमपि मनागपि विरागभाजनतां नैव भजते बहुसेवनेऽपि न याति च अपचीयताम् प्रत्युत आस्वाद्यमानं नवां नवां कामपि चमत्कारलहरीं चेतसि सुचेतसां प्रतिक्षणमातनोति समुल्लासयति च सहृदयहृदयसरोजम् न चापेक्षते तदास्वादनसम्पादने बहुलायासः।

काव्यञ्च विलक्षणरचनोपलक्षितो विविधगुणगुम्फितो नानालङ्कारमण्डितो रसभावादिप्रधानो वाक्यविशेषः।

तत्प्रणेतारश्च वाल्मीकिकालिदासादयः प्रथिताः। तत्र वाल्मीक्यादयः इतिवृत्तप्रधानं प्रसङ्गतो रसानुगुणं रामायणादिकम्, कालिदासादयश्च विविधरसानुगुणं प्रसङ्गत इतिवृत्तोल्लेखं रघुवंशादिकं काव्यं रचयामासुः।

तच्च काव्यं श्रव्यदृश्यभेदात् द्विविधम्। तत्र रामायणरघुवंशादिकं श्रव्यं, नागानन्दाभिज्ञानशकुन्तलादिकं नाटकापरपर्य्यायं रूपकपदाभिधेयं दृश्यं काव्यम्।

इतः पूर्वं १९५३ वर्षे भारतवर्षे मालवदेशे उज्जयिनीनामराजधान्याम् अशीमगुणधाम विक्रमादित्यनामा नृपतिरासीत्। तस्य धन्वन्तरिप्रभृतयो नव कविवराः सभासदो बभूवुः। तेषु कालिदास एव प्रथितयशा महाकविरासीत्। तेन च रघुवंश-कुमारसम्भव-मेघदूताभिधं काव्यत्रयं, श्रुतिचन्द्रिकाभिध उत्कलदेशप्रचलितो वेदोक्तकर्मप्रतिपादकप्रबन्धः ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रं च क्रमेण निरमायि। अनन्तरञ्च मालविकाग्निमित्र-विक्रमोर्वशी-शकुन्तलाभिधानि, दृश्यकाव्यानि प्रणीतानि एतच्च तत्कृतज्योतिर्विदाभरणग्रन्थे शेषाध्याये स्पष्टमुपलभ्यते यथा,

मत्तोऽधुना कृतिरियं सति मालवेन्द्रे श्रीविक्रमार्कनृपराजवरे समासीत्। इति

धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कुवेतालभट्टघटख[क]र्परकालिदासाः।

ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य। इति

यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी इति।

शङ्क्वादिपण्डितवराः कवयस्त्वनेके ज्योतिर्विदः समभवंश्च वराहपूर्वाः।

श्रीविक्रमार्कनृपसंसदि मान्यबुद्धिस्तैरप्यहं नृपसखा किल कालिदासः॥

काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं जातं ततो ननु कियच्छ्रुतिकर्मवादः ।
ज्योतिर्विदाभरणकालविधानशास्त्रं श्रीकालिदासकवितो हि ततो बभूव ॥ इति

वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ संमिते
मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः । इति च

अनेन ३०६८ अष्टषष्ट्युत्तरत्रिसहस्रसंख्यके कलेरब्दवृन्दे याते तद्ग्रन्थकरणं सुव्यक्तम् । इदानीञ्च कलेर्गताब्दाः ४९९७ तेषु निर्दिष्ट ३०६८ संख्यावियोगितेषु १९२९ वर्षाः समायान्ति । तेन,इतः पूर्वं १९२९ वर्षेभ्यात् पूर्वं कालिदासकवितो ज्योतिर्विदाभरणं ततः पूर्वं रघुवंशादिकमभूदिति प्रतिभाति । एतत् सन्दर्भे यद्यपि दृश्यकाव्यत्रयकरणं न प्रतीयते तथापि दृश्यकाव्यानां प्रागुक्तानां ज्योतिर्विदाभरण-ग्रन्थात् पश्चात् काले कालिदासकृततानां न तेषां तत्र समुल्लेखः किन्तु तत्तद्ग्रन्थेष्वेव तत्कृतत्वं सुव्यक्तमेव । ऋतुसंहारनलोदयपुष्पबाणविलासादीनां यदि तत्कालिदास-कृतत्वं तदा ततः प्राचीनतया न तत्र उल्लेखः ।

कालिदासस्य कतमदन्वयं कतमञ्च जनपदमलञ्चकार तन्नाकलयामः । किन्तु तस्य चरितविषयेऽस्मद्देशे भूयिष्ठप्रचारमेकमैतिह्यमस्ति । तदत्र सर्वत्र विज्ञापनाय प्रदर्श्यते । काचित् विदुषतमा कन्या विवाहार्थं पित्रा आनीतान् पात्रभूतान् विज्ञान् वादविचारेण पराजिग्ये । एवम् आगत्यागत्य तस्याः सकाशात् विचारे पराजयं प्राप्य प्रतिनिवृत्तेषु वरेषु तदुत्तरं पराजयभयेन इतरे वरा यदा नैवागन्तुमैच्छन् तदा तत्पित्रा विचाराभावेन एव आगतमात्राय पात्राय कन्या देयेति प्रतिज्ञाते पूर्ववरानयने निष्फलप्रयत्नतया बहुधा खिन्ना जातेर्ष्या दूताः पुनर्वरानयनार्थं तत्पित्रा नोदिताः स्वावलम्बितशाखाच्छेदितया कालिदासमल्पबुद्धिमवेत्य तत्कन्याया वरत्वेन अवधार्य आनिन्युः । आनीताय च तस्मै अविचार्य तद्दोषगुणौ तत्पिता तां कन्यां प्रायच्छत् । एवं तस्य विवाहे संवृत्ते दम्पत्योः परस्परालापकाले कालिदासेन अपभ्रंशशब्दमात्राभिज्ञेन अपभ्रंशशब्दः प्रायोजि । तत् श्रुत्वा च तद्भार्य्या तमत्यन्तं तिरस्कृत्य गृहात् निष्काशयामास । एवं पत्न्या निष्काशितः कालिदासोऽतीव निर्वेदं प्राप्य अरण्यं गत्वा सरस्वतीमाराध्य तत्प्रसादात् लब्धविद्यः गृहं प्रति निववृते । आगत्य च रात्रौ गृहद्वारं रुद्धं विलोक्य तेन स्वपत्नीं प्रति "अनावृत कपाटं द्वारं देहि" इति अभिहितम् । तत् श्रुत्वा च स्वरविशेषेण तं स्वपतिमवगम्य कालिदासप्रज्ञानुयुक्तम् "अस्ति कश्चित् वाग्विशेष" इति इत्येवं पत्न्या कृते वाग्वि-शेषास्तित्वप्रश्ने तद्वाक्यं पदत्रयघटितमिति ज्ञात्वा तदन्यतमैकैकं पदमधिकृत्य तेन एकैकं काव्यं विरचितम् । तत्र तद्वाक्यस्थम् अस्तीति प्रथमं पदमधिकृत

"अस्त्युत्तरस्याम्" इत्यादि सप्तदशसर्गात्मकं कुमारसम्भवाख्यं महाकाव्यम्, कश्चित् इति द्वितीयं पदमधिकृत्य "कश्चित् कान्ताविरहगुरुणा" इत्यादिकं मेघदूताख्यं खण्डकाव्यं, वाग्विशेष इति तृतीयं पदं तृतीयादेशं वागिति वाक्पदमधिकृत्य "वागर्थाविव संपृक्तौ" इत्यादिकमूनविंशतिसर्गात्मकं रघुवंशाख्यं महाकाव्यञ्च तेन क्रमशो रचितम्। तद्रचनया च कालिदासः सर्वत्र प्रथितसुकवितया प्रख्याति-मुपलभ्य क्रमेण विक्रमादित्यस्य सभासदताम् आजगाम इति।'

तत्कृतिषु च सप्तदशसर्गात्मककुमारसम्भवनामकमिदं महाकाव्यम् अत्र च वीररस एव अङ्गी अन्ये रसा यथासम्भवमङ्गानि। कार्त्तिकेयो नायकः तारकासुरः प्रतिनायकः। एतच्च काव्यं कविना शैवाभिधमहापुराणीयधर्मसंहितान्तर्गतैकादशा-ध्यायाद्-अष्टादशाध्यायपर्यन्तप्रतिपाद्यतारकासुरवधकथामाश्रित्य प्रणीतं किन्तु तत्र पार्वतीतपस्यानन्तरं पार्वतीं प्रति प्रसन्नेन महादेवेन स्वयंवरविधानकर्त्तव्यताया उपदेशः इह तु सप्तर्षिमण्डलस्य तत्प्रार्थनार्थं हिमवन्तं प्रति प्रेषणमित्येव कविना ब्रह्मपुराणानुसारेण कल्पितमित्येव विशेषः। कविना च शैवपुराणवचनानि-अनुहरतैव प्रायेण श्लोकाः निर्ममे तदवगमनाय शैवपुराणस्य कतिचिदध्याया अत्र समुद्ध्रियन्ते अत्र च श्लोकसार्थो यस्मिन् श्लोके कविना अनुसृतः तदपि चिह्नद्वारा सूचितम्। तद्दर्शने च कालिदासस्य सर्वाङ्गीणकवित्वं सुस्पष्टमिति प्रतिभाति।

## शैवे त्रयोदशाध्याये किञ्चिदधिकृत्य।

प्रसूतिरभवत्तस्या मेनायाः कन्यका शुभा ॥ १, २२ ॥
दिशः प्रसेदुः पवनः सुखं ववौ शङ्खं निदध्मुर्गगनेचरास्तथा।
पपात भौमी कुसुमाञ्जलिस्तदा बभूव तज्जन्मदिनं सुखप्रदम् ॥ १, २३ ॥
मेना तया पूर्वनिशेवचन्द्रया स्फुरत्प्रभामण्डलया रराज च।
यथा विदूराचलभूमिरत्नया घनोत्थया रत्नशलाकया मुने ! ॥ १, २४ ॥
तां पार्वतीत्याभिजनाश्च नामतो जुहाव तद्बन्धुजनः स्वभावतः।
माता निषिद्धा तपसे यदा तु सा तथाप्युमाख्यां भवनस्त्रिमाविनी ॥ १, २६ ॥
महौषधीर्यथा हंसगणाः शरत्सु वै रात्रौ स्वभासस्तु यथा महौषधीः।
गुरूपदेशादुपदेशपङ्क्तिका तां पूर्वसंस्कारयुता ययुर्मुदा ॥ १, २९ ॥
तत्पादपाणीअभुवा श्रिया मुने ! स्थलारविन्दश्रियमिक्षुनिन्दनम् ॥ १, ३२ ॥
सनूपुरस्वाजितपादपङ्क्तौ राविस्वनो हंसगणा मतं ययुः ॥ १, ३४ ॥

निर्माय पङ्केरुहसम्भवं मुखं जानू तदीयौ क्रमवृत्तपूर्विके।
शेषाङ्गनिर्माणविधौ जडोऽभवद्विमोहितस्तन्मुखदर्शनेच्छया॥ १, ३५॥
मध्ये च तस्यास्त्रिवली रराज सा कामोत्सवार्थं नवयौवनोद्भवा॥ १, ३९॥
स्तनद्वयं वै ववृधे तथा मुने! यथा न सूत्रं किल मध्यगं भवेत्॥ १, ४०॥
एतद्विचित्रं शृणु तत्स्वरूपकं यशोऽभवत् स्वेन पुरा पुरारिणा।
क्रमेण वामार्धशरीरसंस्थितां चकार सा ते किल कथ्यते कथम्॥ १, ५०॥

एवं सर्वगुणोपेतामुमामालोक्य भूधरः।
क्रमेण योजयामास तां हराचनकर्मणि॥

हिमवानुवाच। शृणु गौरि! वचोऽस्माकं शङ्करो वर्तते मयि।
इहामुत्र फलार्थञ्च तं पूजय समाहिता॥
यदा देहं सती देवी दक्षरोषात् ससर्ज ह।
ततो विमुक्तसङ्गोऽभूत् शङ्करस्त्वपरिग्रहः॥ १, ५२॥
स क्षान्तिवासास्तपसे यतात्मा वर्तते मम।
प्रस्थे चालकनन्दायां सदा शीकरशीतले॥ १, ५३॥
ईश्वराणां सदा सेवा जायते सर्वमङ्गलम्।
तस्मात्तदर्चनासक्ता भव त्वं भवभाविनि!॥

वामदेव उवाच। पितुर्वाक्यमिदं श्रुत्वा जहास मनसा तदा।
तथेत्युक्त्वा स्वपितरं परिचर्यापराऽभवत्॥
जया च विजया तस्याः सख्यौ द्वे परिचारिके।
ताभ्यां साकं चन्द्रमुखी चन्द्रशेखरमार्चयत्॥ १,५८॥
समाधेरनुमेने तां गिरिशः परिपन्थिनीम्।
समाधिनिश्चलत्वञ्च सर्वेषां दर्शयन् मुने!॥ १, ५९॥
लोकानां धर्मशिक्षार्थं नो जग्राह तदा तु ताम्।
प्राप्योऽहं तपसा सत्यमिति लोकाय दर्शयन्॥

गिरीशमुपचचार प्रत्यहं सा सुकेशी॥ १, ६०॥
स्वजनवचनाज्ञापालनार्थेऽतिभक्त्या।
सकलभुवननाथः शङ्करश्चन्द्रमौलिः
भवतु मम हि भर्ता भावयन्तीति कामम्॥

इति श्रीशिवपुराणे उत्तरखण्डे उमोत्पत्तिर्नाम सप्तदशोऽध्यायः।

वामदेव उवाच। एतस्मिन्नन्तरे काले तारकेण दिवौकसः॥ २, १॥

आसी पराजिता आसन् ब्रह्मदर्पविघातिना ।
तदा सर्वे सुराधाक्षं ज्ञात्वा ध्वस्तविक्रमाः ।
स्वायम्भुवं ययौ धाम सत्यलोकमिति श्रुतम् ॥ २, १ ॥
दृष्ट्वा तत्र जगन्नाथं विकसत्सुमुखश्रियः ।
बभूवुः पङ्कजानीव प्रातर्दृष्ट्वा दिवाकरम् ॥ २, २ ॥
ततस्ते लोकधातारं वागीशं सर्वतोमुखम् ।
प्रणिपत्य यथान्यायमिदमाहुस्तदा मुने ! ॥ २, ३ ॥
ब्रह्मणे सृजते विश्वं स्थितौ पालयते नमः ।
रुद्ररूपाय कल्पान्ते नमस्तुभ्यं त्रिमूर्त्तये ॥ २, ४ ॥
त्वया यत् क्षिप्रममलं बीजं जलधिसञ्चये ।
सूयते प्रसवस्तस्य चराचरमिदं जगत् ॥ २, ५ ॥
दर्शयन् महिमानं त्वं तिसृभिर्मूर्त्तिभिः प्रभुः ।
उत्पत्तिस्थितिनाशानामेको भूः कारणं स्मृतम् ॥ २, ६ ॥
स्त्रीरूपो भवानेव पुमानसि जगत्पते ! ।
तस्मात् सर्वेषु सत्त्वेषु विख्यातौ पितरौ भवान् ॥ २, ७ ॥
तवाववर्षौ भगवन् ! भूतानामुदयाय च ।
प्रलयाय भवेद्राविर्नमस्ते कालरूपिणे ॥ २, ८ ॥
जगदीशस्त्वमेवासि त्वत्तो नास्त्येव ईश्वरः ।
जगदादिरनादिस्त्वं नमस्ते स्वात्मवेदिने ॥ २, ९ ॥
आत्मानमात्मना वेद सृजस्यवसि हंसि च ।
आत्मज्ञानविदो नित्यं त्वां विदुर्नेतरे जनाः ॥ २, १० ॥
नमः समुद्ररूपाय संघातकठिनाय च ।
स्थूलाय गुरवे तुभ्यं सूक्ष्माय लघवे नमः ॥ २, ११ ॥
व्यक्ताव्यक्ताय देवाय सर्वलोकेश्वराय च ।
सर्वान्तःसाक्षिणे तुभ्यं निर्जराजरदायिने ॥
त्वत्तो वेदाः समुद्भूता ऋग्यजुःसामसंज्ञकाः ।
कर्मयज्ञाः स्वर्गफलाः साङ्गोपनिषदः शुभाः ॥ २, १२ ॥
धर्मार्थकाममोक्षाणामादिभूतां सनातनीम् ।
त्वामामनन्ति प्रकृतिं पुरुषार्थविदः प्रभो ! ॥ २, १३ ॥
इन्द्रादीनाञ्च देवानां देवाय भवते नमः ।

मरीच्यादिविधातृणां विधातासि जगद्गुरो ! ।
परतोऽपि परोऽसि त्वं सर्वेन्द्रियविमोचरः ॥ २, १४ ॥
हव्यहोतृस्वरूपेण भोज्यभोक्तृस्वरूपतः ॥
सर्वेषां यज्ञभावेव भवान् स्वर्गफलप्रदः ।
वेद्यवेत्तृस्वरूपेण ध्येयध्यातृस्वरूपतः ॥ २, १५ ॥
निष्कामाणां मुमुक्षूणां मोक्षदोऽसि त्वमेव च ।
त्वमेव सर्वलोकानां स्रष्टा पालयिता भवान् ॥
नाशकाले हरोऽसि त्वं सर्वपापहरो भवान् ।
युष्मन्मुखाम्बुजं दृष्ट्वा वयं सर्वे निराकुलाः ॥
त्राहि नः करुणापाङ्गैररातिबलपीड़िताम् ।
नामित्रो वर्त्तते देव ! तव मित्रं कदाचन ॥
सर्वत्र समदर्शी त्वं तथाप्यस्मांस्तु पालय ॥ २, १७ ॥
ब्रह्मा उवाच । स्वागतं वो महाभागाः ! सर्वदैत्यविमर्दनाः ! ।
स्वर्गञ्च स्वभुजाक्रान्त्या भवन्तः पालयन्ति हि ॥ २, १८ ॥
इदानीन्तु कथं सर्वे नष्टभासोऽभवन् सुराः ! ।
तुषारच्छन्नतेजांसि ज्योतींषीव विहायसि ॥ २, १९ ॥
पुरुहूतस्य यद्वज्रमधःकृतसुरायुधम् ।
तदिदानीं महाभागाः ! दृश्यते हतयौवनम् ॥ २, २० ॥
वरुणस्य तु यः पाशो वद्धासुरबलः सदा ।
सोऽयं वै दृश्यते सर्पो मन्त्राहतबलो यथा ॥ २, २१ ॥
कुवेरस्य भुजः शून्यो गदया दृश्यते सुराः ! ॥ २, २२ ॥
यमोऽपि विलिखन् भूमौ दण्डेनाशमितत्विषा ॥ २, २३ ॥
त एते द्वादशादित्या दृश्यन्ते गततेजसः ।
भित्तिभागे गृहाणाञ्च चित्रकैर्लिखिता इव ॥ २, २४ ॥
वेगभङ्गाः कथममी सर्वे च मरुतोऽभवन् ॥ २ २५ ॥
रुद्राणां मौलयश्चैव कथं चन्द्रार्द्धवर्जिताः ॥ २, २६ ॥
अयमग्निः कथं देवा ! दृश्यते ह्यार्त्तवर्ष्मिवत् ।
सोमोऽयं श्यामवर्णोऽभूत् पीयूषपरिवर्जितः ।
ऐरावतगजो ह्येष भग्नदन्तस्तु दृश्यते ।
फलपुष्पावहीनस्तु मूलोत्पाटितद्रुर्यथा ॥

।इन्द्रमतिरुवाच। यदेतदुक्तं भवता नारद सत्यमेव हि।
सर्वभूतान्तरात्मासि कथं न ज्ञास्यसि प्रभो !
अमी शक्रादयो देवा भ्रष्टराज्याः पराजिताः।
विचरन्ति महीपृष्ठे तारकेण बलीयसा।
महासुरस्तारकाख्यस्त्वत्तः प्राप्तपराक्रमः।
सर्वलोकविनाशाय केतुराजिरिवोत्थितः॥ २, ३२॥
तदन्तःपुरवर्तिन्यो दीर्घिकाः सन्ति याः प्रभो !।
तासां पद्मोदयायैव विवस्वान् भाति केवलम्॥ २, ३३॥
शनैः शनैर्वाति वायुस्तदुद्याने च भीरुवत्।
पतने कुसुमानाञ्च पुष्पस्तेयी भविष्यति॥ २, ३५॥
ऋतवस्ते स्वकालञ्च विहायासुरभीरवः।
युगपच्च तदुद्यानं फलपुष्पैरुपासते॥ २, ३६॥
चन्द्रस्तु तं सदाकालं कलाभिः परिषेवते।
चन्द्रशेखरमूर्द्धस्थां कलामेकां विहाय च॥ २, ३४॥
समुद्रः सर्वरत्नानि तस्मै योग्यानि वै ददौ॥ २, ३७॥
ज्वलन्मणिशिखो रात्रौ वासुकिस्तं निषेवते॥ २, ३८॥
अग्निस्तु तस्य वस्त्राणि विमलानि करोति हि।
ग्रीष्मे तदङ्गे शनकैर्मेघा वर्षन्ति शीकरैः॥
यज्ञभागं स चाश्नाति विनिवार्य दिवौकसः॥ २, ३९॥
अहं तस्यान्तिके गत्वा कथयामि शुभाशुभम्।
एवमाराधितश्चापि स क्लिश्नाति जगत्त्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः॥२, ४०॥
चिच्छेद नन्दनतरून् देवस्त्रीपरिलालितान्॥२, ४१॥
मन्दाकिन्या जलं सर्वं स्ववाप्यां स्थापितं प्रभो ! ॥ २, ४४॥
कनकाचलशृङ्गाणि समुत्पाट्य महासुरः।
क्रीड़ास्थलेषु तान्येव स्थापयामास वेश्मनि॥२, ४६॥
अस्माकं सकलोपाया भग्निनस्ता महासुरे॥२, ४८॥
मेघच्छन्ना रविकरा यथा तेजस्विनो भुवि।
तदिच्छामो विभो ! स्रष्टुं सेनान्यं तस्य शान्तये।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः॥२, ५१॥

हन्तारं परसैन्यानां गोप्तारं त्रिदिवौकसाम् ।
दातारं शक्रलक्ष्म्याश्च महावीर्य्यपराक्रमम् ॥२, ५२॥
ब्रह्मोवाच । भविष्यति भवत्कामः सहध्वं सुरपुङ्गवाः ! ॥२, ५३॥
तपःफलविपाकस्तु तस्यासीदधुना महान् ।
मया तस्मै वरो दत्तो न हन्तव्यो ह्यसौ मम ।
विषवृक्षोऽपि सम्बर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥२, ५५॥
युध्यन्तमाहवे तस्य महाबलपराक्रमम् ।
समर्थः को भवेज्जेतुं विना शम्भुसुतं सुराः ! ॥ २, ५७ ॥
यज्ञाग्नौ या पुरा दग्धा उमेति परिकीर्त्तिता ।
सापि तत्राधुना देवाः वर्त्तते शिवसन्निधौ ॥
समाश्रयति गौरीशं तत्परिग्रहणेच्छया ।
ततस्तत्र प्रयत्नश्च कुरुध्वं विबुधेश्वराः ! ॥
आकाङ्क्षति तथा शम्भुरुमां च नगनन्दिनीम् ॥
वोढुं शङ्कररेतस्तु नान्या स्त्री सैव शक्यते ॥ २, ६० ॥
तयोः पुत्रो यदा भूयात्तदा वो मङ्गलं भवेत् ॥
इत्युदाहृत्य तान् देवान् गृहान्तः प्राविशत् प्रभुः ॥ २, ६२ ॥
देवाश्च कृतकृत्यास्तु नमस्कृत्य ययुर्दिवम् ।
तस्मिन् कार्य्ये विनिश्चित्य कन्दर्पं सिद्धिदायकम् ॥२, ६३॥
मघवान् तमुवाचेदं पुष्पवाणधनुर्द्धरम् ॥
इन्द्र उवाच । त्वमेव सर्वकार्य्येषु सहायो मद्दर्थके ।
रक्षार्थे सर्वलोकानां मद्वाक्यं हि करिष्यसि ॥
कामदेव उवाच । धन्योऽहं कृतकृत्योऽहं मय्यास्ते त्वदनुग्रहः ।
किं करिष्यामि देवेन्द्र ! समाज्ञापय सत्वरम् ॥३, २॥
कस्मात् वासवेन्द्र ! मुक्तिमार्गमपेक्षते ।
तं सुन्दरीकटाक्षैस्तु बध्नाम्याज्ञापयस्व मे ॥३, ३॥
कस्य शत्रोरपि हरे ! धर्मार्थौ पीडयाम्यहम् ॥३, ६॥
करिष्ये त्वां सतीं देव ! तवार्थे कलकुञ्जिकाम् ॥३, ७॥
वज्रं तव सुराधीश ! यत् कार्य्यं न करिष्यति ।
तत् करिष्यामि पुष्पास्त्रैः सर्वासुरविमोहनम् ॥३, ८॥
धैर्य्यच्युतिं करिष्येऽहं ममत्यापि तपस्विनाम् ॥३, १०॥

अन्येषाञ्चैव देवानामसुराणाञ्च या कथा

ान्द्र उवाच। ब्रवीमि तेऽनघ ! वीर्य्यं हरधैर्य्यंकरं परम् ॥ ४, १३ ॥

तत् कुरुष्वामराणाञ्च स्थितये त्रिदिवस्य च ॥ ३, २० ॥

हिमवच्छिखरं गत्वा यत्रास्ते भगवान् हरः ॥ ३, १७ ॥

उमा गिरिसुता चैव तत्र तस्या नियोजय ॥

ामदेव उवाच। इत्युक्तस्तेन कन्दर्पः स जगाम हिमालयम् ।

नियोजयितुकामस्तु उमाया चन्द्रशेखरम् ॥

तत्सहायो मलयजः पवनस्तन्वगात् मुने ! ।

तत्सखो माधवश्चैव कामोत्सवपरायणः ॥ ३, २२, २३ ॥

तस्मिन् वने संयमिनां मुनीनामूर्द्धरेतसाम् ।

समाधेः प्रतिकूलस्तु कामो विजयते मुने ! ॥ ३, २५ ॥

तदा शरीरिणां तत्र कामासक्तमभून्मनः ।

सर्वत्र विपरीतन्तु जातं कुसुमितं वनम् ।

कामो धनुषि संयोज्य पुष्पवाणं तदा मुने ! ॥ ३, ६४ ॥

पार्वतीसम्मुखे स्थाणौ मोक्तुकामो व्यवस्थितः ॥ २, ६६ ॥

हरस्तु धैर्य्यमालम्ब्य किमेतदिति विस्मयन् ।

ददर्श पृष्ठतः कामं पुष्पवाणधनुर्धरम् ॥ ३, ६७ ॥

विह्वलमन्योत्सस्याथ तृतीयनयनात् मुने ! ।

स्फुरद्दर्चिरग्निस्तु पपात मदनोपरि ॥ ३, ७१ ॥

क्रोधं संहर हे देव ! इति यावत् वदन्ति खे ।

इन्द्रादिसकला देवास्तावद्भस्मीचकार तम् ॥ ३, ७२ ॥

उपस्थितं विघ्नमिदं ज्ञात्वा च चन्द्रशेखरः ।

अन्तर्दधे स विश्वात्मा महिमानञ्च दर्शयन् ॥ ३, ७३ ॥

गतिरेषा भवेत् नूनं महादेवापराधिनाम् ।

भस्मशेषोऽभवत् कामो दक्षस्यासीत् शिरो यथा ॥

श्रीशिवपुराणे उत्तरखण्डे कन्दर्पदहनो नाम चतुर्दशोऽध्यायः ।

---

अन्तर्हिते भगवति सा शैलतनया मुने ! ।

निराशा धृतलज्जा च सखीभ्यां भवनं ययौ ॥ ३, ७५ ॥

तां दीनवदनां दृष्ट्वा गिरिर्दुहितरं मुने ! ।

उवाच मधुरं वाक्यं मामाश्वास्य च पुनः पुनः ॥

हिमवानुवाच । किमर्थं वदनं दीनं मृगशावकलोचने ! ।
रुद्रः किं कुपितो देवि ! सेवया भक्तिहीनया ॥

उमोवाच । मत्सेवा महती पुण्या शिवः शान्तमनाः सदा ।
मम कर्मविपाकेन सा सेवा विफलाऽभवत् ॥
शृणु तात ! प्रवक्ष्यामि तत्र चैको गतः पुमान् ।
पुष्पबाणधनुर्धारी रतिकया सह वै स्त्रिया ।
तस्मिंस्त्वागते तात ! मारुतो मलयाचलात् ।
वने कुसुमिताः सर्वे तिलकाशोकपादपाः ॥
कूजन्ति कोकिलाः सर्वे पञ्चमस्वररञ्जिताः ।
इतस्ततो भ्रमन्तश्च भ्रमराः पुष्पमञ्जरीः ॥
तस्मिन् शरदि कालेऽपि सर्वसम्भारसंहतः ।
बभूव कामसंसर्गाद्वसन्तो देहवानिव ॥
तदा मम नितम्बस्था काञ्ची चञ्चलतां गता ।
हरस्यापि मनो धैर्याच्चलितं मां निरीक्ष्य च ॥
तदा स भगवान् शम्भुः पृष्ठभागे ददर्श ह ।
धनुर्धरं हि पुरुषं तं ददाहाक्षिवह्निना ॥
ततश्चान्तर्दधे सोऽपि भगवान् प्रमथैः सह ।
भस्मीभूतश्च पुरुषस्तत्रैका स्त्री च पर्वते ॥

वामदेव उवाच । श्रुत्वैतद् दुहितुर्वाक्यं हिमालयगिरिर्मुने ! ।
एवं वदन्तीं वृत्तान्तं गृहीत्वा तां ययौ गृहम् ॥
सापि कन्दर्पपत्नी तु शिवमन्त्राहितं पतिम् ।
भस्मीभूतं समालोक्य विललापातिदुःखिता ॥ ४, २४ ..
ततो वह्निं समादाय सा रतिः कामवल्लभा ।
अनुगन्तुं स्वभर्तारमुद्योगमकरोत् मुने ! ॥ ४, ३२ ॥
ततो रतिं कामपत्नीं स्थितां देहविमुक्तये ।
आकाशसम्भवा वाणी प्राहेदं मधुराक्षरम् ॥ ४, ३९ ॥
प्रजापतिः स्वतनयां यदा कामितवान् पुरा ॥ ४, ४० ॥
मृगरूपधरं तत्र चिच्छेद भगवान् हरः ।
तदा तु लज्जितो भूत्वा शशाप मन्मथं तव ॥४, ४१॥

भर्त्तारं अथ मत्वा त्वं हरवीक्षणवञ्चिता ।
ततः शङ्करनेत्राग्निर्भस्मशेषं चकार तम् ।
पुनस्तव पतिर्भूयाच्छङ्कराराधनात्ततः ॥ ४, ३२ ॥
इमामन्तर्हितां वाणीं श्रुत्वा सा कामवल्लभा ॥४ , ४२ ॥
तथैव पूजयामास शङ्करं लोकशङ्करम् ।
ततः प्रासङ्गिककथां समाप्य तथैव ।
गत्वा पितृगृहं देवी विषण्णवदना सती ।
पितरं मातरं गत्वा प्राह वाक्यमिदन्तु सा ॥
सेवा मे निष्फला जाता धूर्जटेः पुरवैरिणः ।
विफलाय बभूवेदं पुनर्मे नवयौवनम् ॥
आज्ञापय महादेवपदाम्भोजार्चनां प्रति ।
अहं तपः करिष्यामि गत्वा शिखरकाननम् ॥
ब्रह्मविष्णुसुरेशाद्यैरपरिच्छेद्य ईश्वरः ।
योऽसौ कथं मया प्राप्य लभ्यते वै विना तपः ॥
तस्मादहं गमिष्यामि तपः कर्त्तुञ्च कानने ।
तपसा लभ्यते शम्भुर्योगिगम्यः परन्तपः ॥
इति स्वतनयावाक्यं श्रुत्वा तु पितरौ मुने ! ।
ऊचतुर्दुःखितौ भूत्वा बाष्पगद्गदया गिरा ॥
पितरावूचतु । शङ्करस्तु तपोगम्यो नान्यथा कथितस्त्वया ।
भक्त्या तु लभ्यते भूयो भक्तियोगपरो हि सः ॥
तस्माद्भक्तिं समास्थाय सात्त्विकीं प्रेमलक्षणाम् ।
पूजय स्वगृहे देवं चन्द्रशेखरमम्बिके ! ॥
स्त्रीणां वननिवासस्तु नोचितो मुनिभाषितः ।
कथमेकाकिनी मातः ! वनं गन्तुं त्वमिच्छसि ॥
एकन्तु दीयतेऽस्माभ्यं न गन्तव्यं वनं त्वया ।
वनेऽपि दोषो भवति योगिनां सदनं वनम् ॥
वनवासोद्भवो धर्मो वनस्थानां विधीयते ।
नोचितः स च विज्ञेयो गृहस्थाश्रमवासिनाम् ॥
स कृत्तिवासा हि मातः ! सर्वभूतान्तरस्थितः ।
सर्वदर्शी च सर्वज्ञः सर्वेश्वरपतिर्भवः ॥

आराधितो भक्तियुक्तैर्यत्र कुत्रापि शङ्करः ।
प्रकाशमेति भक्तानां तमसामिव भास्करः ॥
तस्मात्त्वं भक्तियुक्तेन पूजय स्वगृहे शिवम् ।
च ! मा गच्छ वनं घोरं सर्वविघ्नास्पदं सदा ॥

वामदेव उवाच । पितुरिति वचः श्रुत्वा सर्वशास्त्रार्थसम्मतम् ।
तदनादृत्य भक्तिज्ञा पार्वती प्रत्यभाषत ॥

पार्वत्युवाच । न धर्मो नास्ति मे तात ! गृहस्थाश्रमसम्मतः ।
गृहधर्माद्बहिर्भूता भवामि ब्रह्मचारिणी ॥
ब्रह्मचर्य्यं वनस्थानां वनवासो नियुज्यते ।
तस्माद्वनं गमिष्यामि शिवेच्छा ब्रह्मचारिणी ॥
विशेषतो महादेवो वनौकोमुनिभावितः ।
शीघ्रं प्रसादमायाति तद्भक्तानां वनौकसाम् ॥

वामदेव उवाच । इत्युक्त्वा विकसत्पद्मलोचना गिरिनन्दिनी ।
शिवस्मरणसंयोगादानन्दाश्रुप्लुताभवत् ॥
अभिवाद्य ततस्तातं स्थविरानग्रजान् गुरून् ।
मुहुर्निवार्य्यमाणापि जगाम तपसे वनम् ॥
गौरी विजयया सख्या जयया च सुनेत्रया ।
साकं सखीभ्यां सुमुखी सा गौरीशिखरं ययौ ।
चकार वसतिं यस्माद्गौरीशिखरमुच्यते ॥ ५, ७ ॥
गौरीशिखरमासाद्य सा गौरी सखीसंयुता ॥
तपश्चर्तुं समारेभे प्रोत्थे भगवती मुने ! ।
जजाप परमं मन्त्रं शैवं पञ्चार्णसंज्ञकम् ।
ध्यायन्ती मनसा देवं पञ्चवक्त्रं त्रिलोचनम् ॥
हेमन्ते जाह्नवीतोये करकाभ्यधिशीतले ।
आकण्ठमग्ना ध्यायन्ती संस्थिता चन्द्रशेखरम् ॥
शिशिरे शीतलशिलातले चैवार्द्रवाससा ।
युक्ता चन्द्रकलाशीर्षं पूजयामास पार्वती ॥ ५, १६ ॥
वसन्ते तद्भवैः पुष्पैर्निराहारा गतक्लमा ।
श्रद्धया परया युक्ता पूजयन्ती महेश्वरम् ॥
ग्रीष्मे पञ्चाग्निमाधाय मध्ये भूत्वा कृताञ्जलिः ॥ ५, २० ॥

ध्यायन्ती कामदहनं नान्यभावा मुने ! ऽभवत् ॥

वर्षायामुत्सर्कैः स्थित्वा वर्षती मध्यतस्तु सा ।

धाराभिमुखलायाभिर्नान्यभावा तदाभवत् ॥ ५, २१ ॥

शरत्काले महापूजामकरोदिन्दुशेखरे ।

षष्ठकालाशना भूत्वा तत्पादाम्बुजमानसा ॥

एवं वर्षविशेषैषा षष्ठकालकृताशना ।

चतुर्थे त्यक्तपर्णा च अपर्णाख्यामवाप सा ॥ ५, २८ ॥

पञ्चमे वायुभक्ष्यञ्च परित्यज्य समाहिता ।

एवं पञ्चमितं वर्षं सा चकार तपोभ्रमम् ॥

तपोविपाककाले तां जिज्ञासुर्भगवान् शिवः ।

ब्रह्मचर्य्यव्रतधरो विवेश तपसोऽवलम् ॥

अजिनाषाढधारी च प्रगल्भवचनो मुनिः ।

ज्वलन्निव जटाधारी ब्रह्मज्ञो ब्रह्मतेजसा ॥ ५, ३० ॥

दृष्ट्वा तमतिथिं गौरी पूजयामास सादरात् ।

भक्ष्यभोज्यै रसैश्च सशय्यासनवारिभिः ॥ ५, ३१ ॥

स ब्रह्मचारी जटिलः प्रतिगृह्य च सत्क्रियाम् ।

पश्यन्नुमामुखाम्भोजमित्युवाच सुकोमलम् ॥ ५, ३२ ॥

। उवाच । अपि क्रियार्थं सुलभं पुष्पवारि समित्कुशम् ? ।

अपि देवि ! तपोमूर्त्ति स्वशक्त्यापि प्रवर्त्तसे ? ॥ ५, ३३ ॥

एषा ते यौवनावस्था तपः कर्त्तुं न युज्यते ।

तपसे युज्यतामाहुरुत्तरं वपुषो वयः ॥

वृद्धकालोचिते शेषे जटावल्कलवाससी ।

कथं बिभर्षि सुश्रोणि ! नोचितं तव यौवने ॥ ५, ४४ ॥

किमर्थमेतद्घोरञ्च तपः कर्त्तुं त्वमर्हसि ।

किमाकाङ्क्षसि सुश्रोणि ! मया त्वयि न लक्ष्यते ॥

घोरेण तपसा देवि ! भर्त्तारं यदि वाञ्छसि ।

रमणीया तदा भर्त्रा त्वं, भवत्या न वै पतिः ॥ ५, ४५ ॥

किमाकाङ्क्षसि सुश्रोणि ! कथयस्व ममाग्रतः ।

कुतूहलेन सुश्रूषुरहं तव नगेन्द्रजे ! ॥

एषा गिरिसुता विप्र ! सती कमललोचना ।

ज्ञानं परञ्च साक्षान्मो ददाति भवसेविनो ॥
अतोऽहं ते प्रवक्ष्यामि सत्या वाञ्छितमुत्तमम् ।
यदर्थञ्च तपो घोरं करोति गिरिकन्यका ॥ २, ५२ ॥
यदा हरिश्चाग्निश्च ददाह मदनं द्विज ! ।
ततः प्रभृत्यसौ बाला वाञ्छतीन्दुकलाधरम् ॥ ५, ५२ ॥

जटिल उवाच । साधु साधु महाभागे ! शोभनं वरमिच्छसि ।
इन्द्रादिप्रमुखान् देवान् परित्यज्य दिवौकसः ॥ ५, ५३ ॥
श्मशानचारी सततं व्यालाभरणभूषितः ।
निन्दितः सर्वलोकेषु स कथं वाञ्छ्यते त्वया ॥ ५, ६६ ॥
चिताभस्मविलिप्ताङ्गं वातुलं जटिलं हरम् ॥ ५, ६९ ॥
यावेतौ तव पादौ तु लाक्षारक्तविराजितौ ॥
पूतिमांसयुतौ भस्मलिप्तौ तौ च भविष्यतः ॥ ५, ६९ ॥
नाशुद्धावाध्वरे दक्षस्तं कथं वरमिच्छसि ॥
यः कपाली करालश्च भूतवेतालसंवृतः ।
दिग्वासा विगतव्रीडः स कथं व्रियते त्वया ॥
धन्यासि कृतपुण्यासि ह्येतदर्थं तपस्तपः ।
उपहासं करिष्यन्ति श्रुत्वैतद्गृहमेधिनः ॥
दुकूलं तव सुश्रोणि ! तद्वासस्तु गजाजिनम् ।
विवाहकालसम्भूतवल्कलेनोपहास्यदम् ॥ ५, ६७ ॥
तस्योद्वाहनकाले च हाहा कर्तुं भविष्यति ।
फणिकङ्कणसंयोगं यदा ते कङ्कणं भवेत् ॥ ५, ६६ ॥
तत् परित्यज्य गिरिशमुपेन्द्रं वा शचीपतिम् ।
वरय त्वं विशालाक्षि ! वरयोग्यौ तु तौ तव ॥

वामदेव उवाच । इति तस्य वचः श्रुत्वा पार्वती ब्रह्मचारिणम् ।
नियमं सा परित्यज्य वाक्यमेतदभाषत ॥

उमोवाच । ब्राह्मण ! त्वं सर्वमेतत् सत्यं वदसि नान्यथा ।
इन्द्रादिसकला देवाः परित्यज्याः शिवेप्सुभिः ॥
आब्रह्मस्तम्बपर्यन्तं भस्मीभूतं चराचरम् ।
महाप्रलयकाले च श्मशाने चरते हरः ॥
अशेषजगतां शेषः शेषोऽहिः परिकीर्तितः ।

विषकाले धृत: कण्ठ्यां व्यालाभरणभूषित: ॥
निन्दित: सर्वलोकेषु य: सदानन्ददायक: ।
सत्यमुक्तं द्विजश्रेष्ठ ! स कथं वाञ्छ्यते मया ॥
महाप्रलयसम्भूतं चिताभस्म च दृश्यते ।
तं कथं वरमिच्छामि सत्यमुक्तं न संशय: ॥
वकारं पीयूषं विद्यादतुल्योऽसौ सनातन: ॥
तस्मादसौ वातुलस्तु मुनिभि: परिकीर्त्तित: ।
य: सर्वपापसंघातं स्मरणाद्धरति प्रभु: ॥
तं हरं पापनीकारं वरमिच्छामि भो द्विज ! ।
कथं दर्वी वरेण्यं तमावाहयति शङ्करम् ॥
न जुहाव वरेण्यं यस्तस्य स्यादावमहति: ।
कं स्वर्गं पालिता यस्मात् पुरा त्रिपुरदाहनात् ॥
तस्मात् शिव: कपालीति मुनिभि: स्तूयते सदा ।
करे रत्नं भूषितश्च विवस्वान् परिकीर्त्तित: ॥
अष्टमूर्त्तिधरत्वेन करालो परिकथ्यते ।
पृथिव्यादीनि भूतानि तेषां वेतालको गण: ।
ततोऽसौ प्रोच्यते सद्भिर्भूतवेतालसंवृत: !
पादौ यस्य तु पातालं कटिर्भूर्द्यौ शिरस्तथा ॥
दिशो वासांसि यस्यासन् दिग्वासास्तेन स स्मृत: ।
विशेषतो गता व्रीडा यस्माद् वै पद्मयोनिना ।
स्वसुताभोगसमये विगतव्रीड एव स: ॥
एवंभूतो य: सदात्मा सर्वदेवैर्न लभ्यते ।
सत्यमुक्तं द्विजश्रेष्ठ ! स कथं व्रियते मया ॥
धन्याहं कृतपुण्याहमेतदर्थे तपो मम ।
नोपहासं करिष्यन्ति श्रुत्वैतद् ब्रह्मवादिन: ॥
ामदेव उवाच । एतत् श्रुत्वा वचस्तस्य जटिलस्तु ततो मुने ! ।
पुनर्वक्तुं समारेभे चन्द्रशेखरनिन्दनम् ॥
पुनर्विवक्षुं तं दृष्ट्वा जटिलं ब्रह्मचारिणम् ।
उमा प्रोवाच विजयामितोऽसौ सखि ! नीयताम् ॥ ५, ५३ ॥
य: करोति महादेवनिन्दामात्मविनाशिनीम् ।

स पापिष्ठतरस्तस्मात् यः शृणोति स पापभाक् ॥ ५, ८३ ॥
तस्मादयं बटुर्वादी गौरवां गौरवतामिति ।
महादेवापराधश्च कृतोऽनेन महात्मयि ॥
शिवद्वेषी नरो यत्र तस्माद्धर्मः पलायते ।
धर्मारूढो महादेवस्तस्मादेनमितो नय ॥

वामदेव उवाच। इति ब्रुवाणां तां देवीं भक्तिप्रेमपरिप्लुताम् ।
दृष्ट्वा स जटिलस्तुष्टः प्रोवाच मधुरां गिरम् ॥
जानामि त्वां महाभागे ! जगन्मातरमम्बिकाम् ।
तपःफलन्तु ते सत्यं भव त्वं भवभाविनी ।
इत्युक्त्वा भगवांस्तत्र पश्यन्तीं तां कृशोदरीम् ।
स्वरूपं दर्शयामास पञ्चवक्त्रं त्रिलोचनम् ॥ ५, ८६ ॥
उवाच गौरवर्णाङ्गि ! मम त्वं भव भाविनी ।
क्रीतस्त्वयाहं दासोऽहं घोरेण तपसामुना ॥ ५, ८६ ॥
इतो गच्छ जगन्मातः ! गृहं हिमवतः शुभम् ।
उद्वाहञ्च करिष्यामि धर्मशास्त्रोक्तवर्त्मना ॥
अहञ्चेन्न करिष्यामि वेदोक्तविधिमम्बिके ! ।
तदा कथं भवेयुस्ते लोकाः श्रेष्ठानुगामिनः ॥
आद्या शक्तिर्मम त्वं हि यानलेऽन्तर्दधे पुरा ।
इदानीमावयोर्योगात् जगतां मङ्गलं भवेत् ॥
त्वमेताभ्यां पितुर्गेहे सखीभ्यां याहि सुन्दरि ! ।
स्वयंवरं पिता देवि ! करोतु तव मङ्गलम् ॥
तत्रैवाहं गमिष्यामि लोकधर्मं प्रवर्त्तयन् ।
गच्छ त्वं दर्शयिष्यामि सर्वलोकसमीपतः ॥

वामदेव उवाच। इत्युक्त्वा भगवांस्तत्र त्वन्तर्धानमुपागमत् ।
उमापि गिरिकन्या सा सखीभ्यां भवनं ययौ ॥
इदं जटिलसंवादं पार्वत्या यः पठेन्नरः ।
श्रद्धयाभक्तियुक्तश्च स प्रयाति शिवाकृतिम् ॥

इति शिवपुराणे उत्तरखण्डे भक्तिवामदेवसंवादे उमाजटिलसंवादो
नाम षोडशोऽध्यायः ॥ १६ ॥

ब्रह्मपुराणे उत्तरखण्डे शिवमाहात्म्ये। किञ्चिदुपक्रम्योक्तम्।

कोकिलासैन्यसंयुक्तो हिमाद्रिं प्रययौ स्मरः।

तत्रापश्यत शम्भोः स पुण्यमाश्रममण्डलम्॥

तत्रापश्यच्चिनेत्रस्य वीरभद्रं महाबलम्।

यथा साक्षान्महेशानं गणांश्चायुतशोऽस्य च॥

ददर्श तत्र चेशानं नासाग्रकृतलोचनम्॥३, ४७॥

देवदारुद्रुमच्छाया वेदिका-मध्यमाश्रितम्॥ ३, ४४॥

समकायं सुखासीनं समाधिस्थं महेश्वरम्॥ ३, ४५॥

तं तथाविधमालोक्य सोऽन्तर्भेदाय यत्नवान्।

षट्पदध्वनिव्याजेन विवेश मदनो मनः॥

एतस्मिन्नन्तरे देवो विकासितविलोचनः।

सस्मार नगराजस्य तनयां रक्तमानसः॥ ५, ६७॥

निवेदिता वीरकेण विवेश च गिरेः सुता॥ ३, ६०॥

ावाध्यायान्तरे। विज्ञाय सा सखीमाह किमयेष विवक्षति।

वार्य्यतामालि। विप्रोऽयं महद्दूषणभाषकः।

न केवलं पापभागी श्रोता वै स्यान्न संशयः॥

अथवा किञ्च नः कार्य्यं वादेन सह ब्राह्मणैः।

कर्णौ पिधाय यास्यामो यथार्थः स्यात्तथास्तु सः॥

इत्युक्तोत्थाय गच्छन्त्यां पिधाय श्रवणावुभौ।

स्वरूपं समुपाश्रित्य जग्राह वसनं हरः॥

ततो निरीक्ष्य तं देवं संभ्रान्ता परमेश्वरी॥

प्रणिपत्य महेशानं तुष्टाव च उमा तदा॥

वाच। मनसस्त्वं प्रभुः शम्भो! दत्तं तच्च मया तव।

वपुषः पितरावीशौ सम्मानयितुमर्हसि॥ ६, १॥

प्रासङ्गिककथां समाप्य तत्रैवोक्तम्।

ततः सप्त मुनीन् देवः चिन्तिताभ्यागतान् पुरः॥ ७, २॥

प्राहिणोदम्बिकायाश्च स्थिरपत्रार्थमीश्वरः॥

सारुन्धतीकास्ते तत्र ह्लादयन्तो हिमाचलम्॥

उद्वाहार्थं ततो देवो विश्वं सर्वं न्यमन्त्रयत्।

समागतन्तु सर्वञ्च विना दैत्यैर्दुरात्मभिः।

स्थावरं जङ्गमं यच्च विश्वं विष्णुपुरोगमम् ॥
ततश्च विधिराहेदं गन्धमादनपर्वते ।
पुरे स्थितं विवाहस्य देव ! कालः प्रवर्त्तते ॥
ततस्तस्य जटाजूटे चन्द्रखण्डं पितामहः ।
कपर्द्दशोभनं विष्णुः बबन्ध, चण्डिका ततः ।
उवाच चापि गिरिशं पुत्रं जनय शङ्कर ! ।
यो दैत्येन्द्रकुलं हत्वा मां रक्तैस्तर्पयिष्यति ॥
हरो विभूष्यते देवैर्यथा भूषयन्ति च ।
शक्रो गजाजिनं गृह्य स्वयमेव व्यवस्थितः ॥
चिताभस्म समादाय कपाले रजतप्रभे ।
मनुष्यास्थिमयीं मालां प्रेतनाथश्च चन्दनम् ॥
वह्निस्तेजोमयं दिव्यमजिनं प्रददौ स्थितः ।
एवं विभूषितः सर्वैर्भृत्यै रौद्रो बभौ भृशम् ॥
ततो हिमाद्रेः पुरुषा वीरकं प्रोचिरे वचः ।
मा भूत् कालात्ययः शीघ्रं भवस्यैतन्निवेद्यताम् ॥
ततो देवं प्रणम्याह वीरकः करसम्पुटी ।
त्वरयन्ति महेशान ! हिमाद्रेः पुरुषास्त्वमी ॥
इति श्रुत्वा वचो देवः शीघ्रमित्येव चाब्रवीत् ।
ततो बद्धाञ्जलिर्धीमान् स्थाणुं प्रोवाच केशवः ॥
शोभसेऽनेन रूपेण जगदानन्ददायिना ।
करमालम्ब्य विष्णोश्च वृषभं रुरुहे हरः ॥
ततस्तु वसवो देवाः शूलं तस्य न्यवेदयन् ।
धनदो निधिभिर्युक्तः समीपस्थस्ततोऽभवत् ॥
देवदुन्दुभिनादैश्च पुष्पसारैश्च गीतकैः
नृत्यमानाप्सरोभिश्च जयेति च महास्वनैः ॥
सव्यदक्षिणसंस्थानौ ब्रह्मविष्णू च जग्मतुः ।
यथादितिर्दितिः सा च दनुः कद्रुमुखास्ततः ॥
कोटिशश्च महादेवं महेन्द्राद्याः सुराङ्गनाः ।
अनुजग्मुर्महादेवं कोटिशोऽर्बुदशश्च हि ॥
गणाश्च पृष्ठतो जग्मुः कोटिशो बलवत्तराः ।

अथीत्यवेन देवेशो गिरिशस्थानं विवेश सः ॥
प्रभासस्वर्णकलशैर्गौरयाणां प्रवेर्युतम् ।
तस्मै ब्रह्मादयस्तत्र मुद्रले प्रार्थयत्तदा ॥

अस्मिंश्च काव्ये प्राथमिकाः सप्तसर्गा एव सर्वत्र सुप्रसिद्धाः व्याख्यातृभिश्च प्रायेण त एव सर्गा व्याख्याताः। तदुत्तरसर्गेषु तु पार्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनेन मातापित्रोरिव अनास्वाद्यतया तेषु अनादरणीयत्वेन लोकेषु प्रचाराभावः तद्व्याख्यातॄणामुपेक्षा च।

अष्टमादिसर्गोत्तरग्रन्थसद्भावस्य कुमारसम्भवसमाख्यया सिद्धिः कुमारसम्भवमुखबन्धे मया प्रतिपादिता। तथा उज्ज्वलदत्तेन वङ्कादयश्चेति ४, ६६ सूत्रे उणादिवृत्तौ "रवः प्रगल्भाहतभेरिसम्भवः" इति कुमारसम्भवनाम्नोदाहृतस्य पद्यस्य सप्तसर्गमध्येऽसम्भवात् तुल्यच्छन्दस्के चतुर्दशसर्गे सम्भवाच्च लिपिकरप्रमादवशात् मूलपुस्तके पतितत्वेन मुद्रितपुस्तकेऽदर्शनेऽपि क्षत्यभावाच्च कुमारसम्भवस्य अष्टमादिसर्गसद्भावः सुव्यक्त इति।

एषु सप्तसु सर्गेषु मध्ये प्रथमे, हिमालयवर्णनम्, दाक्षायणीशरीरत्यागेन पार्वतीजन्मग्रहणम्, तद्रूपवर्णनम्, नारदेन पार्वत्या हरकलत्रयोग्यतायाः कथने हिमालयस्यान्यवराभिलाषान्निवृत्तिः, दाक्षायणीवियोगानन्तरं शिवस्य हैमवतसानौ तपश्चर्यावर्णनं, पितुरुपदेशात् पार्वत्यास्तदाराधनवर्णनम्। द्वितीये, तारकासुरविप्रकृतदेवैः ब्रह्मसमीपे गतैर्ब्रह्मणः स्तुतिः प्रसन्नब्रह्मणा सह देवानां कथोपकथनम्, देवैः ब्रह्मसकाशे तारकासुरवधप्रार्थनम्, तत्र शिवपुत्रस्यैवोत्पन्नस्य वधः इति ब्रह्मणा उपदिष्टे तत्साधनाय इन्द्रेण कामस्य स्मरणवर्णनम्। तृतीये, कामदेवेन सह वासवस्य कथोपकथनम्, शिवध्यानभङ्गार्थं कामदेवप्रेषणम्, रतिवसन्ताभ्यां सह कामस्य शिवाश्रमे गमनं, वसन्तवर्णनं, ध्यानभङ्गाय उद्यतस्य कामस्य शिवेन भस्मीकरणवर्णनम्। चतुर्थे, रतिविलापः, वसन्तसकाशात् अनुमरणार्थं रत्या चितायाः प्रार्थनम्, मरणोद्यतायाः रत्या आकाशवाण्या पुनः कामसङ्गमस्य भाविताकथनेन समाश्वासनवर्णनम्। पञ्चमे, पार्वत्याः पित्राज्ञया सखीभ्यां सह तपस्यार्थं गौरीशिखरगमनं तत्र घोरतरतपश्चरणं तेन तुष्टेन शिवेन परीक्षार्थं ब्रह्मचारिवेशेन आगत्य पार्वतीं प्रति तपश्चरणप्रयोजनस्य प्रश्ने कृते पार्वत्या सखीमुखेन तदुत्तरस्य दाने ब्रह्मचारिणा शिवस्य अनुपादेयतायाः प्रतिपादनम्, तेन क्रुद्धायाः पार्वत्याः तमुपालभ्य स्थानान्तरगमनोद्योगः, तेन प्रसन्नेन शिवेन स्वरूपावलम्बनेन पार्वतीहस्तस्य ग्रहणं, शिवं प्रति पार्वत्या स्वदानाय पितुः प्रार्थनाया उपदेशः।

षष्ठे, शिवेन सप्तर्षीणां स्मरणम्, आगतेषु तेषु हिमवन्तं प्रति पार्वतीप्रार्थनार्थं तेषां प्रेषणम्, हिमालयसमीपे आगतैश्च तैः शिवार्थं पार्वत्याः प्रार्थनं, हिमवता मेनकानुमत्या शिवार्थं भिक्षारूपेण पार्वतीदानस्याङ्गीकारः, त्रिदिनोत्तरं विवाहस्य दिनस्थिरताकरणम्, शिवं प्रति तथाऽभिधाय सप्तर्षिमण्डलस्य स्वस्थाने गतिवर्णनम्। सप्तमे वरकन्ययोर्वैवाहिकनेपथ्यादिरचना, वरयात्रिकाणामोषधिप्रस्थगमनम्, विवाहक्रियासमाधानम्, देवानां कामं प्रति शिवस्य प्रसादप्रार्थना पार्वत्या सह शिवस्य कौतुकागारे प्रवेशः, इत्येते पदार्था दर्शिताः। अष्टमसर्गादौ तु वर्णनीयाः पदार्था उत्तरखण्डेऽग्रे दर्शयिष्यन्ते।

१९५२ }
सम्वत् }

श्रीजीवानन्द शर्म्मणः।

चन्द्रा मुखोपाध्याय,
१९६२

# कुमारसम्भवस्थधातुरूपम् ।

## प्रथमसर्गे ।

म श्लोके । अस्—विद्यमानतायाम्, अदा० प० अक० सेट् ।
अस्ति, स्तः, सन्ति, असि, स्थः, स्थ, अस्मि, स्वः, स्मः । स्यात्,
स्याताम्, स्युः । अस्तु, स्ताम्, सन्तु, एधि । आसीत्,
आस्ताम्, आसन् । लुङादौ आर्द्धधातुकमात्रेऽस्य प्रयोगो
नास्ति, भूधातुप्रयोग एवास्य रूपम् । केवलम् शतरि सन् ।
गाह्—विलोड़ने, भ्वादि, आत्म० सक० वेट् । गाहते, अगाहिष्ट,
अगाढ़ । जगाहे, गाहिष्यते, घाक्ष्यते । गाढ़ः, गाढ़िः ।
गाहितुम्-गाढुम्, गाहित्वा, गाढ्वा, गाहमानः ।
स्था-(ष्ठा)-गतिनिरोधे, भ्वा, प० अक० अनिट् । तिष्ठति,
अतिष्ठत्, अस्थात्, तस्थौ, स्थितः, स्थितिः । स्थातुम्,
स्थित्वा, तिष्ठन् ।
२ । दुह्—दोहने, अदा० उभ० द्विक० अनिट् । दोग्धि, दुग्धः,
दुहन्ति, धोक्षि, दुग्धे, अधुक्षत्, अदुग्ध, अधुक्षत, दुदोह,
दुदुहे । दुग्धः, दुग्धिः, दोग्धुम्, दुग्ध्वा, दुहन्, दुहानः ।
३ । लुप्—छेदने, तुदा० उभ० सक० अनिट् । लुम्पति-ते,
अलुपत्, अलुप्त, लुलोप, लुलुपे, लुप्तः, लुप्तिः, लुप्त्वा, लुम्प-
न्,-मानः ।
मस्ज्—सम्यग्स्नाने, तुदा० प० अक० अनिट् । मज्जति,
अमाङ्क्षीत्, ममज्ज, मग्नः, मङ्क्तिः, मङ्क्त्वा, मज्जन् ।
४ । भृ—धारणे, जुहो० उभ० सक० अनिट । बिभर्त्ति, बिभृतः,
बिभ्रति, बिभर्षि, बिभृथः, बिभृथ, बिभर्मि, बिभृवः, बिभृमः ।
बिभृयात् । बिभर्त्तु, बिभृताम्, बिभ्रतु, बिभृहि, बिभराणि ।

अबिभः। अभार्षीत्, बिभराम्-बभूव-आस-चकार, बभार, आमभावपक्षे बभ्रतुः, बभर्थ। भरिष्यति। भृतः, भृतिः, बिभ्रत्। आत्मनेपदी पक्षे तु बिभृते इत्यादि।

५। से-(-षे)-व्—उपभोगे, भ्वा० उभ० सक० सेट्, चङि न ह्रस्वः। सेवति-ते असेविष्ट। सेवितः, सेवमानः।

श्रि—सेवने, भ्वा० उभ० सक० सेट्। श्रयति, श्रयते, अशिश्रियत्-त शिश्राय, शिश्रिये। श्रितः, श्रितिः। श्रयितुम्, श्रयन्, श्रयमाणः।

विज्—भये कम्पे च, तु० आ० अक० अनिट्। विजते, अविजिष्ट, विविजे, विग्नः, वित्तिः, विजमानः।

६। दृश्—दर्शने, भ्वा० प० सक० अनिट्। पश्यति। अदर्शत्-अद्राक्षीत्। ददर्श, द्रक्ष्यति, दृष्टः, दृष्टिः, द्रष्टुम्, दृष्ट्वा, पश्यन्।

विद्—ज्ञाने अदा० प० सक० सेट्। वेद-वेत्ति, विदतुः-वित्तः, विदुःविदन्ति, वेत्थ-वेत्सि, अवेदीत्, विवेद, विदितः, वित्तिः वेदितुम्, विदित्वा, विदन्।

७। व्रज्—गतौ, भ्वा० प० सक० सेट्। व्रजति, अव्राजीत्, वव्राज। व्रजितः, व्रजन्।

८। पूर—पूर्त्तौ, चुरा० उभ० सक० सेट्। पूरयति-पूरयते, अपूपुरत्-त। पूरयाम्-बभूव-आस-चकार। पूर्णः-पूरितः। पूरय-न्-माणः।

गै—गाने, भ्वा० प० सक० अनिट्। गायति, अगासीत्, जगौ, गीतः, गीतिः, गातुम्, गीत्वा, गायन्।

इष्—वाञ्छायाम्, तु० प० सक० सेट्। इच्छति, ऐच्छत्, ऐषीत्, इयेष। एषिता-एष्टा। इष्टः, इष्टिः, एषित्वा। इष्ट्वा। एषितुम्-एष्टुम्। इच्छन्।

गम्—गतौ, भ्वा० प० सक० अनिट्। गच्छति, अगच्छत्, अगमत्, जगाम, गमिष्यति। गतः, गतिः, गन्तुम्, गत्वा, गच्छन्।

८। नी—प्रापणे, भ्वा० उभ० द्विक० अनिट्। नयति, नयते, अनैषीत्, अनेष्ट, निनाय, निन्ये, नीतः, नीतिः, नेतुम्, नयन्, नयमानः।

स्रु—स्रवणे, भ्वा० प० अक० अनिट्। स्रवति, असुस्रुवत्, सुस्राव, स्रुतिः, स्रवन्।

सू—(-षू]-प्रसवे, अदा० आ० सक० वेट्। सूते, सुवे, असूत, असविष्ट-असोष्ट, सुषुवे। सूतिः, सूत्वा, सुवानः।

भिद्—विदारणे, रुधा० उभ० सक० अनिट्। भिनत्ति अभैत्सीत्, बिभेद। भिन्नः, भित्तम् (सकलम्) भित्तिः, भिन्दन्।

रक्ष्—पालने, भ्वा० प० सक० सेट्। रक्षति, अरक्षीत्, ररक्ष, रक्षितः। रक्षन्।

१२। ली—श्लेषे, दि० आ० अक० अनिट्। लीयते, अलेष्ट-अलास्त। लिल्ये, लीनः, लीतिः। लातुम्-लेतुम्। लीयमानः।

१३। सृप्—गतौ, भ्वा० पर० सक० अनिट्। सर्पति, अस्राप्सीत्, असार्प्सीत्, असृपत्, ससर्प, सृप्तः, सृप्तिः, स्रप्तुम्-सर्प्तुम्, सर्पन्।

कृ—करणे, तना० उभ० सक० अनिट्। करोति, कुरुते, अकार्षीत्, अकृत, चकार, चक्रे, करिष्यति-ते, कृतः, कृतिः, कर्तुम्, कुर्वन्, कुर्वाणः।

५। वह्—प्रापणे, भ्वा० उभ० द्वि० अनिट् यजादि। वहति, वहते, अवाक्षीत्, अवोढ, उवाह, ऊहे, वक्ष्यति-ते, वोढा, ऊढः, ऊढिः, वोढुम्, वहन्, वहमानः।

१६। वृत्—वर्त्तने, भ्वा० आत्म० लुङि, लृटि, लृङि च, उभ अक० सेट्। वर्त्तते, अवृतत्, अवर्त्तिष्ट, ववृते, वर्त्स्यति वर्त्तिष्यते, वृत्तः, वृत्तिः, वर्त्तमानः।

१७। ईक्ष्—दर्शने, भ्वा० आत्म० अक० सेट्। ईक्षते, ऐक्षि ईक्षाम्-बभुव-आस-चक्रे, ईक्षितः, ईक्षमाणः।

१८। यम्—उपरमे, भ्वा० प० अक० अनिट्। यच्छति अयंसीत्, ययाम, येमतुः। यतः, यतिः यन्तुम्, यमित्वा यात्वा, यच्छन्।

२०। बन्ध्—बन्धने, क्र्यादि० प० सक० अनिट्। बध्नाति अबान्त्सीत्, मतान्तरे अभान्त्सीत्। बबन्ध, बद्धः, बन्धुम्, बद्धा, बध्नन्।

छिद्—छेदने,रु०उभ०सक०अनिट्। छिनत्ति, छिन्ते, अच्छिन अच्छैत्सीत्, अच्छित्त, चिच्छेद, चिच्छिदे, छिन्नः, छित्ति छेत्तुम्, छिन्दन्, छिन्दानः।

क्रुध्—कोपे, दि० प० अक० उपसर्गपूर्वकस्तु सक अनिट्। क्रुध्यति, अक्रुधत्, चुक्रोध, क्रुद्धः, क्रोद्धुम् क्रुध्यन्।

२१। युज्—युतौ, रु० उभ० सक० अनिट्। युनक्ति, युङ्क्ते युङ्क्ते, अयुजत् अयौक्षीत्,, अयुक्त, युयोज, युयुजे, युक्त युञ्जन्, युञ्जानः।

पद्—गतौ, दि० आ० सक० अनिट्। पद्यते, अपादि, पे पन्नः, पत्तिः, पद्यमानः।

२४। काश्—प्रकाशे, भ्वा० आत्म० अक० सेट्। काश अकाशिष्ट, काशाम्-बभूव-आस-चक्रे, चकाशे। काशित काशिष्य-माणः।

२५। वृध्—वर्द्धने, भ्वा० आ० वृतवत् उभ० अक० से

वृतादि। वर्द्धते, अवृधत्, अवर्द्धिष्ट, ववृधे। वर्त्स्यति, वर्द्धिष्यते, वृद्धः, वृद्धिः, वर्द्धमानः।

[पु]ष—पोषणे, दि० प० सक० अनिट्। पुष्यति, अपुष्यत्, पुपोष, पुष्टः, पुष्टिः, पोष्टुम्, पुष्यन्।

[...]६। ह्वे—आह्वाने, भ्वा० उभ० सक० अनिट्। ह्वयति-ते, अह्वत्, अह्वत, अह्वास्त, हूतः हूतिः, ह्वातुम्, हूत्वा, ह्वयन्, ह्वयमानः।

[...]स-[-षि]-ध—गतौ, भ्वा० प० सक० सेट्। सेधति, असेधीत्, सिषेध, सिद्धः, सिद्धिः, सेधित्वा, सिद्ध्वा, सेधितुम्, सेधन्।

[...]८। पू—शोधने, क्र्या० उभ० सक० सार्वधातुके ह्रस्वः सेट्। पुनाति, पुनीते, अपावीत्, अपविष्ट, पुपाव, पुपुवे। पूतः-पूनः, (नाशे-पूनः,) पावित्वा, पूत्वा। पुनन्, पुनानः।

[...]९। रम्—क्रीड़ने, भ्वा० आ० अक० अनिट्। रमते, अरंस्त, रेमे, रतः, रतिः, रन्तुम्, रमित्वा, रत्वा, रममाणः।

[वि]श्—उपवेशने, तु० प० सक० अनिट्। विशति, अविक्षत्, विवेश, वेक्ष्यति, विष्टः, विष्टिः, विशन्।

[...]२। भज्—भागे, भ्वा० उभ० सक० अनिट्। भजति-ते, अभाक्षीत्, अभक्त, बभाज, भेजे, भक्तः, भक्तिः, भक्तुम्, भजन्, भजमानः।

[...]३। गॄ—उद्गमने, तु० प० सक० सेट्। गिरति, अगारीत्, जगार, गीर्णः, गीर्णिः। गरितुम्-गरीतुम्। गिरन्।

[ह]—हरणे, भ्वा० उभ० द्विक० अनिट्। हरति-ते, अहार्षीत्, अहृत, जहार, जह्रे, हरिष्यति-ते, हृतः, हृतिः, हर्त्तुम्, हृत्वा, ह्रियमाणः।

[...]। अस—गतिदीप्त्यादौ, भ्वा० उभ० द्विक० सेट्। असति-ते आसीत्, आस, असन्।

यत्—यत्ने, भ्वा०आ० अक० सेट्। यतते, अयतिष्ट, येते, यत्तः यत्तिः, यतमानः।

३६। लभ्—प्राप्तौ, भ्वा० आ० सक० अनिट्। लभते, अलब्ध लेभे। लब्धः, लब्धिः, लब्धुम्, लब्ध्वा, लभमानः।

न-[-ण]-ह्—बन्धने, दि० उभ० सक० अनिट्। नह्यति-ते अनात्सीत्, अनद्ध, ननाह, नेहे, नद्धः, नद्धिः, नद्धुम्, नह्यन् नह्यमानः।

जन्—जनने, दि० आ० अक० सेट्। जायते, अजनि, अजनिष्ट जज्ञे, जातः, जातिः, जनितुम्, जायमानः-जन्यमानः।

३७। मा—माने, अ० प० सक० अनिट्। माति, अमासीत् ममौ मितः, मितिः, मातुम्, मित्वा, मान्।

३८। राज्—दीप्तौ, भ्वा० उभ०सक०सेट् फणादिः। राजति-ते अराजीत, अराजिष्ट, रराज, रेजतुः-रराजतुः, रेजे-रराजे राजितः, राजित्वा, राज-न्-मानः।

क्रम्—क्रमणे, भ्वा० प० सक० सेट्। क्राम्यति, क्रामति मतान्तरे क्रम्यति। अक्रमीत्, चक्राम, क्रान्तः, क्रान्तिः क्रमितुम्, क्रमित्वा, क्रान्त्वा। क्राम्यन्-क्रामन्-क्रम्यन्।

४१। जि—जये, भ्वा० प० द्विक० अनिट्। जयति, अजैषीत् जिगाय, जितः, जितिः, जेतुम्, जिष्णुः, जित्वा जयन्।

४३। भुज्—भक्षे, रु० आ० सक० अनिट्। भुङ्क्ते, अभुक्त बुभुजे। भुक्तः, भुक्तिः, भोक्तुम्, भुञ्जानः। अवने प० भुनक्ति, बुभोज।

आप्—प्राप्तौ, स्वा०प० सक० अनिट्। आप्नोति, आपत्, आप आप्तः, आप्तिः, आप्नुवन्।

४६। ग्रह्—ग्रहणे, क्र्या० उभ० सक० सेट्। गृह्णाति, गृह्णीते

अग्रहीत्, अग्रहिष्ट, जग्राह, जगृहे, गृहीतः, गृहीतिः, ग्रहीतुम्, गृहीत्वा, गृह्णन्-गृह्णानः।

१७। मुच्—मोचने, तु० उभ० सक० अनिट्। मुञ्चति-ते, अमुचत्, अमुक्त, मुमोच, मुमुचे, मुक्तः, मुक्तिः, मोक्तुम्, मुक्त्वा, मुञ्च-न्-मानः।

१०। दिश्—देशने, तु० उभ० सक० अनिट्। दिशति-ते, अदिक्षत्-त, दिदेश, दिदिशे, दिष्टः, दिष्टिः, देष्टुम्, दिश-न्-मानः।

११। अर्ह—योग्यतायाम्, भ्वा० प० अस० सेट्। अर्हति, आर्हीत्, आनर्ह, अर्हितः, अर्हन्।

१२। याच्—प्रार्थने, भ्वा० उभ० द्वि० सेट्। याचति-ते, अयाचीत्, अयाचिष्ट, ययाच, ययाचे, याचितः, याचित्वा, याच-न्-मानः-याच्यमानः।

शक्—शक्तौ, स्वा० प० अक० इरित् वेट्। शक्नोति, शक्नुतः, शक्नुवन्ति, । अशकत्, शक्तः, शक्तिः, शक्नुवन्।

लवि—अवंशने, भ्वा० आत्म० अक० सेट्। लम्बते, अलम्बिष्ट, ललम्बे, लम्बितः, लम्बमानः।

१३। सृज्—विसर्गे, तु० प० सक० अनिट्। सृजति, असा-क्षीत्, सस्रति, सृष्टः, सृष्टिः, स्रष्टुम्, सृजन्।

१४। वस्—आच्छादने, अदा० आ० सक० सेट्। वस्ते, अवसिष्ट, ववसे, वसितः, वस्तिः, वसितुम्, वसानः।

वस्—निवासे, भ्वा० प० अक० अनिट् यजादि। वसति, अवा-त्सीत्, उवास, ऊषतुः, उषितः, उष्टिः, वस्तुम्, उषित्वा, वसन्।

१५। धा—धारणे, जु० उ० सक० अनिट्। दधाति, धत्ते, अधात्, अधित, दधौ, दधे, हितः, हितिः, हित्वा, दधत्, दधानः।

स-[-ष]-द्—गतौ अवसादे च, तु० प० सक० अनिट्। सीदति, असदत्, ससाद, सेदतु, सन्नः, सत्तिः, सत्तम्, सीदन्।

५६। लिख्—लेखने, तु० प० सक० सेट्। लिखति, अलेखीत्, लिलेख, लिखितः।

न-[-ण]-द्—शब्दे, भ्वा० प० अक० सेट्। नदति, अनादीत्-अनदीत्। नदितः, नदन्।

५७। इन्ध्—द्युतौ, भ्वा० आत्म० सक० सेट्। इन्धते, ऐन्धिष्ट। इद्धः, इन्धमानः।

चर्—गमने, भ्वा० प० सक० सेट्। चरति, अचारीत्। चचार, चेरतुः। चरितः, चूर्त्तिः, चरन्।

५८। अर्च्—पूजने, भ्वा० प० सक० सेट्। अर्चति, आर्चीत्, आनर्च, अर्चितः, अर्चन्।

५९। मन्—बोधे, दि० आ० सक० अनिट्। मन्यते, अमंस्त, मेने, मतः, मतिः। मन्तुम्, मत्वा, मन्यमानः।

६०। मृज्—शोधने, अदा० प० सक० वेट्। मार्ष्टि, मृष्टः, मार्जन्ति, मृजन्ति। अमार्जीत्-अम्राक्षीत्-अमार्क्षीत्। ममार्ज, मृष्टः, मार्जितुम्। म्रष्टुम्, मार्ष्टुम्। मार्जन्-मृजन्।

द्वितीयसर्गे।

१। या—गतौ, अदा० प० सक० अनिट्। याति, अयात्, अयुः, अयान्, अयासीत्, ययौ, यातः, यातिः, यान्।

४। इ—गतौ, अदा० प० सक० अनिट्। एति, इतः, यन्ति। एषि, अगात्, इयाय, एष्यति, इतः, एतुम्, इतिः, इत्वा, यन्।

५। वप्—बीजवपने, भ्वा० उभ० सक० अनिट् यजादि। वपति-ते, अवाप्सीत्, अवप्त, उवाप, ऊपे, उप्तः, वप्तुम्, उप्त्वा, वपन्-मानः।

६। ईर्—गतौ, चु० उ० पक्षे भ्वा० प० सक० सेट्। ईरयति-ते, ईरति, ऐरिरत्-त, ऐरीत, ईरयाम्-ईराम् वा -बभूव-आस-चकार-चक्रे, ईरितः, ईरयन्, ईरयमाणः, ईरन्।

७। स्मृ—स्मरणे, भ्वा० प० सक० अनिट् घटादिर्वा। स्मरति, अस्मार्षीत, सस्मार, स्मरिष्यति, स्मृतः, स्मृतिः, स्मर्तुम्, स्मरन्।

१३। म्ना—अभ्यासे, भ्वा० प० सक० अनिट्। मनति, अम्नासीत्, मम्नौ, म्नातः, म्नातिः, म्नातुम्, मनन्।

१५। ध्यै—चिन्तायाम्, भ्वा० प० सक० अनिट्। ध्यायति, अध्यासीत्, दध्यौ, ध्यातः, ध्यातिः, ध्यातुम्, ध्यात्वा, ध्यायन्।

१६। श्रु—श्रवणे, भ्वा० प० सक० अनिट्। शृणोति, शृणुतः, शृण्वन्ति। शृणोतु, अश्रौषीत्, शुश्राव, श्रुतः, श्रुतिः, श्रोतुम्, शृण्वन्।

वच्—कथने, अदा० प०द्विक० ब्रुवादेशस्तु उभ० अनिट्। वक्ति, वक्तः, वक्तु, अवोचत्, उवाच, ऊचतुः, ऊचुः, उक्तः, उक्तिः, वक्तुम्, उक्त्वा, वचन्।

२०। लक्ष्—दर्शने, चु० उभ० सक० सेट्। लक्षयति-ते, अललक्षत्-त, लक्षयाम्-बभूव-आस-चकार-चक्रे। लक्षितः, लक्षयितुम्। लक्षयित्वा, लक्षयन्, लक्षयमाणः।

२२। शन्स्—कथने, भ्वा०प० सक० सेट्। शंसति, अशंसीत्, शशंस, शस्तः, शस्तिः, शंसितुम्। शंसित्वा-शस्त्वा। शंसन्।

१८। ब्रु—कथने, अदा० उभ० द्वि० सेट्। ब्रवीति-आह। ब्रूतः-आहतुः। ब्रुवन्ति-आहुः। अवोचत्-त। उवाच, ऊचतुः, ऊचे, वक्ष्यति-ते, उक्तः, उक्तिः, वक्तुम्, उक्त्वा, ब्रुवन्, ब्रुवाणः।

अर्थ—याचने, अदन्त० चु० आ० द्वि० सेट्। अर्थयते, आर्तियत,

अर्थयाम्-बभूवे-आसे-चक्रे । अर्थितः, अर्थयितुम्, अर्थयित्वा
अर्थयमानः । मतान्तरे,—अर्थापयते, आर्त्तथापत ।

२८। शुभ्—दीप्तौ, भ्वा० आ० अक० सेट् इदित्। शोभते
अशुभत्, अशोभिष्ट, शुशुभे, शोभितः, शो-(-शु-)-भित्वा
शोभितुम्। शोभमानः। ।।6493

३१। मृश्—मर्शने, तु० प० सक० अनिट्। मृशति, अम्रा
क्षीत्-अमार्क्षीत्-अमृक्षत्। ममर्श, म्रक्ष्यति-मर्क्ष्यति। मृष्टः
मृष्टिः। म्रष्टुम्-मर्ष्टुम्, मृष्ट्वा, मृशन्।

ज्ञा—बोधे, क्र्या० प० सक० अनिट्। जनाति, अज्ञासीत्
जज्ञौ, ज्ञातः, ज्ञातिः, ज्ञात्वा, जानन्।

३३। तन्—विस्तृतौ, तना०उभ० सक० सेट्। तनोति, तनुते
अतानीत्-अतनीत्, अतत-अतनिष्ट, ततान-तेने, ततः
ततिः, तनित्वा-तत्वा, तन्वन्-तन्वानः।

दा—दाने, जु० उभ० सक० अनिट्। ददाति, दत्तः, ददति
दत्ते, ददाते, ददते। अदात्, अदित, ददौ, ददे, दत्त
दत्तिः, दातुम्, दत्त्वा, ददत्, ददानः।

३५। वा—गमने, अदा०प० सक० अनिट्। वाति, अवासीत्
ववौ, वातः, वातिः, वातुम्, वात्वा, वान्।

४०। क्लिश्—बाधने, क्र्या० प० सक० वेट्। क्लिश्नाति
क्लिश्नीतः, क्लिश्नन्ति। अक्लेशीत्, अक्लिक्षत्, चिक्लेश
क्लिष्टः, क्लिष्टिः। क्लेशितुम्-क्लेष्टुम्। क्लेशित्वा-क्लिष्ट्वा
क्लिश्नन्।

४०। लू—छेदने, क्र्या० उभ० सक० सेट्। लुनाति-लुनीते
अलावीत्-अलविष्ट। लुलाव, लुलुवे, लूनः, लूनिः, लुनन्
लुनानः।

शम्—शान्तौ, दि०प० अक० सेट् शमादि। शाम्यति, अशमीत्

अशमत्। शशाम। शान्तः, शान्तिः। शमितुम्, शमित्वा, शान्त्वा। शम्यम्-शाम्यम्।

। वीज्—व्यजने, अदन्त० चु० उभ० सक० सेट्। वीजयति-ते, अविवीजत्-त, वीजयामास। वीजितः, वीजयन्, वीजयमानः।

। स्व-(ष्व)-प्—शयने, अदा० प० अक० अनिट्। स्वपिति, अस्वाप्सीत्, सुष्वाप, सुप्त, सुप्तिः, सुप्त्वा, स्वप्तुम्, स्वपन्।

। पट्—भ्रंशने, चु० उ० सक० सेट्। पाटयति-ते, अपीपटत्-त। पाटितः, पाटयन्, पाटयमानः।

। क्षुद्—पेषणे, रु० उभ० सक० अनिट् इरित्। क्षुणत्ति, अक्षुदत्, अक्षौत्सीत्, अक्षुत्त, चुक्षोद, चुक्षुदे, क्षुण्णः, क्षुन्दन्, क्षुन्दानः।

। यज्—देवपूजनादौ, भ्वा० उभ० सक० अनिट। यजति-ते। अयाक्षीत्-अयष्ट। इयाज, ईजे, इष्टः, इष्ट्वा, यष्टुम्, यज-न्-मानः।

। हन्—हिंसायाम् अदा०प० सक० अनिट्। हन्ति, हतः, घ्नन्ति। हन्यात्, हन्तु,हताम्, घ्नन्तु, जहि, अवधीत्, जघान, हनिष्यति, हतः, हतिः, हन्तुम्, हत्वा, घ्नन्, जघ्निवान्-जघन्वान्।

अस्—क्षेपणे, दि० प० सक० सेट्। अस्यति, आस्यत्, आस्थत्। आस,अस्तः, अस्तिः। असितुम्-अस्तुम्। असित्वा-अस्त्वा। अस्यन्।

गुप्—रक्षणे, भ्वा०प०सक० वेट्। गोपायति, अगोपायी अगोपीत्, अगौप्सीत्, जुगोप, गुप्तः, गुप्तिः। गोपायितुम्, गोपितुम्, गोप्तुम्, गोपायित्वा, गोपित्वा, गुप्त्वा, गोपायन्।

५१। सो-[-षो]-नाशे, दि० प० अक० अनिट्। स्यति, असा
असासीत्, ससौ, सितः, सितिः, सातुम्, सित्वा, स्यन्।
जि—जये, भ्वा०प० सक० अनिट्। जयति, अजैषीत्, जिगा
जितः, जितिः, जेतुम्, जित्वा, जयन्।
६३। चि—चयने, स्वा०उभ० द्वि० अनिट्। चिनोति, चिनुते
अचैषीत्, अचेष्ट, चिकाय-चिचाय, चिक्ये-चिच्ये। चित
चितः, चितिः, चेतुम्, चिन्वन्, चिन्वानः।
६४। स-(ष)-न्ज्—सङ्गे, भ्वा० प० अक० अनिट्। सजा
असाङ्क्षीत्, ससञ्ज, सक्तः, सक्तिः, सङ्क्तुम्, सङ्क्त्वा, सजन्

तृतीयसर्गे।

१। हा—त्यागे, जु० प० सक० अनिट्। जहाति-जहीत
जहितः। जहति, जहातु। जहीहि-जहिहि-जहाहि
अहासीत्, जहौ, हीनः, हानिः, हातुम्, हित्वा, जहत्।
पत्—पतने, भ्वा० प० अक० सेट्। पतति, अपप्तत्, पपा
पेततुः, पतितः, पत्तिः, पतितुम्, पतित्वा, पतन्।
२। कृष्—कर्षणे, भ्वा०प० सक० अनिट्। कर्षति। अक्राक्षी
अकार्क्षीत्-अकृक्षत्। चकर्ष। कृष्टः, कृष्टिः, क्रष्टुम्-कर्ष्टु
कृष्ट्वा, कर्षन्।
८। धू—कम्पने, स्वा०क्र्या०भ्वा० उभ० सक० वेट्। धूनो
धूनुते, धुनाति, धुनीते, धवति-ते, अधावीत्-अधविष्ट-अधो
मतान्तरे अधावीत् अधौषीत्। धूतः, धूतिः, धवितु
धोतुम्, धून्वन्-धून्वानः, धुनन्-धुनानः। धवन्, धवमा
९। श्रम्—आयासे, दिवा० प०अक० सेट् शमादि। श्राम्य
अश्रमीत्-अश्रमत्। शश्रामे, श्रान्तः, श्रान्तिः, श्रमित
श्राम्यन्।

।—भयी, जु० प० अक० अनिट्। बिभेति, अभैषीत्, बिभाय, भीतः, भीतिः, भेतुम्, बिभ्यत्।

—गतौ, भ्वा०आ० सक० अनिट्। च्यवते, अच्यविष्ट, चुच्युवे, च्युतः, च्युतिः, च्योतुम्, च्युत्वा, च्यवमानः।

—तरणे, भ्वा० प० सक० सेट्। तरति, अतारीत्, ततार, तेरतुः, तीर्णः। तरितुम्-तरीतुम्। तीर्त्वा, तरन्।

१। वृ—वरणे, स्वा० पक्षे क्र्या० उभ० सक० सेट्। वृणोति, वृणुतः, वृण्वन्ति। वृणुते। अवारीत्-अवारिष्टाम्-अवारिषु। अवरिष्ट-अवरीष्ट-अवृत। ववार, वव्रे। वृतः, वृतिः, वृण्वन्, वृण्वानः।

ाष्—कथने, भ्वा० आ० द्विक० सेट्। भाषते, अभाषिष्ट, बभाषे, भाषितः, भाषितुम्, भाषमाणः।

२। युज—युतौ, रु०उभ०सक० अनिट्। युनक्ति। अयुजत् अयौक्षीत्-अयुक्त। युयोज, युक्तः, युञ्जन्। युञ्जानः।

४। बुध्—बोधने, भ्वा० उभ० सक० अनिट्। बोधति-ते, अभौत्सीत्, बुबोध। बुद्धः, बुद्धिः, बोद्धुम्, बोधन्।

४। वश्—इच्छायाम्, अदा० प० सक० सेट्। वष्टि, उष्टः, उशन्ति। वक्षि, उष्ठः, उष्ठ। वश्मि, उश्वः उश्मः। वष्टु, उष्टाम्, उशन्तु। अवाशीत्-अवशीत्। उवाश, ऊशतुः। उशितः, उष्टिः, वशितुम्, उशित्वा, उशन्।

०। स्पृह—इच्छायाम्, अदन्त० चु० उभ० सक० सेट्। स्पृहयति-ते, अपस्पृहत्-त, स्पृहयामास, स्पृहितः, स्पृहयितुम्, स्पृहयित्वा, स्पृहय-न्-माणः-स्पृह्यमाणः।

१। स्पृश्—स्पर्शने, तु० प० सक० अनिट्। स्पृशति। अस्पृशत्-अस्पृक्षत्। अस्प्राक्षीत्-अस्पार्क्षीत्। पस्पर्श। स्पृष्टः, स्पृष्टिः। स्प्रष्टुम्-स्पर्ष्टुम्। स्पृष्ट्वा, स्पृशन्।

२४। जृम्भ्—जृम्भणे, भ्वा० आ० अक० सेट्। जृम्भते, अजृम्भिष्ट, जजृम्भे। जृम्भितः, जृम्भित्वा, जृम्भमाणः।

२८। दु—अनुतापे, भ्वा० प० अक० वेट्। दुनोति, दुनुतः दुन्वन्ति। अदावीत्-अदौषीत्। दुदाव, दूनः। दवितुम् दोतुम्। दुन्वन्।

२९। भा—दीप्तौ, अदा० प० अक० अनिट्। भाति अभासीत्। बभौ। भातः, भातिः। भातुम्। भात्वा, भान्

३२। कूज्—अव्यक्तशब्दे, भ्वा० प० अक० सेट्। कूजति, अकूजीत्। चुकूज। कूजितः। कूजितुम्। कूजन्। कूजयि-ष्यन्-ष्यमाणः।

३६। पा—पाने, भ्वा० प० सक० अनिट्। पिबति। अपात्। पपौ। पीतः। पीतिः। पातुम्, पीत्वा, पिबन्, पास्यन्।

३८। चुम्ब—चुम्बने, चु० उभ० पक्षे भ्वा० प० सक० सेट् इदित्। चुम्बयति-ते, चुम्बति। अचुचुम्बत्-त, अचुम्बीत्। चुम्बयामास। चुचुम्ब, चुम्बितः। चुम्बय-न्-मानः, चुम्बन्।

३९। स्फुर्—स्फूर्त्तौ, तु० प० अक० सेट् कुटादि। स्फुरति, अस्फुरीत्, पुस्फोर, स्फुर्त्तिः स्फुरितुम्, स्फुरन्।

४२। शास्—शासने, अदा० प० द्विक० सेट् क्त्वा वेट् जक्षादि। शास्ति, शिष्टः, शासति, अशासीत्, शशास। शिष्टः शिष्टिः। शासितुम्, शिष्ट्वा, शासत्।

४५। फुल्ल—विकाशे, भ्वा० प० अक० सेट्। फुल्लति। अफुल्लीत्। पुफुल्ल। फुल्लितः। फुल्लिः। फुल्लितुम्। फुल्लन्।

४७। स्पन्द्—ईषत् कम्पे, भ्वा० आ० अक० सेट्। स्पन्दते। अस्पन्दिष्ट। पस्पन्दे। स्पन्दितः। स्पन्दितुम्। स्पन्दमानः स्पन्दिष्यमाणः।

४८। रुध्—आवरणे, रु० उभ० द्विक० अनिट्। रुणद्धि

रुन्धः, रुन्धन्ति। अरुणत्, अरुणः। अरुधत्, अरौत्सीत्, अरुद्ध। रुरोध, रुरुधे। रुद्धः, रुद्धिः। रोद्धुम्, रुद्ध्वा। रुन्धन्, रुन्धानः।

३९। ग्लै—विषादे, भ्वा० प० अक० अनिट्। ग्लायति, अग्लासीत्, जग्लौ। ग्लानः, ग्लानिः। ग्लातुम्। ग्लात्वा, ग्लायन्।

१०। लोक्—दर्शने, भ्वा० आ० सक० सेट्। लोकते, अलोकिष्ट, लुलोके। लोकितः, लोकितुम्, लोकित्वा। लोकमानः। लोक्यमानः।

१२। धृष्—हिंसायाम्, भ्वा० प० सक० सेट्। धर्षति। अधर्षीत्, दधर्ष, दधृषतुः। धर्षितः, धृष्टिः। ण्यन्तस्य धर्षणा। धर्षितुम्। धर्षितव्यम्। धर्षित्वा-धृष्ट्वा। धर्षन्।

स्रन्स्—भ्रंशे, भ्वा० आ० अक० सेट्। स्रंसते। अस्रंसत्, अस्रंसिष्ट। स्रस्तः, स्रस्तिः। स्रंसितुम्। स्रंसमानः।

१३। धुक्ष्—सन्दीपने, भ्वा० आ० सक० सेट्। धुक्षते, अधुक्षिष्ट। दुधुक्षे। धुक्षमाणः।

१३। भर्त्स्—भर्त्सने, चु० उभ० पाणिनीयमते आत्म० सक० सेट्। भर्त्सयति-ते, अबभर्त्सत्-त। भर्त्सितः। भर्त्सयितुम्। भर्त्सय-न्-मानः, भर्त्स्यमानः।

१०। क्षिप्—प्रेरणे, तु० उभ०सक० अनिट्। क्षिपति-ते। अक्षैप्सीत्, अक्षिप्त। चिक्षेप, चिक्षिपे। क्षिप्तः, क्षिप्तिः। क्षेप्तुम्। क्षिप्त्वा, क्षिपन्-क्षिप्यमाणः। क्षेप्स्यन्-क्षेप्स्यमानः।

कॄ—विक्षेपे, तु० प० सक० सेट्। किरति। अकारीत्। चकार। कीर्णः, कीर्णिः। करितुम्-करीतुम्। करित्वा-करीत्वा। किरन्-कीर्य्यमाणः। करीष्यन्-करिष्यन्।

१२। न-[-ण]-म्—नमने, भ्वा० पर० सक० अनिट्। नमति।

अनंसीत्। ननाम, नेमतु। नतः, नतिः। नन्तुम्। नत्वा नमन्।

६३। पुष्—पोषणे, क्र्या० प० सक० सेट्। पुष्णाति, पुष्णीत पुष्णन्ति। अपोषीत्। पुपोष। पुष्टः,पुष्टिः। पुष्णन्,पोषितुम्

७४। भनज्—भञ्जने, रु० प० सक० अनिट्। भनक्ति। अभाङ्क्षीत्, बभञ्ज। भग्नः। भक्तिः, भञ्जन्।

चतुर्थसर्गः।

२। मिष्—स्पर्द्धायाम्, तु० प० सक० सेट्। मिषति। अमेषीत्। मिषितः। मिष्टिः। मेषितुम्। मेषित्वा, मिषन्।

३। जीव्—प्राणने, भ्वा० प० अक० सेट्। जीवति। अजीवीत् जीवितः, जीवितुम्, जीवित्वा, जीवन्।

४। लप्—भाषणे, भ्वा० प० द्वि० सेट्। लपति। अलापीत् अलपीत्। ललाप, लेपतुः। लपितः, लप्तिः। लपितुम् लपित्वा। लपन्, लप्यमानः। लपिष्यन्-ष्यमाणः।

६। द्रु—गतौ, भ्वा० पर० सक० अनिट्। द्रवति। अदुद्रुवत् दुद्राव। द्रुतः, द्रुतिः। द्रोतुम्, द्रुत्वा, द्रवन्।

१२। घूर्ण्—भ्रमणे, तु० उभ० अक० सेट्। घूर्णति-ते, अघूर्णीत्, अघूर्णिष्ट। जुघूर्ण, जुघूर्णे। घूर्णितः, घूर्णितुम् घूर्णित्वा, घूर्णन्-मानः। घूर्णिष्य-न्-ष्यमाणः।

स्खल्—चलने, भ्वा० प० सक० सेट् वा घटादि। स्खलति अस्खालीत्, चस्खाल, स्खलितः। स्खलितुम्। स्खलित्वा स्खलन्।

१५। रु—ध्वनौ, अ० प० अक० वेट्। रवीति-रौति। रवीतः मतान्तरे रुतः, रुवन्ति। अरावीत्-अरौषीत्। रुराव रुतः, रुतिः। रोतुम्-रवितुम्। रुत्वा। रुवन्। रविष्यन् रोष्यन्।

५। रुद्—रोदने, अदा० प० सक० सेट्। रोदिति, रुदितः, रुदन्ति। अरुदत्-अरोदीत्। रुरोद। रुदितः, रुत्तिः, रोदितुम्, रुदित्वा, रुदन्।

७०। गुह्—संवरणे, भ्वादि० उभ० सक० वेट्। गूहति-ते, अगूहीत्, अघुक्षत्। अगूहिष्ट, अगूढ़, अघुक्षत। जुगूह, जुगुहे। गूढ़ः, गूढ़िः। गूहितुम्- गोढुम्। गूढ्वा। गूहन्, गूहमानः।

८। रच—रचने, अदन्त० चु० उभ० सक० सेट्। रचयति-ते, अररचत्-त, रचितः, रचयितुम्। रचय-न्-मानः।

—स्थितौ, तु० आ० अक० अनिट्। ध्रियते, अधृत, दध्रे। धृतः, धृतिः, धर्त्तुम्, धृत्वा, ध्रियमाणः।

६। बाध्—विघाते, भ्वा० आ० सक० सेट्। बाधते, अबाधिष्ट, बबाधे,बाधितः,बाधितुम्,बाधित्वा। बाधमानः, बाध्यमानः।

६। सह्—मर्षणे, भ्वा० आ० सक० सेट्। सहते, असहिष्ट, सेहे। सोढ़ः, सोढ़िः। सहितुम्-सोढुम्। सहमानः।

८। शुष्—शोषे, दि० प० सक० अनिट्। शुष्यति, अशुषत्, शुशोष। शुष्कः, शुष्यन्।

१। लष्—इच्छायाम्, दि० पक्षे भ्वा० उभ० सक० सेट्। लष्यति-ते, लषति-ते। अलाषीत्-अलषीत्। अलषिष्ट। ललाष, लेषतुः, लेषे। लषितः। लष्टिः, लषितुम्, लषित्वा, लषन्, लष्यन्।

प्—आक्रोशे, भ्वा० पक्षे दिवा० उभ० सक० अनिट्। शपति-ते, शप्यति-ते, अशाप्सीत्, अशप्त, शशाप, शेपे, शप्तः, शप्तिः, शप्तुम्, शप्त्वा, शप-न्-मानः,-शप्यमानः।

। रक्ष्—पालने, भ्वा० प० सक० सेट्। रक्षति, अरक्षीत्, ररक्ष, रक्षितः, रक्षितुम्, रक्षित्वा, रक्षन्।

४५ । श्वस्—प्राणने, अदा० अस्रा० प० सक० सेट् । श्वसिति
श्वसितः, श्वसन्ति । अश्वसीत् । शश्वास । श्वसितः, श्वसि
श्वासितुम्, श्वसन् ।

४६ । पाल्—रक्षणे, चु० उभ० सक० सेट् । पालयति-ते, अपी
पलत्-त, पालितः । पालय-न्-मानः-पाल्यमानः ।

४६ । चि—क्षये, भ्वा० प० अक० अनिट् । क्षयति, अक्षैषीत
चिक्षाय, क्षीणः, क्षितः, क्षयन् ।

पञ्चमसर्गः ।

१ । दह्—दाहे, भ्वा० प० सक० अनिट् । दहति, अधाक्षीत
ददाह, देहतुः, दग्धः, दग्धिः । दग्धुम्, दग्ध्वा, दहन् ।

नि-[-णि]-दि—निन्दायाम्, भ्वा० प० सक० सेट् । निन्दति
अनिन्दीत्, निनिन्द, निन्दितः, निन्दितुम्, निन्दित्वा
निन्दन् ।

७ । तुष्—तोषे, दि० प० अक० अनिट् । तुष्यति, अतुषत
तुतोष, तुष्टः, तुष्टिः, तोष्टुम्, तुष्ट्वा, तुष्यन् ।

१२ । दू खेदे, दि० आ० अक० सेट् । दूयते, अदविष्ट, दुदुवे
दूनः, दूतिः, दवितुम्, दूत्वा, दूयमानः । दविष्यमाणः ।

शी—शयने, अदा० आ० अक० सेट् । शेते, शयाते, शेरते, शेषे
अशयिष्ट, शिश्ये, शयितः, शय्या, शयितुम्, शयानः ।

१३ । चेष्ट्—ईहायाम्, भ्वा० आ० अक० सेट् । चेष्टते, अचे
ष्टिष्ट, चिचेष्टे, चेष्टितः । चेष्टमानः ।

१६ । सि-[-षि]-च्—सेचने, तु० उभ० सक० अनिट् मुचादि
सिञ्चति-ते, असि(ञ्च)चत्-त, असिक्त, सिषेच-सिषिचे
सिक्तः, सिक्तिः । सेक्तुम्, सिञ्च-न्-मानः-सिच्यमानः ।

१८ । काङ्क्—वाञ्छायाम्, भ्वा०प०सक०सेट् । काङ्क्षति, अका
ङ्क्षीत्, चकाङ्क्ष, काङ्क्षितः, काङ्क्षित्वा, काङ्क्षन्, काङ्क्षमाणः

२१। तप्—दाहे, भ्वा० उभ०सक० सेट्। तपति-ते, अतापीत्-अतपीत्-अतपिष्ट। तताप, तेपे, तप्तः, तप-न्-मानः।

२२। रिच्—वियोगे, चु० उभ० पक्षे भ्वा० प० सक० सेट्। रेचयति-ते, रेचति, अरीरिचत्-त, अरेचीत्।

२३। उक्ष्—सेचने, भ्वा० प० सक० सेट्। उक्षति। औक्षीत्, उक्षाम्-बभूव-आस-चकार।

२६। क्रन्द्—क्रन्दने, भ्वा० प० अक० सेट्। क्रन्दति, अक्रन्दीत्, चक्रन्द, क्रन्दितः, क्रन्दन्-क्रन्दिष्यन्। क्रन्दय-न्-मानः, क्रन्द्यमानः।

२७। वेप्—चलने, भ्वा० आ० अक० सेट्। वेपते, अवेपिष्ट, विवेपे, वेपितः, वेपमानः।

२८। शॄ—हिंसने, क्र्या० प० सक० सेट्। शृणाति, अशारीत्, शशार, शेरतुः, शीर्णः, शृणवन्।

वद्—वाचि, भ्वा० प० द्विक० सेट् यजादि। वदति, अवादीत्, उवाद, ऊदतुः। उदितः, उक्तिः, वदितुम्, उदित्वा, वदन्, उद्यमानः।

३०। धृ—धारणे, चु० उभ० सक० सेट्०। धारयति-ते, अदीधरत्-त, धारय-न्-माणः।

१२। उज्झ्—त्यागे, तु० प० सक० सेट्। उज्झति, औज्झीत्, उज्झाञ्चकार, उज्झितः, उज्झित्वा, उज्झन्।

१३। क्षम्—सहने, दि० प० अक० सेट्। क्षाम्यति, अक्षमीत्, चक्षाम, क्षान्तः, क्षान्तिः, क्षमितुम्। क्षमित्वा-क्षान्त्वा। क्षाम्यन्।

१४। रुह्—रोहणे, भ्वा० प० सक० अनिट्। रोहति, अरुक्षत्, रुरोह। रूढः, रूढिः। रोढुम्। रूढ्वा, रोहन्। रुह्यमाणः। रोहय-न्-माणः।

१७। हस्—हासे, भ्वा० पा० अक० सेट्। हसति। अहसीत्। जहास, हसितः, हस्तिः, हसितुम्, हसित्वा, हसन्।

४०। प्रच्छ्—जिज्ञासायाम्, तु० प० द्विक० अनिट्। पृच्छति अप्राक्षीत्, पप्रच्छ, पृष्टः, पृष्टिः, प्रष्टुम्, पृच्छन्।

४३। शुच्—शोके, भ्वा० प० सक० सेट्। शोचति। अशोचीत्। शुशोच। शोचितः मतान्तरे शुक्तः, शुक्तिः शोचितुम्-शोक्तुम्। शोचित्वा-शुचित्वा-शुक्त्वा। शोचन्।

क्लृप्—कल्पने, भ्वा० आ० लुङि, लुटि, लृटि, लृङि च, उभ० अक० वेट्। कल्पते। अक्लृपत्-अकल्पिष्ट, अक्लृप्त। चक्लृपे क्लृप्तः, क्लृप्तिः। कल्पितुम्-कल्प्तुम्। कल्पित्वा-क्लृप्त्वा कल्पमानः।

४८। कृश्-तनूकरणे, दि० पर० सक० सेट्। कृश्यति। इरित् अकृशत्-अकर्शीत्। कृशः। कृष्टिः, कृश्यन्।

४८। प्लुष्—दाहे, भ्वा०, प० सक० सेट्। प्लोषति, अप्लोषीत् पुप्लोष, प्लुष्टः, प्लुष्टिः, प्लोषितुम्, प्लुष्ट्वा, प्लोषन्।

४६। वन्च्—प्रतारणे, भ्वा० प० सक० सेट्। वञ्चति, अवञ्चीत्, वञ्चितः, वञ्चन्। वञ्चयमानः। वञ्च्यमानः।

५०। विद्—भावे, दि० आ० अक० अनिट्। विद्यते अवित्त, विवेद, वित्तः, वित्तिः, वेत्तुम्, विदित्वा विद्यमानः।

५१। शक्—शक्तौ, स्वा० प० अक० इरित् वेट्। शक्नोति अशकत्-अशाक्षीत्। शशाक, शेकतुः। शक्तः,शक्तिः, शक्तुम् शक्तुवानः। शक्यन्।

५८। मील्—निमेषणे, भ्वा० प० सक० सेट्। मीलति, अमीलीत्, मीलितः, मीला, मीलित्वा, मीलितुम्, मीलन्।

६४। लघि—अतिक्रमे, भ्वा० आ० सक० सेट्। लङ्घते

अलक्षिष्ट, लक्षते लक्षितः लक्षितुम्, लक्षित्वा, लक्षमानः। लक्ष्यमानः।

७। चिन्त—चिन्तने, अदन्त० चु० उभ० सक० सेट्। चिन्त-यति-ते, अचिचिन्तत्-त, चिन्तयिषीष्ट। चिन्तितः चिन्ता, चिन्तयितुम्, चिन्तय-न्-मानः। चिन्त्यमानः।

२। मृग-अन्वेषणे, अदन्त० चु० आ० सक० सेट्। मृगयते, अममृगत, मृगितः, मृगणा, मृगयितुम्, मृगयित्वा, मृगयमाणः। मृग्यमाणः।

३। द्विष्—द्वेषे, अ० उभ० सक० अनिट्। द्वेष्टि, द्विष्टः, द्विषन्ति। द्विक्षि, द्विष्टे। अद्विक्षत्-अद्विक्षत। अद्विष्ट, दिद्वेष, दिद्विषे। द्विष्टः, द्विष्टिः, द्वेष्टुम्, द्विष्ट्वा, द्विषन्, द्विषाणः।

८। भास्—दीप्तौ, भ्वा० आ० अक० सेट्। भासते, अभासिष्ट, बभाषे, भाषितः, भासितुम्। भासित्वा, भासमानः। भास्यमानः।

६। शुध्—शोधने, दि० प० सक० अनिट्। शुध्यति, अशुधत्, शुशोध, शुद्धः, शुद्धिः, शोद्धुम्, शुद्ध्वा, शुध्यन्। शोत्स्यन्।

िप्—लेपने, तु० उभ० सक० अनिट् मुचादि। लिम्पति-ते, अलिपत्-अलिपत-अलिप्त। लिलेप, लिलिपे। लेप्तासि-से। लिप्तः। लिप्तिः। लिम्पन्, लिम्पमानः। लिप्यमानः। लेप्स्यन्, लेप्स्यमानः।

৳। द्रा—स्वप्ने, अ० प० अक० अनिट्। द्राति, अद्रासीत्, द्राणः।

९। क्री—क्रये, क्र्या० उभ० सक० अनिट्। क्रीणाति, क्रीणीते। क्रीणातु। अक्रैषीत्, अक्रेष्ट। चिक्राय, चिक्रिये। क्रीतः, क्रीतिः, क्रेतुम्, क्रीणन्, क्रीणानः। क्रीयमाणः।

षष्ठसर्गे।

४। द्युत—विद्योते, भ्वा० आ० अक० सेट्। द्योतते। द्युति उभयपदी। अद्युतत्, अद्योतिष्ट। दिद्युते। द्युतितम् द्योतितम्। द्योतितुम्। द्योतित्वा। द्योतमानः।

५। प्लु—सर्पणे उत्प्लुत्य गतौच, भ्वा०आ०सक०अनिट्। प्लवते अप्लोष्ट, पुप्लुवे, प्लुतः, प्लुतिः, प्लुत्वा, प्लोतुम्, प्लवमानः।

७। वृज-त्यागे, चु० उभ० पक्षे भ्वा० प० सक० सेट्। वर्जयति-ते, वर्जति, अववर्जत्-अवीवृजत्। अवर्जीत्, वर्जन् वर्जितः, वर्जय-न्-मानः।

८। कृत—कीर्त्तने, चु० उभ० सक० सेट्। कीर्त्तयति-ते अचिकीर्त्तत्-त,कीर्त्तयाम्-बभूव-आस-चकार-चक्रे।कीर्त्तित कीर्त्तिः, कीर्त्तयितुम्। कीर्त्तयित्वा। कीर्त्तय-न्-मानः कीर्त्त्यमानः।

५४। तर्क—वितर्के, चु० उभ० सक० सेट्। तर्कयति-ते अततर्कत्-त। तर्कितः। तर्कय-न्-माणः। तर्क्यमाणः

५८। मुर्च्छ—वृद्धौ, भ्वा० प० अक० सेट्। मूर्च्छति। अमूर्च्छीत्। मूर्त्तम्। मूर्च्छितुम्। मूर्च्छन्। मूर्च्छिष्यन्।

६५। नुद—प्रेरणे, तु० उभ० सक० अनिट्। नुदति-ते, अनौत्सीत्, अनुत्त। नुनोद। नुनुदे। नुत्तः,नुन्नः, नुत्तिः। नोत्तुम् नुत्वा, नुद-न्-मानः। नुद्यमानः।

८४। गण—संख्याने, अदन्त० चु० उभ० सक० सेट्। गणयति ते। अजीगणत्-त, अजगणत्-त। गणितः, गणयितुम् गणय-न्-मानः। गण्यमानः।

८३। ख्या—कथने, अ० उभ० सक० अनिट्। आद्येषु चतुः लकारेषु रूपं नास्ति। अख्यत्-त। चख्ये। ख्यात ख्यातिः। ख्यातुम्। ख्यात्वा।

### सप्तमसर्ग।

५। अङ्क—चिह्नीकरणे, अदन्त० चु० उभ० सक० सेट्। अङ्कयति-ते, आञ्चिकत्-त। अङ्कयाम्-बभूव-आस-चकार-चक्रे। अङ्कितः, अङ्कयितुम्, अङ्कयित्वा। अङ्कयन्। अङ्कयमानः।

६। लस्ज्—व्रीड़ायाम्, भ्वा० आ० अक० सेट्। लज्जते, अलज्जिष्ट, लग्नः। लज्जमानः। लज्जिष्यमाणः।

७। रन्ज्—रञ्जने, दि०उभ०सक० अनिट्। रज्यति-ते। अराङ्क्षीत्-अरङ्क्त। ररञ्ज, ररञ्जिथ-ररङ्क्थ। ररञ्जिव-ररजिव। ररजे-ररञ्जे। रक्तः, रक्तिः। रङ्क्तुम्, रज्यन्। रज्यमानः। रङ्क्ष्यन्-रङ्क्ष्यमाणः।

८। ष्ठिव्—निरसने, दि०प० सक० उदित् क्त्वा वेट्। ष्ठीव्यति, अष्ठेवीत्। तिष्ठेव, टिष्ठेव। ष्ठ्यूतः, ष्ठ्यूतिः। ष्ठेवितुम्, ष्ठेवित्वा-ष्ठ्यूत्वा। ष्ठीव्यन्।

९। नु—स्तुतौ, अ०प० सक० वेट्। नौति, नुतः, नुवन्ति। अनावीत्-अनौषीत्। नुनाव। नुतः, नुतिः। नवितुम्-नोतुम्। नवित्वा-नुत्वा। नव्यम्-नाव्यम्। नविष्यन्-नोष्यन्।

०। पू—शोधने, क्र्या० उभ० सक० सार्वधातुके ह्रस्वः सेट्। पुनाति, पुनीतः, पुनन्ति। पुनीते। अपुनात्-अपुनीत। अपावीत्, अपविष्ट। पुपाव-पुपुवे। पूतः, पूतिः। निष्ठायां नाग्नेऽर्थे पूनः, अन्यत्र पूतः।

—०—

# कुमारसम्भवटीका सञ्जीवनी।

## मङ्गलाचरणम्।

मातापितृभ्यां जगतो नमो वामार्द्धजानये।
सद्यो दक्षिणदृक्पातसङ्कुचद्वामदृष्टये॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम्।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः॥
शरणं करवाणि शर्मदं ते चरणं वाणि! चराचरोपजीव्यम्।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब! कृतार्थसार्थवाहम्

## प्रतिज्ञा।

इहान्वयमुखेनैव सर्वं व्याख्यायते मया।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति।

# कुमारसम्भवम् ।

## प्रथमः सर्गः ।

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥

तत्रभवान् कालिदासः कुमारसम्भवं काव्यं चिकीर्षुः ाशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इति शास्त्रात् व्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति,—

अस्तीति। [उत्तरस्यां दिशि]। अनेन अस्य देवभूमित्वं शते। [देवता आत्मा] अधिष्ठाता यस्य सः। एतेन अस्य ामाण-मेनकापरिणयपार्वतीजननादिचेतनव्यवहारयोग्यत्व-द्धिः। हिमस्य आलयः स्थानमिति [हिमालयो नाम] ालय इति प्रसिद्धः। अधिको राजा [अधिराजः] राजाहः-खिभ्यष्टच्। (१) (५, ४, ९१, पा०) न गच्छन्तीति [नगाः] ला: तेषाम् अधिराजः [नगाधिराजः अस्ति।] कथभूतः ? ापरौ] प्राच्यपश्चिमौ [तोयनिधी] समुद्रौ [वगाह्य] प्रविश्य। एव। [पृथिव्याः] भूमेः [मानम्] हस्तादिना परिच्छेदः। ो ल्युट्। तस्य [दण्डः।] यद्वा मीयतेऽनेनेति [मानम्] करणे

(१) राजाद्यन्तात् तत्पुरुषात् टच् स्यात्।

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ।

ल्युट्। स च असौ [दण्डश्च] स इव [स्थितः] आयामपरिच्छेद
कदण्ड इव स्थित इत्यर्थः। पूर्वापरसागरावगाहित्वञ्च अस
हिमालयस्य नत्वेव। उक्तञ्च ब्रह्माण्डपुराणे,—"कैलासे
हिमवांश्चैव दक्षिणे वर्षपर्वतौ। पूर्वपश्चायतावेतावर्णवान्तरप
स्थितौ।" अत्र हिमाचलस्य उभयाब्धिव्याप्तिसाम्यात् मान
दण्डत्वेन उत्प्रेक्षणात् उत्प्रेक्षालङ्कारः। "प्रकृते अप्रकृतगुण
क्रियादिसम्बन्धात् अप्रकृतत्वेन प्रकृतस्य सम्भावनम् उत्प्रेक्षा"
इत्यलङ्कारसर्वस्वकारः। अस्मिन् सर्गे प्रायेण वृत्तमुपजाति
क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च। तल्लक्षणन्तु "स्यादिन्द्रवज्रा यदि
तौ जगौ गः। उपेन्द्रवज्रा जतजास्ततो गौ। अनन्तरोदीरित
लक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" इति ॥ १ ॥

इतः परं षोड़शभिः श्लोकैः हिमाद्रिं वर्णयति,—त
नगाधिराजत्वं निर्वोढुमाह, यमिति। सर्वे च ते शैला
[सर्वशैलाः।] पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधि
करणेनेति (१) (२, १, ४९ पा० ) समासः। (यम्) हिमालयं
[वत्सं परिकल्प्य] विधाय [दोहदक्षे] दोहनसमर्थे [ मेरौ
दोग्धरि स्थिते ] सति। यस्य च भावेन भावलक्षणमिति (२
(२, ३, ३७ पा० ) सप्तमी। [पृथूपदिष्टाम्] पृथुना वैण्ये
उपदिष्टाम् ईहतया प्रदर्शिताम् [ धरित्रीम्] गोरूपधरामि

(१) पूर्वकालादयः समानाधिकरणेन अभेदान्वयिशब्दै
सह समस्यन्ते स तत्पुरुषः।

(२) यस्य क्रियया क्रियान्तरं लक्ष्यते तत्र सप्तमी स्यात्

भास्वन्ति रत्नानि महौषधीश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥

र्थः । "गौर्भूत्वा तु वसुन्धरा" इति विष्णुपुराणात्, अक-तश्चेति (१, ४, ५१ पा०) कर्मत्वम् (१)। [भास्वन्ति च रत्नश्च [भास्वन्ति] द्युतिमन्ति ओषधिविशेषणञ्च एतत्। ंसकमनपुंसकेन (१, २, ६८ पा०) इत्यादिना (२) नपुंसकैक-ः। [रत्नानि] मणीन् जातिश्रेष्ठवस्तूनि च। "रत्नं श्रेष्ठे ावपि" इति विश्वः। "जातौ जातौ यदुत्कृष्टम् तद्रत्नमिति यते" इति यादवः। [महौषधीश्च] सञ्जीवनीप्रभृतीश्च रत्वेन परिणता इति शेषः। "ताः क्षीरपरिणामिनीः" ति विष्णुपुराणात्। [दुदुहुः]। दुह्याचीत्यादिना (१, ५१ प्रा०, भा०) (३) द्विकर्मकत्वम्। अत्र प्रयोजकत्वेऽपि ानाम् पश्चभिर्हलैः कर्षति ग्रामं ग्रामणीरितिवत् तत्समर्था-णात् कर्तृत्वेन व्यपदेशः। दुहेः स्वरितेत्त्वेऽपि (४) अक-भिप्रायविवक्षायां परस्मैपदम्। अत्रार्थे प्रमाणम्,—"गौर्भूमि-

(१) अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

(२) अक्लीवेन सहोक्तौ क्लीवं शिष्यते अपरं लुप्यते।

(३) दुह्याचपच्दण्डरुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्। कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥ (?) ...

(३) दुह्याचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्व-ौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्तितमाचरितं ना। इति भाष्यकारिका। सचते संबध्नाति।

(४) स्वरितञितः कर्त्रभिप्राये क्रियाफले इति (१, ३, ७२) स्वरितः स्वरविशेषः अकारश्च इत् यस्य तस्मात् धातोः ाफले कर्तृगामिनि आत्मनेपदं स्यादिति सूचेणात्मनेपद-ावपि कर्तृगामित्वविवक्षाभावात्र तङ् यदादौ अत्र सत्वा-रितेत इत्युपलक्ष्य पाठात् दुहेः स्वरितेत्त्वम्।

अनन्तरत्नप्रभवस्य यस्य
हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥

रचलाः सर्वे कर्त्तारोऽत्र पयांसि च। ओषध्यश्चैव भास्व
रत्नानि विविधानि च। वत्सश्च हिमवानासीद्दोग्धा मेरुर्म
गिरिः ॥" इति। एतेन वत्सस्य मातुः प्रेमास्पदत्वात् अस्य सा
ग्राहित्वं गम्यते। तथा च अस्य नगस्य रत्नविशेषभोक्तृत्वा
नगाधिराजत्वं युक्तमिति भावः। अत्र हिमवद्वर्णनस्य प्रकृ
त्वात् तद्गतौषधिरत्नानां द्वयानामपि प्रकृतत्वात् तेषां दोह
क्रियारूपसमानधर्मसम्बन्धात् औपम्यस्य गम्यत्वात् केवलप्राक
णिकविषयः तुल्ययोगिता नामालङ्कारः। तदुक्तं "प्रस्तुता
तथान्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा म
तुल्ययोगिता ॥" न चात्र रूपकपरिणामाद्यलङ्कारशङ्का कार्य
तेषाम् आरोपहेतुत्वात् हिमहेमाचलादिषु वत्सत्वदोग्धृत्व
दीनाम् आगमससिद्धत्वेन अनारोप्यमाणत्वादिति ॥ २ ॥

ननु हिमदोषदूषितस्य तस्य अत्यन्तमनभिगम्यत्वाच्छि
इव सर्वमपि सौभाग्यं विफलम् ? इत्याशङ्क्याह,—

अनन्तेति। प्रभवन्ति अस्मादिति प्रभवः कारणम्। [अ
न्तानाम्] अपरिमितानाम् [रत्नानाम्] श्रेष्ठवस्तूनाम् [प्र
वस्य यस्य] हिमाद्रेः [हिमम्] कर्त्तृ, सुभगस्य भावः सौभ
ग्यम्। हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेति (७,३,१९ पा०) उभयप
वृद्धिः। तद्विलुम्पतीति [सौभाग्यविलोपि] सौन्दर्यविघात
[न जातम्] न अभूत्। तथाहि [एको दोषः गुणसं

यश्चाप्सरोविभ्रममण्डनानां
सम्पादयित्रीं शिखरैर्बिभर्त्ति ।
वलाहकच्छेदविभक्तरागाम्
अकालसन्ध्यामिव धातुमत्ताम् ॥ ४ ॥

ति इन्दोः किरणेषु अङ्क इव निमज्जति ] अन्तर्लीयते इत्यर्थः । हि स्वल्पो दोषोऽमितगुणाभिभावकः, किन्तु कश्चित् इन्दु-लङ्कादिवत् गुणैः अभिभूयते अन्यथा सर्वरम्यवस्तुहानि-सङ्गात् इति भावः। अत्र उपमानुप्राणितोऽर्थान्तरन्यासः ङ्कारः। तल्लक्षणन्तु,—"ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य कञ्चन। तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः॥" इति ण्डी ॥ ३ ॥

यश्चेति। किञ्चेति चकारार्थः। [यः] हिमाद्रिः [अप्स-सां विभ्रममण्डनानि ] विलासालङ्करणानि। अथवा भ्रमो विपरीतन्यासः "विभ्रमस्त्वरयाऽकाले भूषास्थान-पर्य्ययः" इति दशरूपकात्। तेन मण्डनानि तेषाम् सम्पादयित्रीम्।] एतद्धातुरागदर्शिन्योऽप्सरसः सन्ध्याभ्रमेण साधनाय त्वरयन्तीति भावः। तथात्वे भ्रान्तिमदलङ्कारो गम्यते। कर्त्तृकर्मणोः कृतीति (२,३, ६५ पा०) (१) कर्मणि ष्ठी। वारीणां वाहकाः [वलाहकाः] पृषोदरादित्वात् (२) साधुः। तेषां [छेदेषु] खण्डेषु [ विभक्तः ] सङ्क्रमितो [ रागः ] या ताम्। एतेनाद्रेरभ्रङ्कषत्वं गम्यते। इदं विशेषण-यं सन्ध्यायामपि योज्यम्। [धातवः] सिन्दूरगैरिकादयो-

(१) कृदन्तयोगे अनुक्ते कर्त्तरि कर्मणि च षष्ठी स्यात्।
(२) पृषोदरादीनि यथोपदिष्टम्। [६, ३, १०९, पा०]।

आमेखलं सञ्चरतां घनानां
छायामधः सानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते
शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥

ऽस्य सन्तीति [ धातुमान् ] नित्ययोगे (१) मतुप् तस्य भाव [धातुमत्ता] ताम् । धातुयोगित्वमिति सम्बन्धोऽपि वाच्यार्थः समासकृत्तद्धितेषु सम्बन्धाभिधानम् भावप्रत्ययेनेति ( २ ) वचनात् । लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः । [ अकाल सन्ध्यामिव ] अनियतकालप्राप्तसन्ध्यामिव [ शिखरैर्बिभर्त्ति ] धत्ते । अत्र सन्ध्याशब्दस्य जातिवाचित्वात् जात्युत्प्रेक्षा ॥४॥

आमेखलमिति । [ सिद्धाः ] अणिमादिसिद्धाः देवयोनि विशेषाश्च "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः । आ मेखलाभ्यः [ आमेखलम् ] नितम्बपर्य्यन्तम् । "मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः" इति विश्वः । आङ् मर्य्यादाभिविध्योः (१, १, १३ पा०) इत्यव्ययीभावः (३) [सञ्चरतां घनानाम्] मेघानां [ अधःसानूनि ] मेघमण्डलात् अधस्तटानि [ गताम् ] प्राप्ताम् । द्वितीयाश्रितातीतपतित गतात्यस्तप्राप्तापन्नैरिति (२, १, २४पा० समासः (४) [छायाम्]

(१) भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्ति विवक्षायां भवन्ति मतुवादयः । इति भाष्यकारिकयेति शेषः ।

( २ ) कृत्तद्धितसमासोत्तरभावप्रत्ययेन सम्बन्धस्याभिधान मिति वार्त्तिकार्थः ।

(३) मर्य्यादा सीमा अभिविधिर्व्याप्तिः एतयोरर्थयोर्वर्त्तमानं आङ् पञ्चम्यन्तेन सह वा समस्यते सोऽव्ययीभावः ।

(४) द्वितीयान्तं श्रितादिभिः सह वा समस्यते स तत्पुरुषः

पदं तुषारस्रुतिधौतरक्तं
यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विदन्ति मार्गं नखरन्ध्रमुक्तैः
मुक्ताफलैः केशरिणां किराताः ॥ ६ ॥

न्यस्ताक्षरा धातुरसेन यत्र
भूर्जत्वचः कुञ्जरविन्दुशोणाः ।

ातपम् । "छाया सूर्य्यप्रियाकान्तिःप्रतिविम्वमनातपम्"
मरः । [निषेव्य वृष्टिभिरुद्वेजिताः] क्लेशिताः सन्तः ।
द्वेगस्तिमिते क्लेशे भये मन्थरगामिनि" इति शब्दार्णवः ।
स्य] हिमाद्रेः [आतपवन्ति] सातपानि [शृङ्गाणि आश्र-
ते] आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्य औन्नत्य-
ति भावः ॥ ५ ॥

पदमिति। [यस्मिन्] अद्रौ [किराताः] [तुषारस्रुतिभिः]
मनिष्यन्दैः [धौतम्] क्षालितम् [रक्तम्] शोणितं यस्य
; तथोक्तम्। अतो दुर्ग्रहमिति भावः। हताः द्विपाः
ाः यैः तेषाम्। [हतद्विपानां केशरिणाम्] सिंहानाम्
दम्] पादप्रक्षेपस्थानम् [अदृष्ट्वापि नखरन्ध्रैः] नखद्रोणिभिः
ैः मुक्ताफलैर्मार्गम् विदन्ति] जानन्ति। अत्र व्याधाः सिंह-
तिनो गजेन्द्राश्च मुक्ताकरा इति भावः। "करीन्द्रजीमूत-
ाहमत्स्याहिशङ्खयुद्भववेणुजानि। मुक्ताफलानि प्रथि-
नि लोके तेषां तु शुक्त्युद्भवमेव भूरि॥" ॥ ६ ॥

न्यस्तेति। [यत्र] हिमाद्रौ [धातुरसेन] सिन्दूरादिद्रवेण।
ृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः।
स्ताक्षराः] लिखितवर्णाः अत एव [कुञ्जरस्य] ये [विन्दवः]

व्रजन्ति विद्याधरसुन्दरीणाम् ।
अनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥

यः पूरयन् कीचकरन्ध्रभागान्
दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां
तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥

कायि वयोविशेषभाविनः पद्मकाख्याः "पद्मकं विन्दुजालकम्" इत्यमरः । ते इव शोणाः] रक्तवर्णाः लिखितभागेषु इति शेषः । [भूर्जत्वचः] भूर्जपत्त्रवल्कलानि । '... भुर्जो मृदुत्वक् चर्मिका अपि" इति या... [विद्याधरसुन्दरीणाम्] लिख्यन्ते येषु ते [लेखाः] प...का: [अनङ्गलेखाः] तेषाम् [ क्रियया ] कामव्यञ्जकलेखकरणेन इत्यर्थः [उपयोगम्] उपकारम् [ व्रजन्ति ।] दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥७॥

य इति [यः] हिमाद्रिः [दरी] गुहा सैव [मुखम्] तस्मा[त्] [उत्थेन] उत्पन्नेन । आतश्चोपसर्गे (३, १, १३६ पा॰ ) इति कप्रत्ययः । (१) [समीरणेन] वायुना [ कीचकाः ] वेणुविशेषाः । "वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः" इत्यमरः । तेषाम् [रन्ध्रभागान्] छिद्रप्रदेशान् [पूरयन्] धमयन् वांशिकोऽपि वंशरन्ध्राणि मुखमारुतेन पूरयति" इति प्रसिद्धिः । [उद्गास्यताम्] देवयोनित्वात् उच्चैर्गान्धारग्रामे गानं करिष्यताम् । उक्तञ्च नारदेन,—'षड्जमध्यमनामा...

---

(१) उपसर्गे उपपदे आदन्तात् धातोः कः स्यात् ।

कपोलकण्डूः करिभिर्विनेतुं
विघट्टितानां सरलद्रुमाणाम्।
यत्र स्नुतक्षीरतया प्रसूतः
सानूनि गन्धः सुरभीकरोति ॥ ९ ॥
वनेचराणां वनितासखानां

ामौ गायन्ति मानवाः। न तु गान्धारनामानं, स लभ्यो :वयोनिभिः ॥' इति। [किन्नराणाम्] देवगायकानाम [तानदायित्वम्।] तानो नाम स्वरान्तरप्रवर्त्तको रागस्थितिाद्व्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरवेशेष:। 'तानस्त्वंशस्वरो मतः' इत्यभिनवगुप्तः "गाता यं यं ़्वरं गच्छेत् तं तं वंशेन तानयेत्" इति भरतः। तत्प्रदानीलत्वं [तानप्रदायित्वम्] वांशिकत्वम् [उपगन्तुम् इच्छ‌ीव] इत्युत्प्रेक्षा सा च दरीमुखोत्थेन इत्येकदेशविवर्त्तिरूपकोज्जीविता, मुखसाध्यत्वात् तानप्रदायित्वस्य। यत्र प्रवयवरूपणात् अवयविरूपणं गम्यते, तत् एकदेशविवर्त्तिरूपकम्। गम्यते च अत्र अवयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्राविति अलं बहुना ॥८॥

कपोलेति। [यत्र] हिमाद्रौ [करिभिः] गजैः [कपोलकण्डूः] गण्डस्थलकण्डूः [विनेतुम्] अपनेतुम् [विघट्टितानाम्] घर्षितानाम् [सरलद्रुमाणाम्] सम्बन्धिन्याः [स्नुतानि] करिकपोलघर्षणात् चरितानि [क्षीराणि] येषां तेषां भावस्तत्ता ़्या हेतुना [प्रसूतः] उत्पन्नः [गन्धः सानूनि सुरभीकरोति।] तेन अत्र गजाकरत्वं गम्यते। तथाच गजायुर्वेदे "हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः" इति ॥९॥

दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्याम्
अतैलपूराः सुरतप्रदीपाः॥ १२॥
उद्वेजयत्यङ्गुलिपार्ष्णिभागान्
मार्गे शिलीभूतहिमेऽपि यत्र।

वनेचराणामिति। [यत्र] हिमाद्रौ [रजन्यां] [दर्यः] कन्दरा एव [गृहाः] तेषाम् [उत्सङ्गेषु] अभ्यन्तरेषु [निषक्ताः] संक्रान्ताः [भासः] यासां ताः [ओषधयः] तृणज्योतींषि "अग्नावोषधिषु च तेजो निधाय रविरस्तं याति" इत्यागमः वनितानां सखायः [वनितासखाः] राजाहः सखिभ्यष्टच (५, ४, ९१ पा०) तेषां रममाणानामित्यर्थः। वने चरन्तीति [वनेचराः] किराताः। चरेष्टः (३, २, १६ पा०) (१) इति टप्रत्ययः तत्पुरुषे कृतिबहुलं (६, ३, १४ पा०) इत्यलुक् (२)तेषां[वनेचराणाम् अतैलपूराः] अनपेक्षिततैलसेका इत्यर्थः। [सुरते] सुरतकर्मणि [प्रदीपाः भवन्ति।] अत्र ओषधीषु आरोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतोपयोगित्वात् परिणामालङ्कारः। तदुक्तम् "आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः" इति। तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्य्योत्पत्तिलक्षणा विभावना च इत्युभयोः संसृष्टिः॥१०॥

उद्वेजयतीति। [यत्र] हिमाद्रौ [शिलीभूतम्] घनीभूतं [हिमम्] यत्र तस्मिन् अतएव [अङ्गुलीनां पार्ष्णीनाञ्च भागान्] प्रदेशान् [उद्वेजयति] अतिशैत्यात् क्लेशयत्यपि [मार्गे] ओष-

(१) अधिकरणे उपपदे चरेष्टः स्यात्।

(२) कृदन्ते शब्दे परे तत्पुरुषसमासे सप्तम्या बहुलमलुक् स्यात्।

न दुर्वहश्रोणिपयोधरार्त्ताः
भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥
दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसां सतीव ॥ १२ ॥

श्च पयोधराश्च श्रोणिपयोधरम् । [दुर्वहेण] दुर्धरेण [श्रोणि-
योधरेण आर्त्ताः ] पीड़िताः आङ् पूर्वादृच्छतेः क्तः । उपसर्गा-
ति धाताविति ( ६, १, ९१ पा० ) (१) वृद्धिः । अश्वानां
खानीव मुखानि यासां ताः [अश्वमुख्यः] किन्नरस्त्रियः ।
हुसुखवत्समासः । "स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः"
अमरः । [मन्दां] मन्थरां [गतिं न भिन्दन्ति] न त्यजन्ती-
र्थः । पादपीड़ाकरेऽपि अतिभारभङ्गुरशरीरतया न शीघ्रं
तुं शक्यते इति भावः ॥११॥

दिवाकरादिति । [यः] हिमाद्रिः [दिवा] दिवसे [भीतं]
याविष्टमिव । उलूकमिवेति च ध्वनिः । [गुहासु लीन-
धकारं] ध्वान्तं दिवा दिनं करोतीति दिवाकरस्तस्मात्
वाकरात् । ] दिवाविभानिशाप्रभाभास्करेत्यादिना ( २ )
, २, २१ पा०) टप्रत्ययः । भीत्रार्थानां भयहेतुः ( १,४,२५
० ) इत्यपादानत्वात् (३) पञ्चमी । [रक्षति] त्रायते । ननु

(१) उपसर्गवर्णात् ऋकारादौ धातौ परे वृद्धिरेकादेशः
ात् ।
(२) दिवादिषूपपदेषु कृञष्टः स्यात् ।
(३) भयार्थानां त्राणार्थानाञ्च प्रयोगे भयहेतुरपादानसंज्ञः
ात् ।

लाङ्गूलविक्षेपविसर्पिशोभै-
रितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं
कुर्वन्ति बालव्यजनैश्चमर्य्यः ॥ १३ ॥
यत्रांशुकाक्षेपविलज्जितानां
यदृच्छया किम्पुरुषाङ्गनानाम् ।

क्षुद्रसंरक्षणमनर्हमित्याशङ्क्याह,—क्षुद्र इति । [उच्चैःशिरसां उन्नतानां [शरणं] [प्रपन्ने] शरणागते [क्षुद्रे] नीचेऽपि [सति सज्जने [इव] नूनं [ममत्वं] मम अयमित्यभिमानः अस्तीति शेषः । ममशब्दात् त्वप्रत्ययः । अर्थान्तरन्यासोऽलङ्कारः ॥१२॥

लाङ्गूलेति । [चमर्य्यः] मृगीविशेषाः [इतस्ततः] [लाङ्गूलानि] बालधयः । पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिः" इत्यमरः । तेषां [विक्षेपैः] विधूननैः [विसर्पिण्यः] विसृमराः [शोभाः] कान्तयो येषां तैः [चन्द्रमरीचिभिः] इव [गौरैः] शुभ्रैः । "गौरः करीषे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च" इति यादवः । उपमानानि सामान्यवचनैः (२,१,५५पा॰) इति (१) समासः । [बालव्यजनैः] चामरैः [यस्य] हिमाद्रेः [गिरिराजशब्दम्] गिरिराज इति नाम [अर्थयुक्तम्] अभिधेयवत्त्वं [कुर्वन्ति ।] राजानो हि छत्रचामरादिचिह्निता इति भावः ॥ १३ ॥

यत्रेति । [यत्र] हिमाद्रौ [अंशुकाक्षेपेण] वस्त्रापहरणेन [विलज्जितानां किम्पुरुषाङ्गनानाम्] किन्नरस्त्रीणाम् [यदृ

(१) उपमानवाचकपदानि सादृश्यवाचकपदैः सह य समस्यन्ते स तत्पुरुषः ।

दरीगृहद्वारविलम्बिबिम्बा:
तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥

भागीरथीनिर्झरशीकराणां
वोढ़ा मुहुः कम्पितदेवदारुः।
यद्वायुरन्विष्टमृगैः किरातै:
आसेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥

या] देवगत्या [दरीगृहद्वारेषु] [विलम्बिबिम्बाः] लम्बमान-
डलाः [जलदास्तिरस्करिण्यः] जवनिकाः [भवन्ति।]
तिसीरा जवनिका स्यात्तिरस्करिणी च सा" इत्यमरः।
सोऽन्यतरस्यामिति (८, ३, ४२ पा०) सत्वम् (१)। अत्र
देषु आरोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात्
णामालङ्कारः ॥ १४ ॥

भागीरथीति। [भागीरथीनिर्झरशीकराणाम्] गङ्गाप्रवाह-
:कणानाम्। कर्मणि षष्ठी। [वोढ़ा] प्रापकः। वहे-
। [मुहुः] पुनः पुनः, सद्यो वा। "पौनःपुन्ये भृशार्थे च
वा स्यान्मुहुः पदम्" इति वैजयन्ती। [कम्पिताः देव-
वः] येन स तथोक्तः। [भिन्नानि] विश्लेषितानि [शिख-
नां बर्हाणि] गतिलाघवार्थं किरातकटिबद्धानि येन स
क्तः। क्रमात् विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि।
] हिमाद्रेः [वायुः] [अन्विष्टमृगैः] मार्गितमृगैः आर्त्तैः
भावः। "अन्विष्टं मार्गितम् मृगितम्" इत्यमरः।
रातैः आसेव्यते] ॥१५॥

(१) तिरसः सो वा स्यात् कखपफेषु परेषु।

सप्तर्षिहस्तावचितावशेषा-
ण्यधो विवस्वान् परिवर्त्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि
प्रबोधयत्यूर्द्ध्वमुखैर्मयूखैः ॥ १६ ॥
यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमञ्च ।

सप्तर्षीति । सप्त च ते ऋषयश्च [सप्तर्षयः ।] "दिक्सङ्ख
संज्ञायाम् (१) (२, १, ५० पा० ) इति समासः । तेषाम् [ह
अवचितेभ्यः] लूनेभ्यः अवशेषाणि अवशिष्टानि । "शेषोऽप्रध
सन्तापे त्रिष्वन्यत्वोपयुज्यते" इति केशवः । कर्मणि घ
प्रत्ययः । अनेन पद्मानाम् साफल्यं सूचितम् । [ यस
हिमाद्रेः । रोहन्तीति रुहाणि । इगुपध-ज्ञा-प्री-किरः
( ३, १, १३५ पा० ) इति कप्रत्ययः । [ अग्रे] उपरि या
[सरांसि] तेषु [रुहाणि पद्मानि] [अधः परिवर्त्तमानः] भ्र
विवस्वान्] सूर्य्यः [ऊर्द्ध्वमुखैः मयूखैः प्रबोधयति ] विकासय
न कदाचित् अधोमुखैः अतिमार्त्तण्डमण्डलत्वात् अग्रभूमेरि
भावः । सप्तर्षिमण्डलं ध्रुवादपि ऊर्द्ध्वमिति ज्योतिषिक
अतः तेषाम् अग्रसरोरुहभागित्वं युक्तम् ॥ १६ ॥

यज्ञाङ्गेति । [ यस्य ] हिमाद्रेः [ यज्ञाङ्गानाम्] यज्ञसा
नानां सोमलतादीनां [योनिः] प्रभवः तस्य भावः तत्त्व
"यज्ञाङ्गार्थं मया सृष्टो हिमवानचलेश्वरः" इति विष्णुपुराणा

(१) दिग्वाचकः संख्यावाचकश्च संज्ञायामेव समाना
करणेन सह वा समस्यते स कर्मधारयः । असंज्ञायां
द्विगुत्वमेव ।

प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ १७ ॥

स मानसीं मेरुसखः पितृणां
कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयाम्
आत्मानुरूपां विधिनोपयेमे ॥ १८ ॥

रित्रीधरणक्षमम् ] भूभारधरणयोग्यं [ सारम् ] स्व "सारो बले स्थिरांशे च" इत्यमरः । [अवेक्ष्य] ज्ञात्वा ापतिः] [स्वयमेव] [कल्पितो यज्ञभागः] यस्मिन् तत् तथो- । "सोमस्य राज्ञः कुलङ्गः इन्द्रोः शृङ्गो समुद्रस्य शिशुमारो वतो हस्ती" इति श्रुतेः (१) इति भावः । [शैलानामा- त्यम्] अधिपतित्वम् । "पत्यन्तपुरोहितादिभ्यो यक्" इति १, १२८ पा० ) । यक्प्रत्ययः । [अन्वतिष्ठत्] ददाति स्म र्थः । उक्तञ्च ब्रह्माण्डपुराणे,—"शैलानाम् हिमवन्तञ्च नाञ्चैव सागरम् । गन्धर्वाणामधिपतिञ्चक्रे चित्ररथं ः ॥" इति ॥ १७ ॥

सम्प्रति कथां प्रस्तौति,—

स मानसीमिति । मेरोः सखा [मेरुसखः] बन्धुसम्पन्न इति । [स्थितिज्ञः] मर्यादाभिज्ञः, अनेन श्रुतसम्पत्तिः ति । [सः] हिमवान् [पितृणाम्] [मानसीम्] मनःसङ्कल्प- म् । [मुनीनामपि माननीयाम्] योगब्रह्मवादाभ्यां

---

(१) देवताविशेषे पश्वादिविशेषालम्भनप्रकरणे यजुर्वेदे २४ ये हिमवन्तमुद्दिश्य हस्ती आलभ्य इत्युक्तम् । कुलङ्गः ः ।

कालक्रमेणाथ तयोः प्रवृत्ते
स्वरूपयोग्ये सुरतप्रसङ्गे।
मनोरमं यौवनमुद्वहन्त्या
गर्भोऽभवद्भूधरराजपत्न्याः ॥ १९ ॥
असूत सा नागवधूपभोग्यं
मैनाकमम्भोनिधिबद्धसख्यम्।

पूज्यामित्यर्थः। उक्तञ्च विष्णुपुराणे,—"तेभ्यः शुभास्पदं जा मेनका हरिणी तथा। ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्यु द्विज!" इति। [आत्मानुरूपाम्] कुलशीलसौन्दर्य्यादि सदृशीम्। [मेनाम्] मेनका देवीति नामवतीं [कन्याम् [कुलस्य स्थितये] प्रतिष्ठायै [विधिना] यथाशास्त्रेण [उपये परिणीतवान्। उपायमः स्वकरणे (१) १,३,५६ पा०) इत्य त्मनेपदम्। "तेषान्तु मानसी कन्या मेना नाम्ना महागिरे पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते॥" इति ब्रह्माण्ड पुराणात्॥ १८॥

कालक्रमेणेति। [अथ] [कालक्रमेण] गच्छता का इत्यर्थः। [तयोः] मेनकाहिमवतोः [स्वरूपयोग्ये] सौन्दर्य्या गुणे। यद्वा रूप्यते निरूप्यते अनेनेति रूपं ज्ञानं तद्योग्ये शास्त्रानुसारिणीत्यर्थः। [सुरतप्रसङ्गे] सुरतकर्मणि [प्रवृ सति [मनोरमं यौवनमुद्वहन्त्याः] [भूधरराजपत्न्याः] मेनकाय गर्भोऽभवत्॥ १९॥

असूतेति। [सा] मेना [नागवधूपभोग्यम्] नागकन्याप

---

(१) स्वकरणं स्वीकारः तदर्थे वर्त्तमानादुपपूर्वात् यं रात्मनेपदं स्यात्।

क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्रौ
अवेदनाज्ञं कुलिशक्षतानाम् ॥ २० ॥

रमित्यर्थः। [अम्भोनिधिना बद्धसख्यम्] समुद्रकृतमैत्री-
। सख्यमूलं सूचयति,—[पक्षच्छिदि] पक्षच्छेत्तरि।
द्विषेत्यादिना (३, २, ६१ पा०) क्विप्प्रत्ययः। [वृत्रशत्रौ]
] कुपिते सत्यपि [कुलिशक्षतानाम्] वज्रप्रहाराणाम्।
न्धसामान्ये षष्ठी। जानातीति ज्ञः। इगुपधज्ञेति (३, १,
५ पा०) कप्रत्ययः। वेदनानां ज्ञः। अथवा वेदनां जाना
ते वेदनाज्ञः। आतोऽनुपसर्गे कः (३, २, ३ पा०) इति
त्ययः। उपपदमतिङ् (२, २, १६ पा०) (१) इति समासः।
भवतीति [अवेदनाज्ञः] तं कुलिशक्षतवेदनानभिज्ञ-
र्थः। सापेक्षत्वेऽपि गमकत्वात्समासः (२)। पक्षच्छेदोद्यत-
ात् त्राणाय शरणागमनमनयोः सख्यमूलमिति भावः।
ाकं पुत्रमसूत]। सर्वपर्वतपक्षच्छेदेऽपि अयमच्छिन्नपक्ष
ति मैनाकस्योत्कर्षः। तादृक्पुत्रवत्त्वं हिमाद्रेः, इति
कं मैनाकस्य वर्णनम्। "पिता न ज्ञायते यस्या भ्राता
न विद्यते। नोपयच्छेत्तु तां कन्यां धर्मलोपभयात् सुधीः"
अभ्रातृककन्यापरिणयनिषेधात् प्रकृते पार्वती भ्रातृ-
एवेति सूचनार्थं मैनाकवर्णनमिति तात्पर्य्यार्थः ॥२०॥

---

(१) तिङ्भिन्नमुपपदं (प्रत्ययविधायकसूत्रे सप्तमीनिर्दि-
) समर्थेन सह समस्यते।

(२) सापेक्षत्वेऽपि कुलिशक्षतानां सम्बन्धितयाऽपेक्षणेऽपि
कत्वात् व्यास इव समासेऽपि तुल्यतयाऽर्थबोधकत्वात्
सः। तथा चोक्तम् "समस्तस्यासमस्तेन नित्यापेक्षेण
तिः" इति।

अथावमानेन पितुः प्रयुक्ता
दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा
तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥
सा भूधराणामधिपेन तस्यां
समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां
नीताविवोत्साहगुणेन सम्पत् ॥ २२ ॥

अथेति । [अथ] मैनाकजन्मनानन्तरं [दक्षस्य] प्रजाप [कन्या] [भवस्य] महादेवस्य [पूर्वपत्नी] पूर्वभार्य्या [सती पतिव्रता । "सती साध्वी पतिव्रता" इत्यमरः । [सती] न देवी । [पितुः] दक्षस्य । कर्त्तरि षष्ठी । [अवमानेन] स्वभ या [प्रयुक्ता] प्रेरिता [योगमार्गेण विसृष्टदेहा] त्यक्तदे सती । [जन्मने] पुनरुद्भवाय [ताम्] [शैलवधूम्] मेनक [प्रपेदे] । अत्र, पुरा किल सती देवी दक्षाध्वरे तत्कृतां स्व र्नवज्ञामसहमाना पितरं प्रसूय उपेक्ष्य मत्कर्त्तव्यकार्य्यं त्वत मातैव करिष्यतीति निर्द्धार्य्य देवकार्य्याणि साधयितुञ्च यो ग्निना स्वशरीरं ददाह इति पुरावृत्तकथा अनुसन्धेया ॥२१

सेति । [भव्या] कल्याणी [सा] सती [भूधराणामधिपे हिमवता [समाधिमत्याम्] नियमवत्याम् [तस्याम्] मेन याम् [सम्यक् प्रयोगात्] साध्वाचरणाद्धेतोः [अपरिक्षताया अभ्रष्टायाम् [नीतौ] [उत्साहगुणेन] उत्साहशक्त्या [सम्पदिव उदपादि] उत्पादिता उत्पद्यतेर्ण्यन्तात् कर्म

प्रसन्नदिक् पांशुविविक्तवातं
शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां
सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥

तया दुहित्रा सुतरां सवित्री
स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दात्
उद्भिन्नया रत्नशलाकयेव ॥ २४ ॥

क् । चिण् भावकर्मणोः ( ३,१, ६६, पा०) इति चिण्प्रत्ययः । णो लुक् (६, ४, १०४, पा० ) इति तस्य (१) लुक् ॥२२॥

प्रसन्नेति । प्रसन्नाः निर्मलाः दिशो यस्मिन् तत् [ प्रसन्नक् । ] [पांशुविविक्ताः] रजोरहिताः [वाताः] यस्मिन् तत् ोक्तम् । [शङ्खस्य स्वनात् स्वनस्य] वा [अनन्तरं पुष्पवृष्टिः] स्मिन् तत्तथोक्तम्, [तस्याः] पार्वत्याः [जन्मदिनम् ।] स्थितला: [स्थावराः] शैलवृक्षादयः । स्थेशभासपिसकसो वरच् २, १७५ पा०) इति वरच्प्रत्ययः । जङ्गम्यन्ते भृशम् छन्तीति [ जङ्गमाः ] देवतिर्य्यङ्मनुष्यादयः । स्थावराश्च ङ्गमाश्च तेषां द्वयानामपि [ शरीरिणां सुखाय ] आनन्दाय व ॥ २३ ॥

तयेति । [स्फुरत्प्रभामण्डलया तया दुहित्रा] [सवित्री] यित्री । स्वरतिसूयतिसूतिधूञूदितो वा (७,२,४४पा०) इति ागमः । विदूरस्य अद्रेः प्रान्तभूमिः [विदूरभूमिः । ] "अवि-

---

(१) चिणः परस्य एकवचनान्तशब्दस्य लुक् स्यात् ।

दिने दिने सा परिवर्द्धमाना
लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान् विशेषान्
ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥

दूरे विदूरस्य गिरेरुत्तुङ्गरोधसः । काकतालीयसीमान्ते मर्ग
नामाकरो भवेत् ॥" इति बुद्धः । [नवमेघशब्दादुद्भिन्नया] रत्न
शलाकया ] रत्नाङ्कुरेण [इव] [सुतरां चकाशे] रराज ॥२४॥

दिनेदिने इति । लब्धः उदयो यया सा [लब्धोदया] उत
न्नेत्यर्थः । अभ्युदितेत्यर्थः । [दिने दिने] प्रतिदिनम् । नित्यवी
प्सयोः (८, १, ४ पा०) (१) इति वीप्सायाम् द्विरुक्तिः । [परि
वर्द्धमाना] उभयत्र समानमेतत् । [सा] बाला चन्द्रमस इय
[चान्द्रमसी] [लेखेव] [लावण्यमयान्] कान्तिविशेषप्रचुरान्
"मुक्ताफलेषु छायाया स्तरलत्वमिवान्तरा । प्रतिभाति यद
ङ्गेषु तल्लावण्यमिहोच्यते ॥" इति भूपालः । विशेषान् अवयवा
"विशेषोऽवयवे व्यक्तौ" इत्युत्पलमाला । ज्योत्स्नायाम् अन्तर
मन्तर्द्धानं येषां तानि [ज्योत्स्नान्तराणि] ज्योत्स्नया अन्त
र्हितानि तन्मयानीति यावत् । अन्याः कलाः [कलान्तरा
णीव] । सुप्सुपेति (२) समासः । "स्थानात्मीयान्यतादर्थ्यरन्ध्र
न्तर्धिषु चान्तरम्" इति शाश्वतः [पुपोष] उपचितवती
इयं वाक्योपमा इत्याह दण्डी । तल्लक्षणन्तु—"वाक्यार्थे

(१) आभीक्ष्ण्ये च वीपसायाञ्च द्योत्ये सर्वस्य द्वित्वं स्यात्
(२) सह सुपा (२, १, ४ पा०) इति सूत्रे योगविभागा
सुपसुपेत्यन्वयपक्षे सुबन्तं सुबन्तेन सह वा समस्यते इत्यर्थः
वस्तुतः मयूरव्यंसकादित्वादेव (२,१,७२ पा० ) अत्र समासः

तां पार्वतीत्याभिजनेन नाम्ना
बन्धुप्रियां बन्धुजनो जुहाव।
उमेति माता तपसो निषिद्धा
पश्चादुमाख्यां सुमुखी जगाम॥ २६ ॥
महीभृतः पुत्रवतोऽपि दृष्टिः
तस्मिन्नपत्ये न जगाम तृप्तिम्।

स्यार्थः कोऽपि यद्युपमीयते। एकानेकेव शब्दत्वात् सा तु योपमा द्विधा॥" ॥ २५ ॥

तामिति। [बन्धुप्रियां तां] बालां [बन्धुजनः] पित्रादिः। भिजनादागतेन [आभिजनेन] पित्रादिपूर्वसम्बन्धोपाधिकेन थः। "अभिजनाः पूर्वबान्धवाः" इति कासिका। [नाम्ना]। तस्यापत्यं स्त्री [पार्वती]। तस्यापत्यं (४, १, ९२ पा०) ) इत्यण्प्रत्ययः। [इति जुहाव] आहूतवान्। ह्वयतेर्लिटि पम्। पर्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति वः। [पश्चात्] आभिजननामग्रहणानन्तरं [माता] जनन्या इति सम्बोधने। "उ-इति वितर्कसम्बोधनपादपूरणेषु" इति व्याख्याने। मा-शब्दो निषेधे। [उ] हे वत्से! [मा] मा कु इत्येवंरूपेण [तपसः] तपश्चर्यायाः। वारणार्थानामीप्सितः , ४, २७ पा०) इति अपादानत्वात् पञ्चमी। [निषिद्धा] वारिता सती [सुमुखी सा] बाला उमा इति आख्यां नाम-म् [उमाख्यां जगाम] ॥२६॥

महीभृत इति। पुत्राश्च दुहितरश्च पुत्राः। भ्रातृपुत्रौ

---

(१) षष्ठ्यन्तात् अपत्यमित्यर्थे ऽण् स्यात्।

अनन्तपुष्पस्य मधोर्हि चूते
द्विरेफमाला सविशेषसङ्गा ॥ २७
प्रभामहत्या शिखयेव दीपः
त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी
तया स पूतश्च विभूषितश्च ॥ २८ ॥

स्वसृदुहितृभ्यां (१, २, ६८ पा०) (१) इत्येकशेषः। ते॰
सन्तीति पुत्रवान्। भूमार्थे मतुप्। तस्य [पुत्रवतोऽपि] ब॰
पत्यस्य अपीत्यर्थः। [महीभृतः] हिमाद्रेः [दृष्टिः] [चक्षु॰
[तस्मिन्नपत्ये] तोके "अपत्यं तोकं तयोः समे" इत्यमरः। तस॰
पार्वत्यामित्यर्थः। [तृप्तिं न जगाम]। तथाहि, [अनन्तपुष्पस॰
नानाविधकुसुमस्य अपि [मधोः] वसन्तस्य सम्बन्धिनी [द्विरे॰
माला] भृङ्गपङ्क्तिः चूतस्य विकारे [चूते] चूतकुसुमे। अवय॰
च प्राण्योषधिवृक्षेभ्यः (५, ३, १३५ पा०) इति विकारार्थोत्प॰
स्याण्प्रत्ययस्य लुप्प्रकरणे पुष्पमूलेषु बहुलम् (४, ३, १६॰
पा० सू० वा० इति पठनाल्लुक्। [सविशेषः] सातिशयः [सङ्ग॰
यस्याः सा तथोक्ता अत्यन्तासक्तेत्यर्थः ॥२७॥

प्रभेति। [प्रभामहत्या] प्रकाशाधिकया [शिखया] ज्वाल॰
[दीप इव]। शिखादीपयोः अवयवावयविभावाद्भेदेन व्य॰
देशः। त्रयो मार्गा यस्यास्तया [त्रिमार्गया] मन्दाकिन॰
हतीया द्यौर्लोक इति [त्रिदिवः] स्वर्गः। वृत्तिविषये त्रिशब्द॰

---

(१) क्रमेण स्वसृदुहितृशब्दानां समासे भ्रातृपुत्रशब्दावेव॰
वशिष्येते स्वसृदुहितृशब्दौ लुप्येते इत्यर्थात्।

मन्दाकिनीसैकतवेदिकाभिः
सा कन्दुकैः कृत्रिमपुत्रकैश्च।
रेमे मुहुर्मध्यगता सखीनां
क्रीड़ारसं निर्विशतीव बाल्ये॥ २९॥

भागवत्प्रूरणार्थत्वम्। पृषोदरादित्वात् दिव्शब्दादकारागमः त्वं लोकात्। दीव्यतेर्वअर्थे कविधानं दीव्यन्त्यत्र जना इति इति चोरस्वामी। तस्य [मार्ग इव]। [संस्कारः] व्याकजन्या शुद्धिः तद्वत्या [गिरा] वाचा "भद्रैषां लक्ष्मीर्निःताधिवाचि" इति श्रुतेः इति भावः। मनस ईषा मनीषा त्यास्तीति [मनीषी] विद्वान् [इव।] शकन्ध्वादित्वात् १, ८४, पा० वा०) साधुः। [तया] पार्वत्या [सः] हिमवान् ः] शोधितश्च [विभूषितश्च]। अत्र शिखागिरोरविशिः उपमानानर्हत्वात् न विशेषणाधिक्यदोषः। इयं लोपमा॥ २८॥

मन्दाकिनीति। [सा] पार्वती [बाल्ये] वयसि क्रीड़ानां स्वादः रुचिरिति यावत् तं [क्रीड़ारसम्]। "रसो गन्धे स्वादः" इति विश्वः। [निर्विशतीव] भुञ्जानेव। "निर्वेशो भोगयोः" इति विश्वः। आच्छीनद्योर्नुम् (७, १,८०पा०) इति विकल्पात् नुमभावः।[सखीनां मध्यगता] सती [मन्दायाः सैकतेषु] पुलिनेषु [वेदिकाभिः] [कन्दुकैः]। क्रियया त्तैः [कृत्रिमैः।] ड्वितः क्त्रिः (३, २, ८८ पा०) इति (२)

(१) अवर्णान्तात् परो यः शतुरवयवस्तदन्तस्य नुम् वा स्यात् याोः परयोः। शीस्थाने शी। नदीति ङीपः संज्ञा।
(२) डुकारेतो धातोः क्त्रिः स्याद्भावेऽकर्तरि च कारके।

तां हंसमालाः शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥

असम्भृतं मण्डनमङ्गयष्टेः
अनासवाख्यं करणं मदस्य

क्तिप्रत्ययः। क्लेर्मब् नित्यं (४, ४, २० पा०) इति (१
मवागमश्च। [पुत्रकैः] पाञ्चालिकाभिः। "पाञ्चालिव
पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता" इत्यमरः। संज्ञाय
कन् (५, ३, ८७ पा०) इति कन्प्रत्ययः। [मुहुः] पुनः पु
[रेमे] ॥२९]

तामिति। [स्थिरः] स्थेयान् [उपदेशः] प्रागभवीयो यस्य
तादृशीं मेधाविनीमित्यर्थः। [ताम्] पार्वतीम् [उपदेशका
[प्राक्तनजन्मविद्याः] पूर्वजन्माभ्यस्तविद्या इत्यर्थः। [शर
गङ्गां हंसमाला इव] [नक्तम्] रात्रौ [महौषधिम्] तृणविशे
[आत्मभासः] स्वदीप्तयः [इव प्रपेदिरे]। उपमानसामर्थ्य
उपदेशमन्तरेण एवेति गम्यते ॥३०॥

असम्भृतमिति। [अथ] [सा] पार्वती [अङ्गयष्टेः] [असम
तम्] अयत्नसिद्धं [मण्डनम्] प्रसाधनम् [अनासवाख्यम्] अ
वाख्यारहितम् [मदस्य करणम्] साधनम् [कामस्य पुष्पव्य
रिक्तमस्त्रम्] अस्त्रभूतं [बाल्यात्] शैशवात् [परम्] अनन
भावि [वयः] यौवनं [प्रपेदे] प्राप। यौवनेनैव हि युवत

(१) क्तिप्रत्ययान्तात् नित्यं मप् स्यात् निर्वृत्तेऽर्थे।

कामस्य पुष्पव्यतिरिक्तमस्त्रं
बाल्यात् परं साथ वयः प्रपेदे ॥ ३१ ॥
उन्मीलितं तूलिकयेव चित्रं
सूर्य्यांशुभिर्भिन्नमिवारविन्दम्।
बभूव तस्याश्चतुरस्रशोभि
वपुर्विभक्तं नवयौवनेन ॥ ३२ ॥

ाध्यन्ते काम्यन्ते चेति भावः। अत्र द्वितीयपादे आसवरूप-
रणाभावेऽपि तत्कार्य्यमदोक्तेर्विभावनालङ्कारः। तदुक्तं
ारणाभावे कार्य्योत्पत्तिर्विभावना” इति। प्रथमतृतीय-
स्तु आरोप्यमाणयोः मण्डनमदनास्त्रत्वयोः प्रकृतोपयियो-
त् परिणामालङ्कारः। तल्लक्षणन्तु ११ श्लोकव्याख्याने
म् ॥ ३१ ॥

उन्मीलितमिति। [नवयौवनेन] प्रथमयौवनेन [विभक्तम्]
भव्यञ्जितं पीनजघनादिसंस्थानमित्यर्थः। [तस्याः] पार्वत्याः
ुः] [तूलिकया] कूर्चिकया शलाकया इत्यर्थः। “तूलिका
यता लेख्यकूर्चिका तूलशय्ययोः” इति विश्वः। [उन्मी-
तम्] रञ्जनद्रव्येण उद्भासितं समुत्कीर्णं रूपमिति यावत्
त्रम्] आलेख्यम् [इव] [सूर्य्यांशुभिः] [भिन्नम्] विकसितम्
रविन्दम्] पद्मम् [इव]। चतस्रः अस्रयो यस्य तच्चतुरस्रम् (१)
ूनातिरिक्तं यथा तथा शोभते इति [चतुरस्रशोभि]
त्कौल्ये णिनिः। [बभूव।] चित्रारविन्दयोस्तूलिकातरणि-

(१) अचतुरेत्यादिना (५, ४, १२०) निपातनात् सिद्धम्।

अभ्युन्नताङ्गुष्ठनखप्रभाभिः
निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजह्रतुस्तच्चरणौ पृथिव्यां
स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३३ ॥

किरणसम्बन्ध इव स्वतःसिद्धस्य एव अङ्गसौष्ठवस्य यौवनप्रा
भाव: अभिव्यञ्जको बभूव इत्यर्थः ॥ ३२ ॥

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते, मानुषाणां केश
दारभ्येति धार्मिकाः । सम्प्रति सप्तदशभिः श्लोकैः पार्वत्य
पादादिकेशान्तवर्णनमारभते,—

अभ्युन्नतेति । [अभ्युन्नतयोः अङ्गुष्ठनखयोः प्रभाभिः] निि
त्तेन [निक्षेपणात्] निर्भरन्यासाद्धेतोः [रागम्] अन्तर्गतं लौि
त्यम् । "रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु" इ
शाश्वतः । [उद्गिरन्तौ] वमन्तौ वहिर्निःसारयन्तौ इव स्थि
इत्यर्थः । अत्रोद्गिरतेः गौणार्थत्वात् न ग्राम्यतादोषः, प्रत्युत ग
एव । यथाह दण्डी,—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्ति
व्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते" इति
तस्याः चरणौ [तच्चरणौ ।] [पृथिव्यामव्यवस्थाम्] व्यवस्थारहि
सञ्चारिणीमित्यर्थः । [स्थलारविन्दश्रियम्] आजह्रतुः । स्थ
विशेषणात् नियतलौहित्यलाभः । अत्र सामुद्रिकाः,—"यस
रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निगूढगुल्फौ मिलितौ
स्यान्नृपतिसम्मता ॥" इति । अत्र उपमानधर्मस्य अरविन्दश्रि
चरणयोः उपमेययोः असम्भवात् अरविन्दश्रियमिव श्रियमि
प्रतिबिम्बीकरणाक्षेपात् निदर्शनालङ्कारः । सा च सम्ब
ऽसम्बन्धलक्षणातिशयोक्त्यनुप्राणिता अव्यवस्थामित्यनेन स्थल

सा राजहंसैरिव सन्नताङ्गी
गतेषु लीलाञ्चितविक्रमेषु।
व्यनीयत प्रत्युपदेशलुब्धैः
आदित्सुभिर्नूपुरशिञ्जितानि ॥ ३४ ॥
वृत्तानुपूर्वे च न चातिदीर्घे
जङ्घे शुभे सृष्टवतस्तदीये।

बिम्बस्य स्थैर्यसम्बन्धेऽपि असम्बन्धाभिधानात्। निदर्शना-
लक्षणन्तु,—असम्भवद्वस्तुसंयोगादुपमानोपमेययोः। प्रतिबिम्ब-
क्रिया गम्या यत्र सा स्यान्निदर्शना॥" इति ॥ ३३ ॥

सेति। [प्रत्युपदेशलुब्धैः] "गुरुशुश्रूषया विद्या पुष्कलेन
धनेन वा। अथवा विद्यया विद्या, चतुर्थी नोपपद्यते॥" इति
न्यायादिति भावः। तदेव व्यनक्ति,—[नूपुरशिञ्जितानि
आदित्सुभिः] आदातुमिच्छुभिः मञ्जीरशिञ्जितमञ्जुकूजितो-
पदेशमिच्छद्भिः इत्यर्थः। [राजहंसैः] [सन्नताङ्गी] कुचभारा-
दिति भावः। [सा] पार्वती [लीलाभिः] विलासैः [अञ्चिताः]
पूजिताः [विक्रमाः] पादन्यासा येषु तेषु। अञ्चेः पूजायाम्
(७,२,५३ पा०) (१) इतीड़ागमः। "लीला विलासक्रिययोः"
इत्यमरः। गतेषु विषयेषु [व्यनीयत इव] विनीता किमु?
अन्यथा कथमस्या हंसगमनम्? इत्युत्प्रेक्षा ॥ ३४ ॥

वृत्तेति। वृत्ते वर्तुले पूर्वमनुगते, अनुपूर्वे गोपुच्छाकारे
इत्यर्थः वृत्ते च ते अनुपूर्वे च [वृत्तानुपूर्वे] [नातिदीर्घे च]

(१) पूजार्थे वर्त्तमानादञ्चतेः परयोः क्त्वानिष्ठयोरिट् स्यात्।
पूजा च तादर्थ्यवत्।

शेषाङ्गनिर्माणविधौ विधातुः
लावण्य उत्पाद्य इवास यत्नः ॥ ३५ ॥
नागेन्द्रहस्तास्त्वचि कर्कशत्वात्
एकान्तशैत्यात् कदलीविशेषाः ।

महाविभाषया न समासः। नञो विशेषणत्वं च शब्दप्रयोगा
देव ज्ञेयम्। [शुभे] मङ्गले तस्या इमे [तदीये जङ्घे] प्रसृ
"जङ्घा तु प्रसृता" इत्यमरः। [सृष्टवतः] निर्मितवतः [विधातु
स्रष्टुः [शेषाङ्गनिर्माणविधौ] जङ्घाव्यतिरिक्तावयवनिर्माणार्थ
मित्यर्थः। [उत्पाद्ये] पुनःसम्पाद्ये [लावण्ये] कान्तिविशेष
विषये। लावण्यलक्षणन्तु—२५ श्लोकव्याख्याने उक्तम्। [यत्न
आसेव] बभूव इवेति उत्प्रेक्षा। उपादानमन्तरेण कार्यस
दुष्करत्वात् तदङ्गानाञ्च लावण्योपादानकत्वात् पूर्वसम्पादितस
च जङ्घार्थमेव कार्त्स्न्येन विनियोगात्, पुनर्लावण्यसम्पादं
यत्नः स्यादेव इति एतादृक्सौन्दर्यं, तज्जङ्घे इति भावः। आसेति
बभूवार्थे, तिङन्तप्रतिरूपकम् अव्ययमित्याह शाकटायनः
वल्लभस्तु—न तिङन्तप्रतिरूपकमव्ययम्, अस्तेर्भूरिति (२, ४
५२ पा० ) (१) आदेशनियमात् तादृक्तिङन्तस्यैवाभावा
किन्तु कवीनामयं प्रामादिकः प्रयोग इत्याह। वामनस्तु-
अस गतिदीप्त्यादानेषु इति धातोर्लिटि रूपमिदम् इत्याह
अस इत्यनुदात्तेत् (२) दीप्त्यर्थे, आस दिदीपे प्रवृत्त इत्यर्थ
॥ ३५ ॥

नागेन्द्रेति। [नागेन्द्राणाम्] ऐरावतादीनां [हस्ताः

(१) अस्तेर्भूः स्यादार्धधातुके विषये।

(२)अनुदात्तेत् आत्मनेपदमनित्यं चक्षिङो ङित्करणा
ज्ञापकात्।

लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥ ३६ ॥

एतावता नन्वनुमेयशोभि
काञ्चीगुणस्थानमनिन्दितायाः।
आरोपितं यत् गिरिशेन पश्चात्
अनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥

ाः [त्वचि] चर्मणि कर्कशत्वात्] [कदलीविशेषाः] राम-
ादयः [एकान्तशैत्यात्] नियतशैत्याद्धेतोः [लोके] [परि-
हि] वैपुल्ययुक्तम्। "परिणाहो विशालता" इत्यमरः।
पं लब्ध्वापि] अपिशब्दात् करिकदलीमात्रस्य तादृक्परि-
हो नास्तीति भावः। तस्याः ऊर्वोः [तदूर्व्योः] [उपमान-
ा जाताः] उपमानक्रियानर्हा बभूवुः। तदूर्वोर्न कार्कश्यं
पि एकान्तशैत्यम् इति भावः ॥ ३६ ॥

एतावतेति। [अनिन्दितायाः] अनवद्यायाः [पार्वत्याः]
ाञ्चीगुणस्थानम्] नितम्बविम्बम् [एतावता ननु] एताव-
। "प्रश्नावधारणानुज्ञाविनयामन्त्रणे ननु" इत्यमरः।
ते इति शोभि। आवश्यके णिनिः, ततस्त्वप्रत्ययः। अनु-
शोभित्वं शोभा यस्य तत् [अनुमेयशोभि।] त्वप्रत्ययस्तु
र्थत्वात् न प्रयुक्तः—इत्याह वामनः। [पश्चात्] आदौ
ध्वापि पश्चात् तपश्चर्यानन्तरमित्यर्थः। गिरौ शेते इति
शः शिवः। गिरौ डश्छन्दसीति (३, २, १५, पा० वा०)
ययः। भाषायामपि क्वचिदिष्यते। अथवा गिरिः कैलासो-
स्ति गिरिशः। लोमादित्वात् (५,२,१००पा०) श-प्रत्ययः।
[गिरिशेन।] अन्यासां नारीणां कमनीयः कामयितु

तस्याः प्रविष्टा नतनाभिरन्ध्रं
रराज तन्वी नवलोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य
तन्मेखलामध्यमणेरिवार्च्चिः ॥ ३८ ॥
मध्येन सा वेदिविलग्नमध्या
बलित्रयं चारु बभार बाला ।

ग्वयः न भवतीति [अनन्यनारीकमनीयः] तम् [अङ्कं] निजो
मङ्कम् [आरोपितम्] अधिरोपितमिति यत् एतावता लि
मेति पूर्व्वेणान्वयः । रोहतेर्ण्यन्तात् कर्म्मणि क्तः । रुहः पोऽन्य
रस्यामिति (७, ३, ४३ पा० ) हकारस्य पकारः । गत्य
विवक्षायां द्विकर्म्मकत्वम् । प्रधाने कर्म्मणि क्तः । गिरिजा
तम्बविम्बं विश्वातिशायिसौन्दर्य्यं गिरिशाङ्कारूढत्वात् व्य
रेकेण नार्य्यन्तरनितम्बविम्बवत् । विपक्षे हेत्वनुक्तिरेव बाधिक
दाद्यायशोनितम्बविम्बस्य तु पक्षसपक्षयोः अन्यतरभावान
हत्तेः निष्कलङ्कमनुमानमिति अलमस्थानसंरम्भेण ॥ ३७ ॥

तस्या इति । [नीवीम्] वस्त्रग्रन्थिम् । "स्त्रीकटीवस्त्रब
ऽपि नीवी परिपणेऽपि च" इत्यमरः । [अतिक्रम्य] अती
[नतम्] निम्नम् । [नाभिरन्ध्रम् प्रविष्टा] प्रविशन्ती [ तन्वी
सूक्ष्मा [तस्याः] पार्व्वत्याः [नवलोमराजिः] । [सितेतरस्य] अ
तस्य इन्द्रनीलस्येत्यर्थः । तस्याः पार्व्वत्याः मेखला [तन्मेखला]
तस्या इत्यनुवृत्तौ पुनः तच्छब्दोपादानं वाक्यान्तरत्वात् सो
ध्यम् । यद्वा तस्याः नीव्याः मेखला तन्मेखला तत्र तदवस्थ
नात् । तस्याः [मध्यमणेरर्च्चिः] प्रभा [इव रराज] । "ज्वाल
भासोर्नपुंस्यर्च्चिः" इत्यमरः ॥३८॥

आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ॥ ३९ ॥

अन्योऽन्यमुत्पीडयदुत्पलाक्ष्याः
स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य
मृणालसूत्रान्तरमप्यलभ्यम् ॥ ४० ॥

मध्येनेति। "वेदिः परिष्कृता भूमिः" इत्यमरः। [वेदि-
लग्नमध्या] वेदिवत् कृशमध्या (१) तनुमध्येति यावत्।
बाला] पार्वती [मध्येन] मध्यभागेन [चारु] सुन्दरम्
लित्रयम्] [कामस्य आरोहणार्थम्] नवयौवनेन [प्रयुक्तम्]
तम् [सोपानमिव बभार] इत्युत्प्रेक्षा ॥ ३९ ॥

अन्योऽन्यमिति। [अन्योऽन्यम्] परस्परम्। कर्मव्यतिहारे
नाम्नो द्वे वाच्ये इति (८, १, १२ पा॰ वा॰) द्विरुक्तिः।
ासवच्च बहुलमिति बहुलवचनादसमासपक्षेऽपि पूर्वपद-
्य सुपः सुवक्तव्य इति तत्रत्यवार्त्तिकम्। [उत्पीडयत्] उप-
त् [पाण्डु] गौरम् [उत्पलाक्ष्याः स्तनद्वयम्] [तथा] तेन
ारेण [प्रवृद्धम्]। कर्त्तरि क्तः। [श्याममुखस्य] कृष्णचुचुक-
ति स्वरूपवर्णनम् [तस्य स्तनद्वयस्य मध्ये यथा] येन प्रका-
[मृणालसूत्रान्तरम्] विसतन्तुमात्रावकाशोऽपि [अलभ्यम्]
ुम् अशक्यम्। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदर्ता-
" इत्यमरः। अत्र सम्बन्धे असम्बन्धरूपातिशयोक्त्यलङ्कारः,

---

(१) आथर्वणिकमध्यवेदेरुत्तरवेद्यपेक्षया कृशमध्यतया
ादृश्यम्। आथर्वणिकवेदिव कृशमध्येति दर्शितं तुला-
ादिपद्धतौ।

शिरीषपुष्पाधिकसौकुमार्य्यौ
बाहू तदीयाविति मे वितर्कः ।
पराजितेनापि कृतौ हरस्य
यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥

कण्ठस्य तस्याः स्तनबन्धुरस्य
मुक्ताकलापस्य च निस्तलस्य ।
अन्योऽन्यशोभाजननात् बभूव
साधारणो भूषणभूष्यभावः ॥ ४२ ॥

कुचयोः पीवरत्वातिशयार्थम् अवकाशसम्बन्धेऽपि असम्बन्धाभिधानादिति ॥ ४० ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति सिद्धत्वात्, शिरीषेति । तस्या इमौ [तदीयौ] [बाहू] [शिरीषपुष्पादधिकं सौकुमार्य्यं] मार्दवं ययोः तथोक्तौ [इति] वितर्कः ऊहः कुतः ? [यौ] बाहू [पराजितेनापि] पूर्वं निर्जितेनापि [मकरध्वजेन] कामेन [हरस्य कण्ठपाशौ] कण्ठबन्धरज्जू [कृतौ] कण्ठालिङ्गनं प्रापितौ इत्यर्थः । तदसाध्यसाधनात् तत् आधिक्यमिति भावः । अत्र बाह्वोः आरोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्य्यातनोपयोगात् परिणामालङ्कारः॥४१

कण्ठस्येति । [स्तनाभ्यां बन्धुरस्य] उन्नतस्य [तस्याः] पार्वत्याः [कण्ठस्य] गलस्य [निस्तलस्य] वर्त्तुलस्य [मुक्ताकलापस्य] मुक्ताभूषणस्य च । "वर्त्तुलं निस्तलं वृत्तं बन्धुरन्तून्नतानतम्" "कलापो भूषणे बर्हे तूणीरे संहतावपि" इति चामरः [अन्योऽन्यशोभाजननात्] [भूषणभूष्यभावः] अलङ्कारालङ्कार्य

चन्द्रं गता पद्मगुणान्न भुङ्क्ते
पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखन्तु प्रतिपद्य लोला
द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥४३॥
पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम् ।

: [साधारणः] समानः [बभूव] । उभौ अपि अन्योऽन्यस्य
ौ भूषणे च बभूवतुः इत्यर्थः । अत्र कण्ठमुक्ताकलापयोः
क्रियाद्वारेण अन्योऽन्यभूषाजनकत्वात् अन्योऽन्यालङ्कारः ।
"परस्परं क्रियाजननम् अन्योऽन्यम्" इति ॥ ४२ ॥

इदानीं पार्वतीवदनं चन्द्रकमलसदृशमित्येतदेव वचो-
ाह, चन्द्रमिति । [लोला] चपला परिभ्रमणशीला इत्यर्थः ।
ीः] कान्त्यभिमानिनी देवता [ चन्द्रं गता ] प्राप्ता सती
गुणान्] सौगन्ध्यादीन् । [न भुङ्क्ते] न अनुभवति । पद्मा-
] सती चन्द्रमस इमाम् [ चान्द्रमसीम् अभिख्याम्]
म् । "अभिख्या नामशोभयोः" इत्यमरः । अस्तु तदा-
ौ न भुङ्क्ते । [उमामुखं प्रतिपद्य तु ] द्वे चन्द्रपद्मे
ः कारणं यस्याः तां [द्विसंश्रयां प्रीतिम् ] आनन्दम्
] तत्र उभयगुणसम्भवादिति भावः । अत्र उपमानभूत-
ापेक्षया उपमेयस्य उमामुखस्य अधिकगुणवत्त्वोक्त्या
िकालङ्कारः । तदुक्तं "भेदप्राधान्येनोपमानादुपमेयस्या-
 विपर्य्यये वा व्यतिरेकः" इति ॥ ४३ ॥

मिति । [पुष्पम्] पुण्डरीकादिकम् [प्रवाले] बालपल्लवे
ितम्] निहितं [स्याद्यदि] । "प्रवालो बल्लकीदण्डे विद्रुमे

ततोऽनुकुर्य्याद्विशदस्य तस्याः
ताम्रौष्ठपर्य्यस्तरुचः स्मितस्य ॥ ४४ ॥
स्वरेण तस्याममृतस्रुतेव
प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा
श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥

बालपल्लवे" इति विश्वः [मुक्ताफलं वा] स्फुटे निर्मले वि
तिष्ठतीति [स्फुटविद्रुमस्थं] स्यात् यदि [ततः] तर्हि [विशद
शुभ्रस्य [ताम्रे] अरुणे [ओष्ठे] [पर्य्यस्ता] प्रसृता [ रु
कान्तिर्यस्य। तथोक्तस्य [तस्याः] पार्वत्याः [स्मितस्य अनु
र्य्यात्] स्मितमनुकुर्य्यादित्यर्थः। अत्र "माषाणामश्नीयात्"
वत् सम्बन्धमात्रविवक्षया षष्ठी। अत्र पुष्पप्रवालयोः मु
विद्रुमयोश्च असम्बन्धेऽपि सम्बन्धोक्तया अतिशयोक्तिः। सा
सम्भावना इत्यलङ्कारसर्वस्वकारः। विशेषतस्तु पुष्पमुक्ताफ
योरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात् प्रतीपा
ङ्कारः। तदुक्तम्, "उपमानस्याक्षेप उपमेयताकल्पनं
प्रतीपः" इति लक्षणात्। स च पूर्वोक्तातिशयोक्तयनुप्रा
इति ॥ ४४ ॥

स्वरेणेति। [अभिजातवाचि] मधुरभाषिण्याम् [त
पार्वत्याम् [अमृतस्रुता] अमृतस्राविणा [इव] क्विप्। [स्वरे
नादेन [प्रजल्पितायाम्] आलपन्त्याम्। कर्त्तरि क्तः। अ
काकादिभिः पुष्टा [अन्यपुष्टा] कोकिलापि। मुख्यया
जातिवचनत्वाभावात् ङीबभावः। [ताड्यमाना] वाद्यम
विषमवद्धा तन्त्रीः [वितन्त्रीः] इव। अवितस्तृतन्त्रिभ्यः (

प्रवातनीलोत्पलनिर्विशेषम्
अधीरविप्रेक्षितमायताक्ष्या।
तया गृहीतं नु मृगाङ्गनाभ्यः?
ततो गृहीतं नु मृगाङ्गनाभिः? ॥ ४६ ॥

तस्याः शलाकाञ्जननिर्मितेव
कान्तिर्भ्रुवोरायतलेखयोर्या।
तां वीक्ष्य लीलां चतुरामनङ्गः
स्वचापसौन्दर्य्यमदं मुमोच ॥ ४७ ॥

उ० ) तन्विधातोरौणादिक ईप्रत्ययः। ङीबभावात् न
ग्राव्भ्य इति ( ६, १, ६८ पा० ) सुलोपः। तदुक्तम्
लक्ष्मीतरी तन्त्री श्रीधी-श्रीणामुणादितः। स्त्रीलिङ्ग-
षाम्तु न सुलोपः कदाचन ॥" इति। एते ङीवन्ता न
त्यर्थः। [श्रोतुः] जनस्य [प्रतिकूलशब्दा] कर्णकठोर-
भवतीति शेषः ॥ ४५ ॥

वातेति। प्रवाते प्रभूतवातस्थले [यन्नीलोत्पलम्] ततः
शेषम्] निर्भेदं तत्सदृशमित्यर्थः। [अधीरविप्रेक्षितम्]
विलोकितम् [आयताक्ष्या] विशालनेत्रया पार्वत्या
ङ्गनाभ्यः] हरिणीभ्यः [गृहीतम्] अभ्यस्तम् [नु?]
मृगाङ्गनाभिः [ततः] तस्याः पार्वत्याः। पञ्चम्यास्तसिल्।
तं नु?] अत्र विवक्षितस्य परस्परग्रहणस्य उत्प्रेक्षणात्
इति केचित्। तदुपजीविसन्देहालङ्कार इत्यन्ये।
सङ्कर इत्यपरे ॥ ४६ ॥

ा इति। [आयतलेखयोः] दीर्घरेखयोः [तस्याः]
ः [भ्रुवोः] सम्बन्धिनी शलाकया [अञ्जनेन] निर्मि-

लज्जा तिरश्चां यदि चेतसि स्यात्
असंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्यु-
र्वालप्रियत्वं शिथिलं चमर्य्यः ॥४८॥
सर्वोपमाद्रव्यसमुच्चयेन
यथाप्रदेशं विनिवेशितेन ।

तेव] स्थिता या [ कान्तिः ] [लीलाचतुराम्] विलाससुभग
[ताम्] कान्तिम् [वीक्ष्य] [अनङ्गः] [ स्वचापसौन्दर्य्येण ]
[मदः] तं [मुमोच] इह सौन्दर्य्यातिशयोक्तिः ॥ ४७ ॥

लज्जेति। [तिरश्चाम्] तिर्य्यग्जातीनां [ चेतसि ] ल
[स्याद्यदि] संशयाभावः [असंशयम्] सन्देहो नास्ति इत्यर्थ
[पर्वतराजपुत्र्याः] शार्ङ्गरवाद्यञो ङीन् ( ४, १, ७३ पा
इति ङीन्। [तम्] प्रसिद्धम् [केशपाशम्] केशकलाप
"पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यम
[प्रसमीक्ष्य] दृष्ट्वा [चमर्य्यः] मृगीविशेषाः बालाः प्रिया या
मिति विग्रहे बालप्रियास्तासां भावः [बालप्रियत्वम्] बि
बालत्वमित्यर्थः। आहिताग्न्यादिपाठात् वा परनिपा
त्वतलोर्गुणवचनस्येति (६, २, ३५ पा० वा०) (१) पुंवद्भा
[शिथिलं कुर्य्युः] निर्लज्जत्वात् न शिथिलयन्तीत्यर्थः।
एव अत्र निर्लज्जत्वकारणहेतोः आद्यपादे वाक्यार्थत्वेनो
काव्यलिङ्गाख्यालङ्कारः। तदुक्तम्—"हेतोर्वाक्यपदार्थत्वे का
लिङ्गमुदाहृतम्" इति ॥ ४८ ॥

(१) गुणवाचकस्य पुंस इव रूपं स्यात् त्वतलोः परयो
र्वार्त्तिकार्थः।

सा निर्मिता विश्वसृजा प्रयत्नात्
एकस्थसौन्दर्य्यदिदृक्षयेव ॥ ४९ ॥
तां नारदः कामचरः कदाचित्
कन्यां किल प्रेक्ष्य पितुः समीपे।
समादिदेशैकवधूं भवित्रीं
प्रेम्णा शरीरार्द्धहरां हरस्य ॥ ५० ॥

सर्वेति। किम्बहुना [ सा ] पार्वती [विश्वसृजा] विधात्रा ...त्र तिष्ठतीति [एकस्थम्] तस्य [सौन्दर्य्यस्य] सर्ववस्तुगतस्य ...र्थः। [दिदृक्षयेव] [प्रयत्नात् यथाप्रदेशम्] क्रमात् [विनि- ...पितेन] स्थापितेन [सर्वेषामुपमाद्रव्याणाम्] चन्द्रारविन्दा- ...मानवस्तूनाम् [समुच्चयेन] समाहारेण [निर्मिता] दिदृ- ...ा एवेति फलोत्प्रेक्षा दर्शनार्थित्वात् विश्वसृजा इति ॥४९॥

तामिति। कामेनेच्छया चरतीति [कामचरो नारदः ...ाचित् पितुः] हिमवतः [समीपे कन्यां ताम्] पार्वतीं ...य किल] [प्रेम्णा] न तु अन्यथा [हरस्य] शिवस्य अर्द्धं हर- ...ति अर्द्धहरा। हरतेरनुद्यमनेऽच् (३, २, ९ पा०) इत्यच्- ...यः। शरीरस्यार्द्धहरां [शरीरार्द्धहराम्] कुलधुरन्धरादिव- ...यवहारा समुदायविशेषकत्वात् समासः अन्यथा तु अर्द्धस्य (१) ...प्रविभागवचनत्वात् अर्द्धशरीरेति स्यात् [एकवधूम्] अस-

(१) अर्द्धं नपुंसकं (२, २, २ पा०) समांशवाचिनोऽर्द्धशब्दः ...ा सह समस्यते इति षष्ठीसमासापवादकसूत्रेणार्द्धशब्दस्य ...निपातेन अर्द्धशरीरेति स्यात् तथाच धुरन्धर इति समासा- ...ं यथा कुलशब्दस्य योग एवमिहापि अर्द्धहरेति समासान- ...शरीरस्य योगः।

गुरुः प्रगल्भेऽपि वयस्यतोऽस्याः
तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूतम्
अर्हन्ति तेजांस्यपराणि हव्यम् ॥ ५१ ॥
अयाचितारं न हि देवदेवम्
अद्रिः सुतां ग्राहयितुं शशाक ।

पत्नीकां भार्य्याम्। पूर्वकालेत्यादिना (२, १, ४९ पा० समासः। [भविनीम्] भाविनीं [समादिदेश] हरस्य अर्द्धा शरीरैकपत्नी भविष्यतीति आदिष्टवानित्यर्थः ॥ ५० ॥

गुरुरिति। [गुरुः] पिता "गुरू गीष्पतिपित्राद्यौ" इत्यमरः [अतः] नारदवचनाद्धेतोः [अस्याः] पार्वत्याः [प्रगल्भे वयस्यपि] यौवने सत्यपि [निवृत्तोऽन्यस्मिन् वरे] जामातरि [अभिलाषः] यस्य स तथोक्तः सन्। "वरो ना रूपजामात्रोः" इति वैजयन्ती। [तस्थौ] वरान्तरं न अन्विष्टवानित्यर्थः। ननु कुतोऽसौ निर्बन्धः? इत्यत आह,—ऋत इति। तथाहि [मन्त्रैः पूतम्] संस्कृतम्, हूयत इति [हव्यम्] आज्यादिकं [कृशानोः] पावकात् [ऋते] कृशानुं विना। अन्यारादित रेत्यादिना (२, ३, २९ पा०) पञ्चमी। [अपराणि तेजांसि] सुवर्णादीनि [नार्हन्ति] न भजन्तीत्यर्थः। ईश्वरादन्यस्य तद्योग्यस्य अभावात् उपेक्षेति भावः ॥५१॥

तर्हि तमेवाहूय दीयताम्? इत्याशङ्क्याह,—

अयाचितारमिति। [अद्रिः] हिमवान् [अयाचितारम्] अयाचमानं [देवदेवम्] महादेवं [सुताम्] पार्वतीं [ग्राहयितुम्

अभ्यर्थनाभङ्गभयेन साधुः
माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२ ॥
यदैव पूर्वे जनने शरीरं
सा दक्षरोषात् सुदती ससर्ज ।
तदा प्रभृत्येव विमुक्तसङ्गः
पतिः पशूनामपरिग्रहोऽभूत् ॥ ५३ ॥

यमाहूय (१) परिग्राहयितुं [न शशाक] न उत्सेहे । तथा
, [साधुः] सज्जनः । "साधुर्वार्द्धुषिके चारौ सज्जने चाभि-
वत्" इति विश्वः । [अभ्यर्थनाभङ्गभयेन] याञ्चावैफल्य-
या [इष्टेऽप्यर्थे] विषये [माध्यस्थ्यम् औदासीन्यम्] [अव
ते] ॥ ५२ ॥

न च तथैव स्थितः, किन्तु उपायान्तरं चिन्तितवानिति
प्रस्तौति,—

यदेति । शोभना दन्ता यस्याः सा [सुदती] वयसि
स्य दतृ (५, ४, १४१ पा०) इति दत्रादेशः । उगितश्च
१, ६ पा०) इति ङीप् । [सा] पार्वती [पूर्वे जनने] पूर्वे
न् जन्मनि । पूर्वादिभ्यो नवभ्यो वेति (७, १, १६ पा०)
आदेशविकल्पः । "पूर्वं ज्वलने" इति पाठे पूर्वं दाक्षाय-
वे ज्वलने योगाग्नौ । [यदा] काले [दक्षरोषाच्छरीरम्]
[ससर्ज] तत्याज । [तदा प्रभृत्येव] तदाद्येव यथा तथा
शूनां पतिः ] शिवः [विमुक्तसङ्गः] त्यक्तविषयासङ्गः सन्
परिग्रहः ] अपत्नीकः [ अभूत् ] स्त्र्यन्तरं न परिजग्राह

(१) पाणिनिना ग्रहधातोर्ण्यन्तकर्तुः कर्मसंज्ञया अननुशा-
न् ग्राहयेति । पदमध्याहार्य्यं देवदेवस्य च तत्क्रियाकर्मत्व-
याहाययेति ।

स कृत्तिवासास्तपसे यतात्मा
गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि
किञ्चित् क्वणत्किन्नरमध्युवास ॥ ५४ ॥

गणा नमेरुप्रसवावतंसाः
भूर्जत्वचः स्पर्शवतीर्दधानाः ।
मनःशिलाविच्छुरिता निषेदुः
शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥

इत्यर्थः। "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः ॥५३

स इति। [कृत्तिवासाः] चर्माम्बरः। "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः। [यतात्मा] नियतचित्तः [सः] पशुपतिः [तपसे] तपोऽर्थं [गङ्गाप्रवाहेणोक्षिताः] सिक्ताः [देवदारवः] यस्मिन् तत्तथोक्तम् [मृगनाभिगन्धि] कस्तूरीगन्धवत् कस्तूरीमृगसञ्चारादिति भावः। "मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्" इत्यमरः। [क्वणन्तः] गायन्तः [किन्नराः] यस्मिन् तत्तथोक्तम्। [किञ्चित्] किमपि [हिमाद्रेः प्रस्थम्] सानुम् [अध्युवास] कुत्रचित् प्रस्थे उवास इत्यर्थः। उपान्वध्याङ्वस इति(१, ४, ४८ पा०) (१) आधारस्य कर्मत्वम्। "प्रस्थोऽस्त्री सानुमानयोः" इत्यमरः ॥ ५४ ॥

गणा इति। [गणाः] प्रमथगणाः। "गणाः प्रमथसंख्यौघाः" इति वैजयन्ती। [नमेरुप्रसवावतंसाः] सुरपुन्नागकुसुमशेखराः। "नमेरुः सुरपुन्नागः" इति विश्वः। [स्पर्शवतीः] सुखस्पर्शाः

---

(१) उपादिपूर्वकवसधातोराधारः कर्मसंज्ञः स्यात्।

तुषारसङ्घातशिलाः खुराग्रैः
समुल्लिखन् दर्पकलः ककुद्मान्।
दृष्टः कथञ्चिद्गवयैर्विविग्नैः
असोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥
तत्राग्निमाधाय समित्समिद्धं
स्वमेव मूर्त्यन्तरमष्टमूर्त्तिः।

द्वौरित्यर्थः प्रशंसायां मतुप्। भूर्जत्वचः भूर्जवल्कलानि दधानाः] वसाना इत्यर्थः। [मनःशिलाभिः] धातुविशेषैः विच्छुरिताः] अनुलिप्ताश्च सन्तः। शिलायां भवं शैलेयम्] औषधिविशेषः। शिलायाः स्त्रीभ्यो ढक् (१) (४, १, १२० ।०) इति भवार्थे ढक्। "शिलाजतु च शैलेयम्" इति यादवः। न [नद्धेषु] व्याप्तेषु॰ [शिलातलेषु] [निषेदुः] उपविविशुः त्यर्थः ॥ ५५ ॥

तुषारेति। [तुषारसङ्घाताः] हिमघनाः ते एव [शिलाः] ः [खुराग्रैः समुल्लिखन्] विदारयन् दर्पेण कलो मधुरध्वनिः स्य सः [दर्पकलः] [विविग्नैः] भीतैः [गवयैः] गोसदृशमृग- ।शेषैः [कथञ्चित्] कृच्छ्रेण [दृष्टः] ककुदमस्यास्तीति [ककु- ान्] वृषभः [असोढः सिंहानां ध्वनिः] येन सः सिंहध्वनि- सहमानः सन् [उन्ननाद] उच्चैर्ननाद जगर्ज इत्यर्थः। स्वभा- ।क्तिरलङ्कारः। तदुक्तम्,—"स्वभावोक्तिरसौ चारु यथावद्वस्तु- र्णनम्" इति ॥ ५६ ॥

तत्रेति। [तपसः फलानाम्] इन्द्रत्वादीनां [स्वयं विधाता]

(१) स्त्रीप्रत्ययावाद्यन्तेभ्यो ढक् स्यात्। ढस्य एयः।

स्वयं विधाता तपसः फलानां
केनापि कामेन तपश्चचार ॥ ५७ ॥

अनर्घ्यमर्घ्येण तमद्रिनाथः
स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां
समादिदेश प्रयतां तनूजाम् ॥ ५८ ॥

जनयिता दाता इत्यर्थः। अष्टौ मूर्त्तयो यस्य सः [अष्टमूर्त्तिः] ईश्वरः। "भूता (१) र्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्त्तिताः" इति। [तत्र] प्रश्ने [स्वम्] स्वकीयमेव [मूर्त्यन्तरम्] मूर्त्तिभेदं [समिद्भिः समिद्धम्] दीपितम् [अग्निमाधाय] प्रतिष्ठाप्य [केनापि कामेन] कयापि फलकामनया [तपश्चचार] चक्रे। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायात् कामेन इत्युक्तम्। तस्यावाप्तसमस्तकामत्वात् केनापीत्युक्तम्॥५७॥

अनर्घ्यमिति। अद्रीणां नाथः [अद्रिनाथः] हिमवान् अर्घं मूल्यमर्हतीत्यर्घ्यः। "मूल्ये पूजाविधावर्घः" इत्यमरः। दण्डादिभ्यो यः (५, १, ६६ पा० ) इति यप्रत्ययः। [अर्घ्यः] न भवतीति [अनर्घ्यः] तमनर्घ्यममूल्यमित्यर्थः। स्वर्गः ओकः स्थानं येषां तेषां [स्वर्गौकसाम्] देवानाम् [अर्चितम्]देवैः पूज्यमानमित्यर्थः। मतिबुद्धिपूजार्थेभ्यश्च (३, २, १८८ पा०) इति वर्त्तमाने क्तः। क्तस्य च वर्त्तमाने (२, ३, ६७ पा०] इति षष्ठी [तम्] ईश्वरम् [अर्घ्येण] पूजार्थोदकेन। पादार्घाभ्याञ्चेति (५, ४, २५ पा०) यत्प्रत्ययः। "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय

(१) भूतानि पञ्च पृथिव्यादीनि।

प्रत्यर्थिभूतामपि तां समाधेः
शुश्रूषमाणां गिरिशोऽनुमेने।
विकारहेतौ सति विक्रियन्ते
येषां न चेतांसि त एव धीराः॥ ५९ ॥
अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषाञ्चोपनेत्री।

ारिणि" इत्यमरः। [अर्चयित्वा] पूजयित्वा [अस्य] ईश्वरस्य आराधनाय] [सखीभ्याम्]। जयाविजयाभ्यां [समेताम्] प्रयताम्] नियतां [तनूजाम्] सुतां [समादिदेश] आज्ञापया- ास ॥ ५८ ॥

प्रत्यर्थीति। [गिरिशः] शिवः [समाधेः प्रत्यर्थिभूतां] तिपक्षभूतामपि। सुप्सुपेति समासः। श्रोतुमिच्छन्तीं शुश्रूषमाणां] सेवमानाम्। सेवका हि सेव्ये दत्तकर्णा वन्ति। इच्छार्थे सन्प्रत्ययः। ज्ञा-श्रु-स्मृ-दृशां सनः (१,३, ७पा०) इत्यात्मनेपदं [ताम्] पार्वतीम् [अनुमेने] अङ्गीचकार प्रतिषिद्धवान् इत्यभिप्रायः। न च एतावता धीरस्य कश्चित् वकार इत्याशयः। धीरत्वमेवार्थान्तरन्यासेनाह,—विका- ेति। [विकारस्य] प्रकृतेरन्यथात्वस्य [हेतौ] स्त्रीसन्निधाना- देकारणे [सति] विद्यमानेऽपि [येषां चेतांसि न विक्रियन्ते] विकृतं नीयन्ते [त एव धीराः] विक्रियन्ते इति कर्मणि ाट्॥ ५९ ॥

शुश्रूषाप्रकारमेवाह,—

अवचितेति। [सुकेशी] शोभनमूर्द्धजा। स्वाङ्गाच्चोपसर्जनाद·

गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥६०॥

इति श्रीकालीदासकृतौ कुमारसंभवे महाकाव्ये
उमोत्पत्तिर्नाम प्रथमः सर्गः ॥ १ ॥

संयोगोपधादिति (१) (४, १, ५४ पा० ) ङीप्। [सा] पार्वती [अवचितानि] लूनानि [बलिपुष्पाणि] पूजाकुसुमानि यया स [वेदेः] नियमवेदिकायाः [सम्मार्गे] सम्मार्जने [दक्षा] [नियम विधेः] नित्यकर्मानुष्ठानस्य यानि [जलानि] तेषां [बर्हिषाम् कुशानाम् [च] [उपनेत्री] आनेत्री सती [तस्य] गिरिशस [शिरसि] [चन्द्रस्य पादैः] रश्मिभिः। "पादा रश्म्यङ्घ्रितु र्यांशाः" इत्यमरः। [नियमितपरिखेदा] निवर्त्तितपरिश्रम सती अहन्यहनि [प्रत्यहम्]। अव्ययं विभक्तिसंमीपसमृद्धोत्या दिना ( २, १, ६, पा० ) नियतार्थेऽव्ययीभावः। नपुंसकाद न्यतरस्याम् ( ५, ४, १०८ पा० ) इति अच्प्रत्ययः। [गिरिश मुपचचार] शुश्रूषाञ्चके ॥ ६० ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविर-
चितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमा-
ख्यायां प्रथमः सर्गः ॥ १ ॥

---

(१) उपसर्जनभूतात् (इतरांशे विशेषणभूतात् ) स्वाङ्गवाच कात् ङीप् स्याद्वा न तु संयोगोपधात्। उपधा उपान्तिमः।

## द्वितीयः सर्गः ।

तस्मिन् विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥ १ ॥

तस्मिन्निति । [तस्मिन् काले] पार्वतीशुश्रूषाकाले [तारकेण] तारकनाम्ना वज्रणखपुत्रेण केनचित् असुरेण [विप्रकृताः] उपद्रुताः दिवमोकः स्थानं येषां ते [दिवौकसः] देवाः । "दिवं स्वर्गेऽन्तरीक्षे च" इति विश्वः । द्यौः ओक इति पक्षे पृषोदरादित्वात् साधुः । तुरं त्वरितं साहयत्यभिभवतीति तुराषाट् । साहयतेश्चौरादिकात् क्विप् । नहि वृति-वृषीत्यादिना (६, ३, ११६ पा० ) पूर्वपदस्य दीर्घः प्रकृतिग्रहणे (१) प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुरशब्दस्तावन्त इत्याचष्टे । तं [तुरासाहम्] देवेन्द्रम् । अजादिषु साड्रूपलाभावात् सहेः साड़ः सः (२) ( ८, ३, ५६ पा० ) इति षत्वं न भवति । [पुरोधाय] पुरस्कृत्य । स्वयम्भुवो ब्रह्मण इदं [स्वायम्भुवम्] संज्ञापूर्वकविधेरनित्यत्वात् ओर्गुणः (६, ४, १४६ पा० ) (३)

---

(१) न हि वृतिवृषीत्यादिसूत्रे नह्यादीनां धातूनामेव ग्रहणेऽपि धातूनां केवलप्रयोगाभावात् कृताद्यन्ततया प्रातिपदिकस्यापि ग्रहणमिति अत एवात्र सूत्रे क्वावित्युक्तम् ।

(२) साड इति कृतडकाररूपणनिर्देशात् डत्वादेशपक्षे एव षत्वं नान्यत्र ।

(३) ओरोदिति करणेन एव रूपसिद्धेः अदेङ्गुण इति गुणसंज्ञापूर्वकतया निर्देशोऽनित्यतां ज्ञापयति तेनात्र न गुणः अपि तु वृद्धिरेव ।

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥
अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥३॥
नमस्त्रिमूर्त्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।

इति गुणो न। [धाम] स्थानं [ययुः] ब्रह्मलोकं अग
रित्यर्थः ॥ १ ॥

तेषामिति। [परिम्लाना] परिक्षीणा [मुखश्रीः] मु
कान्तिः येषां तथोक्तानां [तेषाम्] देवानां [ब्रह्मा] [सुप्तपद्मान
मुकुलितारविन्दानां [सरसाम्] [प्रातर्दीधितिमान्] सूर्य्य
[आविरभूत्] प्रकाशोऽभूदित्यर्थः। "प्रकाशे प्रादुराविः स्यात
इत्यमरः। सूर्य्योपमानेन तेषां ग्लानिहर्त्त्वं सूचितम्। अत
पमालङ्कारः। तल्लक्षणन्तु—"स्वतःसिद्धेन भिन्नेन सम्मतेन
धर्मतः। साम्यमन्येन वर्ण्यस्य वाचश्चेकपदोपमा॥" इति ॥

अथ इति। [अथ] आविर्भावानन्तरं [सर्वे ते] दे
[सर्वतः] समन्ततः मुखानि यस्य तं [सर्वतोमुखम्] चतुर्मु
मित्यर्थः। [वाचाम्] विद्यानाम् [ईशम्] [सर्वस्य] जग
[धातारम्] स्रष्टारं ब्रह्माणं [प्रणिपत्य] नमस्कृत्य अर्थाद
पेताभिः [अर्थ्याभिः] अर्थयुक्ताभिरित्यर्थः। धर्मपथ्यर्थन्याय
दनपेते (४, ४, ९२ पा०) इति यत्प्रत्ययः। [वाग्भिरुपतस्थि
तुष्टुवुरित्यर्थः। उपाद्देवपूजासङ्गतिकरणमित्रपथिष्वति वा
व्यम् (१, ३, २५ पा० वा०) इत्यात्मनेपदम् (१) ॥३॥

(१) पूजाद्यर्थे वर्त्तमानात् तिष्ठतेरुपपूर्वादात्मनेपदं स्यात

गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥
यदमोघमपामन्तरुप्तं बीजमज ! त्वया।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५ ॥

स्तुतिप्रकारमाह, नम इत्यादिभिर्द्वादशभिः श्लोकैः—

नम इति। हे भगवन्नित्यध्याहार्य्य (व्याख्येयम्। [सृष्टेः प्राक्] अन्यारादित्यादिना (२, ३, २९ पा०) अश्रुतरपद-योगे पञ्चमी। [केवलात्मने] एकरूपाय "आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतेः। "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः। [पश्चात्] सृष्टिप्रवृत्तिकाले। विभज्यते अनेनेति [विभागः] [गुणानाम्] सत्त्वादीनां [त्रयम्] एव विभागो यस्य तस्मै। "गुणाः सत्वं रजस्तम" इत्यमरः। [भेदम्] उपाधिं स्रष्टृत्वादिकमित्यर्थः [उपेयुषे] प्राप्तवते। उपेयिवाननाश्वाननूचानश्चेति (३, २, १०९ पा०) निपातः। अत एव [त्रिमूर्त्तये] ब्रह्मविष्णुरुद्ररूपिणे [तुभ्यं नमः] नमः स्वस्तीत्यादिना (२, ३, १६ पा०) चतुर्थी। उक्तञ्च। "नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च। तमोरूपाय संहारे त्रिरूपाय स्वयम्भुवे॥" इति॥ ४॥

यदिति। न जायते इत्यजः हे [अज !] [अपाम्] जला-नाम् [अन्तः] [त्वया यदमोघम्] अवन्ध्यम् [बीजम्] वीर्य्यम् [उप्तम्] निक्षिप्तम्। "मुक्तम्, इति पाठे विसृष्टमित्यर्थः। शुक्रं तेजोरेतसी च बीजवीर्य्येन्द्रियाणि च" इत्यमरः। [अतः] तो बीजात् [चराचरम्] स्थावरजङ्गमात्मकम्। समाहारे द्वन्द्वे-कवद्भावः। [विश्वम्] जगत् उत्पन्नमिति शेषः। तस्य विश्वस्य प्रभवत्यस्मादिति [प्रभवः] कारणं [गीयसे]। अत्र मनुः "अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं

तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्त्तेः सिसृक्षया।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥

सहस्रांशुसमप्रभम् ॥" इति। (१, अ० ८, ९, श्लो० ) "अदश्चर चरं विश्वं प्रसवस्तस्य गीयते" इति पाठे अद इदं चराच विश्वं तस्य बीजस्य प्रसवो गीयते लोके इति शेषः ॥५॥

तिसृभिरिति। [एकः] सृष्टेः प्राक् केवलः त्वं [तिसृभिरव स्थाभिः] त्रैगुण्यमयीभिः हरिहरब्रह्मस्वरूपाभिः [ महिमा नम्] निजशक्तिं [उदीरयन्] विजृम्भयन् [प्रलय स्थिति सर्गा नाम्] अन्तस्थित्युत्पत्तीनां [ कारणताम् गतः ] इदं "पश्चाद्भेद मुपेयुषे" इत्यस्य विवरणम् अतो न गतार्थत्वदोषः ॥६॥

भूतसृष्टिकर्त्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्त्तिमतो ब्रह्मणो भेदमाह,—

स्त्रीपुंसाविति। स्त्री च पुमांश्च [ स्त्रीपुंसौ। ] अचतुरेत्या दिना ( ५, ४, ७७ पा०) अच्प्रत्ययान्तो निपातः। [सिसृक्षयै स्रष्टुमिच्छया [भिन्नमूर्त्तेः] द्विधाकृतविग्रहस्य [ ते ] त आत्मनो देहस्य भागौ [आत्मभागौ।] "आत्मा जीवे धृ देहे स्वभावे परमात्मनि" इति विश्वः। [तावेव] भागौ [प्रसू तिभाजः] उत्पत्तिभाजः। सृज्यत इति [सर्गः] तस्य निजसृष्टे रित्यर्थः। माता च पिता च [पितरौ ] पिता मात्रेति (१ २, ७० पा०) एकशेषः [स्मृतौ] वृद्धैरिति शेषः। अत्र मनुः "द्विधा कृत्वात्मनो देहमर्द्धेन पुरुषोऽभवत्। अर्द्धेन नारी तस्य स विराजमसृजत्प्रभुः" इति ( १ अ०, ३२ श्लो० ॥ ७ ॥

स्वकालपरिमाणेन व्यस्तरात्रिन्दिवस्य ते।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥८॥
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥९॥

स्वकालेति। [स्वकालस्य परिमाणेन।] "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इत्युक्तरूपेण [व्यस्तम्] विभक्तं [रात्रिन्दिवम्] रात्र्यहनी यस्य तस्य। यद्यपि अचतुरादिसूत्रेण (५, ४, ७७ पा०) रात्रौ च दिवा च रात्रिन्दिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि दोषामन्य (१) मह्दर्दिवामन्या रात्रिरित्यादौ कर्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथञ्चित्प्रयोगबलादाश्रयणीयम्। [ते] तव [यौ तु स्वप्नावबोधौ] तौ एव [भूतानां प्रलयोदयौ] संहारसृष्टी। यदाहुः। "यदा स देवो जागर्त्ति तदेव चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते॥" (म० १अ०,५२ श्लो०) इति। एतच्च दैनन्दिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात्॥ ८॥

जगदिति। हे भगवन्! [त्वम् जगद्योनिः जगत्कारणं स्वयम् [अयोनिः] आदित्वात् अकारणकः [त्वम्] अन्तयतीत्यन्तः पचाद्यच्। [जगतः अन्तः] जगत्संहर्त्ता स्वयं [निरन्तकः] नित्यत्वात् अन्तरहितः। त्वं जगतामादिः [जगदादिः] स्रष्टा:

(१) स्वित्यनव्ययस्येति सूत्रे ऽव्ययस्य सुप्भावप्रत्युदाहरणतया भाष्यकृता दोषामन्यमहररिति दिवामन्या रात्रिरिति प्रत्युक्तं मह:, दिवा दिनं मन्यते इति दिवामन्या रात्रिरित्यादौ यथा दिवाशब्दस्य सप्तम्यन्तभिन्नद्वितीयान्तार्थपरता तथा इह अपि प्रथमार्थरूपप्रातिपदिकार्थपरत्वम्।

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥१०॥
द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥११॥

प्रागपि सन्नित्यर्थः। अत एव त्वम् [अनादिः] आदिरहितः। [त्वम् जगतामीशः] नियन्ता स्वयम् [निरीश्वरः] अनियस्य इत्यर्थः। "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतिरेवात्र प्रमाणम्। अत्र अयोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालङ्कारः। यथाहुः "विरोधाभासत्वे विरोधः" इति ॥ ९ ॥

तव तु न प्रपञ्चस्य इव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह,—आत्मानमिति। हे भगवन्! [त्वम् आत्मानम्] लोकानुग्रहार्थं ब्रह्मरूपेण उत्पिपादयिषितं स्वस्वरूपम् [आत्मना] एव [वेत्सि] जानासि सर्वापि क्रिया कर्त्तव्यार्थं ज्ञानपूर्विकेति भावः। तथा [आत्मानम्] [आत्मनैव] आत्मनि एवेत्यत्रापि सम्बध्यते स्वस्मिन्नेव [सृजसि] अधिष्ठानमपि स्वयमेव इत्यर्थः। "स्वे महिम्नि प्रतिष्ठितम्" इति श्रुतेः। [कृतिना] समर्थेन इदं सर्वत्र सम्बध्यते। [आत्मना] स्वेनैव [आत्मन्येव प्रलीयसे] स्वस्मिन्नेव प्रलीनो भवसि। लीयतेर्दैवादिकात् कर्त्तरि लट्। प्रकृत्यादिभ्य उपसंख्यानमिति (२, ३,१८ पा० सूत्रस्थात्) वार्त्तिकात् सर्वत्रात्मनेति तृतीया। न हि ते प्रपञ्चस्य इव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः॥ १० ॥

द्रव इति। त्वम् इत्यनुषज्यते। हे भगवन्! त्वं [द्रवः] सरित्समुद्रादिवत् रसात्मकोऽसि। [सङ्घातेन] निविड़संयोगेन

**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम्॥१२॥**

[कठिनः] महीधरादिवत्। [स्थूलः] इन्द्रियग्रहणयोग्यो घटादिवत्। [सूक्ष्मः] अतीन्द्रियः परमाण्वादिवत्। [लघुः] उत्पतनयोग्यः तूलादिवत्। [गुरुः] हेमाद्रिवत् अचलनीयः। [व्यक्तः] कार्य्यरूपोऽसि [ व्यक्तेतरः] कारणरूपश्चासि। एवं [विभूतिषु] अणिमादिषु [ते] तव प्रकामस्य भावः [प्राकाम्यम्] यथाकामत्वम्॥ ११ ॥

उद्घात इति। हे भगवन्! [यासाम्] [गिराम्] वाचाम् [उद्घातः] उपक्रमः [प्रणवः] ओङ्कारात्मकः। "ओङ्कारप्रणवौ समौ" इति "स्यादभ्यादानमुद्घात आरम्भः" इति च अमरः। इदमुपसंहारस्यापि उपलक्षणम्। "ब्रह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वतः। स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति॥" इति निरुक्तपरिशिष्टयोर्यास्कः। नीयन्ते एभिः अर्थविशेषा इति [न्यायाः] स्वराः। उक्तञ्च,—स्वरविशेषादर्थप्रतिपत्तिः। (१) यथेन्द्रशत्रुः स्वरतोऽपराधादिति। [यासां गिरां त्रिभिर्न्यायैः] उदात्तानुदात्तस्वरितैः (२) स्वरैः [उदीरणम्] उच्चारणम्।

---

(१) "दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्तीत्यादिः महाभाष्यधृता श्रुतिः मिथ्याप्रयुक्त इति यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं प्रतिपादयन् नाभिमतमर्थमाहेत्यर्थः। वागेव वज्रो हिंसकत्वात् यथा इन्द्रशत्रुशब्दः स्वरदोषात् यजमानं हतवान्। इन्द्रस्य शत्रुरित्यर्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये ऋत्विजा आद्युदात्तःप्रयुक्तस्तेन इन्द्र एव हन्तस्य शत्रुः सम्पन्न इति कैयटः।

(२) ताल्वादिषु उच्चैरुच्चरित उदात्तः नीचैः, अनुदात्तः, मध्यमः स्वरित इत्युक्तलक्षणैः।

त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥ १३॥

यासां [कर्म] प्रतिपाद्यमित्यर्थः [यज्ञः] ज्योतिष्टोमादिः न तु चैत्यवन्दनादिरिति भावः। [फलं स्वर्गः] कर्मद्वारेति शेषः। कर्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे। [त्वं तासां गिराम्] वेदानामित्यर्थः। प्रभवति अस्मादिति [प्रभवः] कारणम्। प्रणेता (१) स्मर्त्ता वा मतभेदेन॥ १२॥

साङ्ख्यमतेन स्तुवन्ति,—

त्वामिति। हे भगवन्! [त्वाम्] पुरुषस्यार्थौ भोगापवर्गरूपस्तदर्थं प्रवर्त्तत इति [पुरुषार्थप्रवर्त्तिनीम्] [प्रकृतिम्] त्रैगुण्यात्मकं मूलकारणम्। "प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इति यादवः। [आमनन्ति] कथयन्ति। म्ना अभ्यास इति धातोर्लट्। पाघ्राध्मास्थाम्नेत्यादिना (७, ३, ७८ पा०) मनादेशः। प्रकृतिपुरुषभेदाग्रहणात् प्रकृतिपुरुषाभेदव्यपदेशः (१)। [त्वामेव।] तां प्रकृतिं साक्षित्वेन पश्यतीति [तद्दर्शिनम्] उदासीनं कूटस्थं [पुरुषं विदुः] विदन्ति। विदो लटो वेति (३,४,८३ पा०) झेरुसादेशः। "अजामेकां लोहितशुक्लकृष्णाम् इति श्रुतिरत्र प्रमाणम्॥ १३॥

---

(१) तदस्य महाभूतस्य निश्वसितमेतद् यदृग्वेदः यजुर्वेदः सामवेदोऽथर्ववेदश्च इति श्रुतेः ईश्वरस्य वेदप्रणेतृत्वम् "न च वेदस्य कर्त्तारः स्मर्त्तारः सर्व एव हीति" मीमांसकमते स्मर्त्तारः पूर्वकल्पवेदसमानानुपूर्वीकमेवेह कल्पे प्राग्भवीयसंस्कारवशादृषयः स्मरन्ति न तु केऽपि कुर्वन्ति।

(२) प्रकृतिपुरुषयोरभेदेन व्यपदेशः व्यवहारः साङ्ख्यमते इति शेषः। वेदान्तिमते तु ब्रह्मण एव प्रकृतित्वम् "प्रकृतिश्च दृष्टान्तानुपरोधादिति" (२, ३, ५) सूत्रेण साधितम्।

त्वं पितॄणामपि पिता देवानामपि देवता।
परतोऽपि परश्चासि विधाता वेधसामपि ॥१४॥
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः।
वेद्यश्च वेदिता चापि ध्याता ध्येयश्च यत्परम् ॥१५
इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः।

त्वमिति। हे भगवन्! [त्वं पितॄणाम्] अग्निष्वात्तादीनामपि [पिता] तेषामपि तर्पणीय इत्यर्थः। [देवानाम्] इन्द्रादीनामपि [देवता] तेषामपि यजनीय इत्यर्थः। परतोऽपि परश्चासि सर्वोत्तरोऽसीत्यर्थः। "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महांस्ततः। महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इति सर्वोत्तरत्वाभिधानात्। [वेधसाम्] दक्षादीनामपि [विधाता] स्रष्टासि ॥ १४ ॥

त्वमेवेति। शश्वद्भवः शाश्वतः। शैषिकोऽण्प्रत्ययः यद्यपि कालाट्ठञिति ठञ् अपवादः अत एव सूत्रकारस्यापि प्रयोगः। येषाञ्च विरोधः शाश्वतिकः (२, ४, ९ पा॰) इति तथापि प्रयोगवशात् साधुरिति वामन इति। शाश्वतः प्रयुक्तः [शाश्वतस्त्वमेव] हूयत इति [हव्यम्] हविराज्यादिकम्। जुहोतीति [होता] यजमानश्चासि। [भोज्यम्] अभ्यवहार्य्यमन्नम्। भोज्यं भक्ष्ये (७,३,६९ पा॰) इति निपातनात् कुत्वाभावः। [भोक्ता] अत्तादश्चासि। [वेद्यम्] साक्षात्कार्य्यं वस्तु [वेदिता] साक्षात्कर्त्ता [चासि] [ध्याता] स्मर्त्ता [यत्परम्] वस्तु [ध्येयम्] तच्चासि। साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम् ॥ १५ ॥

प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥१६

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥१७

इतीति । [वेधाः] ब्रह्मा [इति तेभ्यः] देवेभ्यः । आख्यातोपयोगे (१, ४, २९ पा० ) इति अपादानत्वात् (१) पञ्चमी [यथार्थाः] सत्याः अत एव हृदयं गच्छन्तीति [हृदयङ्गमाः] मनोहराः । खच्प्रकरणे गमेः सुप्युपसंख्यानं ( ३, २, ३८ पा० वा० ) इति खच्प्रत्ययः । अरुर्द्विषत् अजन्तस्य मुमिति (६, ३, ६७ पा० ) मुमागमः । [स्तुतीः] स्तोत्राणि [श्रुत्वा] [प्रसादाभिमुखः] अनुग्रहप्रवणः सन् [दिवौकसः] देवान् [प्रत्युवाच] ॥ १६ ॥

अथ कविराह—पुराणस्येति । द्रव्यगुणक्रियाजातिभेदैः चत्वारोऽवयवा यस्या इति [चतुष्टयी] चतुर्विधा । संख्याया अवयवे तयप् (५, २, ४२ पा० इति तयप् । टिड्ढाणञ्द्वयसजित्यादिना (४, १, १५ पा० ) ङीप् । [शब्दानां प्रवृत्तिः] वैखरीप्रमुखा वाग्वृत्तिः । उक्तञ्च,—"वैखरी शब्दनिष्पत्तिः मध्यमा श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी" इति [पुराणस्य] पुरातनस्य पृषोदरादित्वात् साधुः [कवेः कवयितुः [तस्य] ब्रह्मणः [चतुर्भिर्मुखैः] [समीरिता] सती । तद्धितार्थेत्यादिना (२, १, ५१, पा० ) उत्तरपदसमासः समाहारे चतुर्मुखो स्यात् चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥ १७ ॥

---

( १ ) नियमपूर्वकविद्यास्वीकार उपयोगः तदर्थं आख्याता कथयिताऽपादानसंज्ञः स्यात् ।

स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ! ॥१८
किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥१९

भगवानाह। स्वागतमिति। हे प्राज्यविक्रमाः ! ] प्रभूत पराक्रमाः ! देवाः !। "प्राज्यं भूरि प्रभूतञ्च" इति यादवः। [स्वान्] स्वकीयान् [अधीकारान्] नियोगान्। उपसर्गस्य घञोति (६, ३,१२२पा० ) वा दीर्घः। [प्रभावैः] सामर्थ्यैः [अवलम्ब्य] आस्थाय। यथाधिकारं स्थित्वा अपीत्यर्थः। [युगपत्] समकालं [प्राप्तेभ्यः] युगपत् प्राप्त्या महत्कार्य्यमनुमीयते इति भावः। [युगबाहुभ्यः] दीर्घबाहुभ्य इत्यर्थः। आजानुबाहुत्वं भाग्यलक्षणम्। [वः] युष्मभ्यम्। बहुवचनस्य वस्नसाविति (८, १, २१ पा० ) वसादेशः। कर्मणा यमभिप्रैतीत्यत्र (१,४, ३२पा० ) (१) कर्मपदेन क्रियाग्रहणात् सम्प्रदानत्वम्। [स्वागतम् ?] शोभमानमागमनम् ? काकुरत्रानुसन्धेया ॥१८॥

किमिति। वत्सा इत्युत्तरश्लोकीयं सम्बोधनमत्रापि अनुषञ्जनीयम्। हे वत्साः !। पुत्रकाः ! [हिमेन] नीहारेण [क्लिष्टप्रकाशानि] मन्दप्रभाणि [ज्योतींषि] नक्षत्राणि [इव] "दीप्तिताराहुताग्नेषु ज्योतिः" इति शाश्वतः। [वः] युष्माकं [मुखानि] [पुरा यथा] पूर्वम् [इव] [आत्मीयां द्युतिं न बिभ्रति] इदं किम् ? किं निबन्धनमित्यर्थः किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥ १९ ॥

---

(१) कर्मणा क्रियाफलवता यमभिप्रैति स सम्प्रदानसंज्ञः स्यादित्यर्थके सूत्रे कर्मपदं क्रियापदमपि "कर्मक्रिये तत्सातत्ये" इत्यमरानुशासनात्।

प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम् ।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥२०॥
किञ्चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्य्यस्य फणिनो दैन्यमाश्रितः ॥२१॥
कुवेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः प्रशमादित्यादिभिः,—प्रशमादिति। [अर्चिषां] तेजसां [प्रशमात्] निर्वाणात् [अनुद्गीर्णसुरायुधम्] (१) अनुदितचित्रप्रभमित्यर्थः। [एतत् वृत्रस्य हन्तुः] इन्द्रस्य [कुलिशम्] वज्रं कुण्ठिता अश्रयो यस्य तत् [कुण्ठिताश्रि] कुण्ठितकोटि [इव] लक्ष्यते दृश्यते ॥ २० ॥

किञ्चेति। [किञ्चायम् अरिदुर्वारः] रिपुदुष्प्रधर्षः [प्रचेतसः] वरुणस्य। "प्रचेता वरुणः पाशी" इत्यमरः। [पाणौ पाशः] रज्जुः आयुधविशेषः। [मन्त्रेण] गारुडेन [हतवीर्य्यस्य] प्रतिबद्धशक्तेः [फणिनः] सर्पस्य [दैन्यम्] शोच्यत्वम् [आश्रितः] अत्र फणिनिष्ठदैन्यस्य पाशे असम्भवात् दैन्यमिव दैन्यमिति कल्पनात् असम्भवद्वस्तुसम्बन्धो निदर्शनालङ्कारः ॥ २१ ॥

कुवेरस्येति [अपविद्धा] त्यक्ता [गदा] येन सः [अपविद्धगदः] अत एव [भग्नशाखः] [द्रुम इव] स्थितः [कुवेरस्य बाहुः] [मनःशल्यम्] दुःखहेतुत्वात् मनसः शल्यप्रायमित्यर्थः। [परा-

---

(१) सुरायुधानां हि चित्रप्रभा स्वतःसिद्धा अत्र च अनुद्गीर्णसुरायुधम् अनुद्गीर्णसुरायुधत्वं भावप्रधाननिर्देशात् तदीयस्वाभाविकचित्रप्रभराहित्यमेवेह विवक्षितमित्याशयेन अनुदितचित्रप्रभमिति व्याख्यातम्।

यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥२३॥
अमी च कथमादित्याः प्रतापक्षतिशीतलाः ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥२४॥
पर्य्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥

भवम् ] अनुक्तमिति शेषः। [शंसतीव] कथयतीव लक्षणया अनुमापयतीत्यर्थः। वाङ्गी मुख्यकथनस्य असम्भवात् इवशब्दोऽपि अत एव ॥ २२ ॥

यमोऽपीति। अस्तं नाशम् इताः प्राप्ताः अस्तमिति मकारान्तमव्ययम्। तस्य द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैरिति (२, १, २४, पा०) समासः। [अस्तमितास्त्विषः] यस्य तेन निस्तेजस्केन [दण्डेन यमोऽपि भूमिं विलिखन्] [अमोघेऽपि] प्रागिति भावः। [अस्मिन् दण्डे] [निर्वाणालातस्य ] शान्तोल्मुकस्य। अलातं नाम भूलेखनशलाका तस्य यत् [ लाघवम् ] क्लैव्यं तत् [ कुरुते ] "अलातमुल्मुखं स्मृतम्" इति हलायुधः। निर्वाणोऽवात इति (८, २, ५० पा०) निपातनात् निष्ठानत्वम्। अत्रापि लाघवमिव लाघवमिति कल्पनात् निदर्शनालङ्कारः ॥ २३ ॥

अमी इति। [प्रतापक्षत्या] तेजसां क्षयेण [शीतलाः अमी आदित्याश्च] द्वादशेति शेषः [कथम्] केन हेतुना ? इत्यर्थः। [चित्रन्यस्ताः] चित्रलिखिताः [ इव ] [ प्रकामम् ] अत्यन्तम् [आलोकनीयताम्] दृश्यतां [गताः] प्राप्ताः ॥ २४ ॥

पर्य्याकुलत्वादिति। [मरुताम्] वायूनां सप्तसप्तानामिति

आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्द्धानः क्षतहुङ्कारशंसिनः ॥ २६ ॥
लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥
तद्ब्रूत वत्साः ! किमितः प्रार्थयध्वं समागताः ।

शेषः । [पर्य्याकुलत्वात्] स्खलितगतित्वात् हेतोः [वेगस्य भङ्ग
[अम्भसाम्] जलानां [प्रतीपगमनात्] उत्तानावरोहादित्यर्थः
[ओघस्य संरोधः] प्रवाहप्रतिबन्धः [इव] [अनुमीयते] ॥ २५ ॥

आवर्जितेति । [आवर्जितेषु] परिभवदुःखावनम्रेषु [जटा
मौलिषु] जटाजूटेषु [विलम्बिन्यः] स्रंसिन्यः [शशिकोटय
चन्द्ररेखा येषां ते तथोक्ताः [ रुद्राणामपि ] एकादशानामपि
शेषः [मूर्द्धानः] [क्षतं हुङ्कारं शंसन्ति] इति तथोक्ताः हुङ्कार
क्षत्यनुमापका इत्यर्थः । हुङ्कारशस्त्रा हि रुद्रा इति भावः ॥२६

लब्धेति । [प्रथमम्] पूर्वम् [ लब्धप्रतिष्ठाः ] लब्धस्थित
लब्धावकाशा इति अन्यत्र [यूयं बलवत्तरैः] पौरुषातिरेका
प्रबलतरैः । निरवकाशैः इति अपरत्र [परैः] शत्रुभिः [उत्सर्गाः
सामान्यशास्त्राणि "मा हिंस्यात्" इत्येवमादीनि । अपवाद
एभिरिति [अपवादैः] "गामालभेत" इत्यादिभिः विशेषशास्त्रै
[इव] [कृतव्यावृत्तयः] कृतप्रतिष्ठाभङ्गाः [किं ?] कृतविषयसङ्कोच
रूपबाधा इति अन्यत्र । विषयसङ्कोच एव बाध इत्याचार्याः
निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्था
नात् विषयसङ्कोच इति अलमतिगहनावगाहनेन ॥ २७ ॥

तदिति । [तत्] तस्मात् कारणात् हे [वत्साः ! ] पुत्रकाः
"वत्सस्तर्णकपुत्राद्योर्वर्षे वत्सन्तु वक्षसि" इति विश्वः ।

मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २९ ॥

स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥

प्रेतरमहत्वात् वत्साः ! इत्यामन्त्रयते । सम्भूय आगताः [समा-
ताः] [इतः] मत्तः [किं प्रार्थयध्वम् ?] किमिच्छतेत्यर्थः ।
भूत] । लोकरक्षणे यूयमेव कर्त्तार इत्याह,—[मयि लोकानां
ष्टिः, रक्षा युष्मासु अवस्थिता] । अतस्तदर्थमपि नास्ति
दपेक्षेत्यर्थः ॥ २८ ॥

तत इति । [ततः] भगवत्प्रश्नानन्तरं वासवः इन्द्रः [गुरुम्]
हस्पतिं "गुरू गोष्पतिपित्राद्यौ" इत्यमरः । [मन्दानिलो-
तः] यः [कमलाकरः] स इव [शोभते] इति तेन तथोक्तेन
त्राणां सहस्रेण] [नोदयामास] प्रेरयामास । सहस्रग्रहणम्
ास्थातिशयार्थम् । अनिमिषाणामपि प्रयत्नवशात् अक्षिस्पन्दो
विरुध्यते ॥ २९ ॥

स इति । [हरेः] इन्द्रस्य । "इन्द्रो दुश्च्यवनो हरिः" इति
लायुधः । सहस्रान्नयनेभ्योऽधिकं [सहस्रनयनाधिकम्] तत्
गोचरदर्शित्वादिति भावः । द्वे नेत्रे यस्य तत् [द्विनेत्रम्]
सिद्धात् चक्षुषोऽयं विशेष इत्यर्थः । [चक्षुः] चक्षुर्भूतः । चक्षु-
ारोपस्य प्रकृतोपयोगात्परिणामालङ्कारः । [स वाचस्पतिः]
स्कादित्वात् (८, ३, २८ पा०) अलुक्सत्वे । षष्ठ्याः पतिपुत्रे-
ादिना (८, ३, ५३पा०) सत्वमिति स्वामी तन्न छन्दोविषय-
ात् । [प्राञ्जलिः सन् जलजासनम्] ब्रह्माणम् [इदमुवाच] ॥३०

एवं यदात्थ भगवन्नाम्रष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥३१
भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥३२॥
पुरे तावन्तमेवास्य तनोति रविरातपम् ।

एवमिति। हे [भगवन् !] षड्गुणैश्वर्य्यसम्पन्न ! [यदात्थ "कृतव्याहृत्तयः परैः" इति यद्ब्रवीषि। ब्रुवः पञ्चानाम् (३, ८४ पा०) इत्यादिनाहादेशः। वर्त्तमानसामीप्ये वर्त्तमा वद्वेति (३, ३, १३१ पा०) वर्त्तमानप्रयोगः। वामन भ्रान्तोऽयं प्रयोग इत्याह। आहेति भूते णलन्तभ्रमवदिति आहेत्युपलक्षणम्। तदेव सत्यम् [नः] अस्माकं [पदम्] अधि कारः [परैः शत्रुभिः आम्रष्टम्] आक्रान्तम्। हे [प्रभो [प्रत्येकम्] प्रतिपुरुषं [विनियुक्तात्मा] प्रवेशितस्वरूपः सर्व न्तर्यामीत्यर्थः। [कथं न ज्ञास्यसि ?] न वेत्सि। वर्त्तमा ऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः। अपह्नवे ज्ञः अक काच्चेति (१, ३, ४४, ४५ पा०) आत्मनेपदविकल्पः ॥३१॥

उक्तमेव प्रपञ्चयति,—

भवल्लब्ध इति। [भवतः] त्वत्तः [लब्धेन वरेणोदीर्णः] उद्ध तारक इति आख्या नामधेयं यस्य सः [तारकाख्यः] महा असुरः [महासुरः] सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरि (२, १, ६१ पा०) तत्पुरुषः। [धूमकेतुः] उत्पातविशेषः [इ [लोकानामुपप्लवाय] उपद्रवाय [उत्थितः] उत्पन्नः ॥३२॥

पुर इति। [अस्य] तारकस्य [पुरे] [रविः] सूर्य्यः [ताव तावन्मात्रम् [एव] [आतपं तनोति] [यावन्मात्रेण] या

दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते ॥३३॥
सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥३४॥
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात्।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ३५

मेव यावतो मात्रा मितिर्यस्य यावन्मात्रं तेन वा। अल्पपरिमाणेन इत्यर्थः। "मात्रा परिच्छेदे ऽल्पे च परिमाणे। मात्रं कात्स्न्र्येऽवधारणे" इत्यमरः। [दीर्घिकासु] क्रीड़ावापीषु [कमलानामुन्मेषः] विकासः [साध्यते] निष्पाद्यते। कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रकाशते इत्यभिप्रायः॥ ३३॥

सर्वाभिरिति। [चन्द्रस्तम्] तारकं [सर्वदा] अप्यपक्षेऽपि इत्यर्थः। [सर्वाभिः कलाभिः निषेवते।] "कला तु षोड़शो भागः" इत्यमरः। [केवलां हरचूड़ामणीकृतां] शिवशिरोमणीकृतां [लेखां नादत्ते] न गृह्णाति॥ ३४॥

• व्यावृत्तेति। [वायुः] स्तेनस्य भावः कर्म वा [स्तेयं] चौर्य्यम्। स्तेनाद्यन्नलोपश्चेति (५, १, १२५ पा०) यत्प्रत्ययः नलोपश्च। [कुसुमानां स्तेयं] तस्मात् स्तेयाभियोगात् दण्डात् वा [साध्वसं] भयं तस्माद्धेतोः [उद्याने व्यावृत्तगतिः] निवृत्तोद्यानसञ्चारः सन्नित्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। [तत्पार्श्वे] तत्समीपे। तालस्य वृन्तमिवदृश्यते तालस्येव वृन्तमस्येति वा [तालवृन्तं] तस्य [अनिलात्] व्यजनसञ्चारपवनात् [अधिकम्] यथा तथा [न वाति] "व्यजनं तालवृन्तकम्" इत्यमरः॥ ३५॥

पर्य्यायसेवामुत्सृज्य पुष्पसम्भारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥
तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥ ३७ ॥
ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्य्युपासते ॥ ३८ ॥

पर्य्यायेति । [ऋतवः] षट् वसन्तादयः [पर्य्यायसेवाम्] क्रमसेवाम् [उत्सृज्य] पुष्पाणां सम्भारे] संग्रहे [ तत्पराः] आसक्ताः सन्त इत्यर्थः । "तत्परे प्रसितासक्तौ" इत्यमरः। [उद्यानपालैः] उद्यानाधिकृतैः [सामान्यम्] साधारणं यथा भवति तथा [तम्] तारकम् [उपासते] सेवन्ते शीतोष्णादि दोषप्रकाशनन्तु दूरापास्तमित्यर्थः ॥ ३६ ॥

तस्येति । [सरिताम्पतिः] समुद्रः [तस्य] तारकस्य [उपायनानाम्] प्राभृतानां [योग्यानि] "प्राभृतं तु प्रदेशनम् उपायनम्" इत्यमरः । [रत्नानि] [अम्भसामन्तः] [आ निष्पत्तेः] परिपाकपर्य्यन्तम् । विकल्पादसमासः । [कथमपि] महता यत्नेन [प्रतीक्षते] कदा वा परिपच्येरन्नित्येकाग्रेण पालयतीत्यर्थः ॥ ३७ ॥

ज्वलदिति । किञ्चेति चार्थः । [जलन्त्यो मणीनाम्] शिरोरत्नानां [शिखाः] ज्वालाः येषां ते [वासुकिप्रमुखाः भुजङ्गाः] सर्पाः शिङ्गाश्च ध्वन्यन्ते । "भुजङ्गः षिङ्गसर्पयोः" इत्यमरः। [निशि स्थिरप्रदीपताम्] अनिर्वाणदीपत्वम् [ एत्य ] [एनम्] तारकं [पर्य्युपासते] परिवृत्य सेवन्ते ॥ ३८ ॥

तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः ॥ ३९ ॥
इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः ॥ ४० ॥
तेनामरवधूहस्तैः सदयालूनपल्लवाः।
अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः ॥४१॥
वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः।
चामरैः सुरबन्दीनां वाष्पशीकरवर्षिभिः ॥ ४२ ॥

तत्कृतेति। [इन्द्रोऽपि] [तेन तारकेण कृतं तत्कृतमनुग्रहम्] प्रसादम् [अपेक्षते] इति तथोक्तः सन् [मुहुर्दूतहारितैः] दूतप्रापितैः [कल्पद्रुमाणां विभूषणैः] तत्प्रसूनैः इत्यर्थः। [तम्] तारकम् [अनुकूलयति] अनुकूलं करोति ॥ ३९ ॥

इत्थमिति। [इत्थम्] उक्तप्रकारेण रविशशिपवनोदधिभुजगमसुरेन्द्रैः। [आराध्यमानोऽपि] [भुवनत्रयं क्लिश्नाति] पीडयति। तथाहि, [दुर्जनः प्रत्यपकारेण] प्रतीकारेणैव [शाम्येत्] शान्तो भवेत् [उपकारेण तु न] शाम्येत् प्रत्युत प्रकुप्यतीति भावः ॥ ४० ॥

तेनेति। [तेन] तारकेण [अमरवधूहस्तैः] सुकुमारैरिति भावः। तैः अपि [सदयम्] [आलूनाः] अवतंसार्थं छिन्नाः [पल्लवाः] येषां ते [नन्दनद्रुमाः] छेदाश्च पाताश्च [छेदपाताः] तेषाम्, अभिजानन्तीति [अभिज्ञाः] तद्योगात् कर्मणि षष्ठी। [क्रियन्ते] ॥ ४१ ॥

वीज्यत इति। [हि] यस्मात् कारणात् [सः] तारकः

उत्पाट्य मेरुशृङ्गाणि क्षुसानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥४३
मन्दाकिन्याः पयःशेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम साम्प्रतम्॥४

[संसृतः] सन् [श्वाससाधारणः] निश्वाससमानः [अनिलः] शी[illegible] तैः ततोऽपि आधिक्ये निद्राभङ्गभयादिति भावः । [वाष्पशी[illegible] रवर्षिभिः ] तासां स्त्रीणां रोदनस्य अयमवसर इति भाव[illegible] [सुरबन्दीनाम्] सुरप्रग्रहस्त्रीणां सम्बन्धिभिः । "प्रग्रहोपग्र[illegible] वन्द्याम्" इत्यमरः । [चामरैर्वीज्यते] ॥ ४२ ॥

उत्पाट्येति । [तेन] तारकेण [हरिताम्] सूर्य्याश्वानाम[illegible] "हरित् सूर्य्ये च सूर्य्याश्वे वर्णे च हरिते दिशि" इति विश्व[illegible] [खुरैः] शफैः [क्षुसानि] चूर्णितानि । एतेन तेषाम् अत्यौन्[illegible] सूचितम् । [मेरुशृङ्गाणि उत्पाट्य] [स्वेषु वेश्मसु] । वेश्मस्वि[illegible] बहुवचनेन अस्य भुवनत्रयनिवासः सूचितः । आक्रीडन्ते एष्वि[illegible] [आक्रीडाः] ते च ते [पर्वताः कल्पिताः] कृताः ॥ ४३ ॥

मन्दाकिन्या इति । [साम्प्रतम्] सम्प्रति [मन्दाकिन्या[illegible] भागीरथ्याः [दिग्वारणानाम्] दिग्गजानां [ मदैराविलम्[illegible] कलुषं [पयः] जलमेव शिष्यते इति [शेषम्] शिष्टम् । कर्म[illegible] घञ् प्रत्ययः । त्रिषु अन्यत्रोपयुज्यते इति(१)नपुंसकत्वम् । त[illegible] कनककमलानि क्व गतानीत्याह,—हेमेति । [हेमाम्भोरुहाणि] एव [ सस्यानि] तेषान्तु, तस्य वाप्यः [तद्वाप्यः एव धाम] स्थानम् । सर्वाणि अपि उत्पाट्य स्वदीर्घिकासु एव प्रति[illegible] रोपितवान् इत्यर्थः ॥ ४४ ॥

---

(१) स्त्रीनपुंसकयोः शेष इत्यनेन क्लीवत्वमित्येव न्यायः

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते।
खिलीभूते विमानानां तदापातभयात् पथि ॥४५
यज्वभिः सम्भृतं हव्यं विततेष्वध्वरेषु सः।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥४६
उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥

भुवनेति। [तस्य] तारकस्य [आपातात्] समायत्तेः [भयात्] [ विमानानां पथि खिलीभूते ] अप्रहतीभूते सति। "द्वे खिलाप्रहते समे" इत्यमरः। [स्वर्गिभिः देवैः [भुवनानामालोकने प्रीतिर्नानुभूयते] ॥ ४५ ॥

यज्वभिरिति। [यज्वभिः] विधिवत् इष्टवद्भिः "यज्वा तु विधिनेष्टवान्" इत्यमरः। सुयजोर्ङ्वनिप् [३, २, १०३ पा॰] इति ङ्वनिप्प्रत्ययः। [विततेषु अध्वरेषु] यज्ञेषु [सम्भृतम्] दत्तं [हव्यम्] हविः [मायी] मायावी। (५, २, ११६ पा॰) व्रीह्यादित्वात् इनिप्रत्ययः। [सः] तारकः [नः] अस्माकं [मिषताम्] पश्यतां पश्यत्सु सत्सु इत्यर्थः। षष्ठी चानादरे (१) (२,३,३पा॰) इति षष्ठी। जातवेदाः वह्निरेव मुखं तस्मात् [जातवेदोमुखात्] [आच्छिनत्ति] आच्छिद्य गृह्णातीत्यर्थः ॥ ४६ ॥

उच्चैरिति। किञ्चेति चार्थः। [तेन] तारकेण [उच्चैः]उन्नतः [उच्चैःश्रवाः] नाम हयो रत्नमिव [हयरत्नम्] अश्वश्रेष्ठः। "रत्नं श्रेष्ठे मणावपि" इति विश्वः। अस्य शुभ्रत्वात् उत्प्रेक्षते,—[देहबद्धम्] बद्धदेहं मूर्त्तिमदित्यर्थः। ( २, २, ३७ पा॰ ) आहिता-

(१) अनादरे गम्ये भावलक्षणप्रवृत्तौ गम्यायां षष्ठी चात् सप्तमी स्यात्।

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्य्यवन्त्यौषधानीव विकारे सान्निपातिके ॥४८॥
जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥४९
तदीयास्तोयदेष्वद्य पुष्करावर्त्तकादिषु ।

ग्न्यादित्वान्निष्ठायाः परनिपातः। [चिरकालार्ज्जितम् इन्द्रस्य यश इव अहारि] अपहृतम् ॥ ४७ ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ताः ? इत्यत्राह,—

तस्मिन्निति। [क्रूरे] घातुके। "नृशंसो घातुकः क्रूर" इत्यमरः [तस्मिन्] असुरे [नः] अस्माकं [सर्वे उपायाः] सन्निपातदोषत्रयस्य प्रकोपजे [सान्निपातिके विकारे] ज्वरादौ। सन्निपाताच्चेति (५, २१ पा० वा० ) वक्तव्यात् ठक्। [वीर्य्यवन्ति] सारवन्ति [ औषधानीव ] [प्रतिहतक्रियाः] विफलप्रयोगाः भवन्ति ॥ ४८ ॥

तदेव प्रतिहतक्रियत्वमाह—

जयेति। किञ्चेति चार्थः। नूनमनेन हरिचक्रेण वयं जेष्याम इति [यत्र] हरिचक्रे [अस्माकं जयाशा] विजयाशंसा आसीदिति शेषः। [प्रतिघातेन] प्रतिहत्या [उत्थितार्च्चिषा] उन्नततेजसा [तेन हरिचक्रेण] विष्णोः सुदर्शनेन [अस्य] तारकस्य [कण्ठे] [निष्कम्] उरोभूषणम् [अर्पितमिव] इत्युत्प्रेक्षा स्वयमेव निष्कमिव स्थितम् इत्यर्थः। तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं, तदपि नष्टशक्ति जातमिति भावः। "साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले। दीनारेऽपि च निष्कोऽस्त्री" इत्यमरः ॥ ४९ ॥

अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥५०

तदिच्छामो विभो ! स्रष्टुं सेनान्यं तस्य शान्तये।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित्।
प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥५२॥

तदीया इति। [अद्य] सम्प्रति [निर्जित ऐरावतः] यैः ते तथोक्ताः तस्य तारकस्य इमे [तदीयाः गजाः] [पुष्करावर्त्तकाद्य] नाम [आदयः] येषां तेषु [तोयदेषु] मेघेषु [तटाघातम्] वप्रक्रीड़ाम् [अभ्यस्यन्ति] ॥ ५० ॥

तदिति। [तत्] तस्मात् कारणात् हे [विभो !] स्वामिन् ! मोक्तुं भवं त्यक्तुम् इच्छवः [मुमुक्षवः] विरक्ताः [भवस्य] संसारस्य [शान्तये] निवृत्तये] कर्मैव बन्धः तं छिनत्तीति [कर्मबन्धच्छित्] तं [धर्ममिव] आत्मज्ञानहेतुभूतमिति शेषः। "तमेव विदित्वातिमृत्युमेतीति" ज्ञानादेव मुक्तिः। तस्य तारकस्य [शान्तये] नाशाय। सेनां नयतीति सेनानीः चमूपतिः। सत्सूद्विषेत्यादिना ( ३, २, ६१ पा० ) क्किप्। तं [सेनान्यम्] कञ्चित् [स्रष्टुमिच्छामः] वयमिति शेषः ॥ ५१ ॥

सेनानीसृष्टेः फलमाह,—
गोप्तारमिति। [सुरसैन्यानां] देवतासेनानां [गोप्तारम्] रक्षितारं [यम्] सेनान्यं [पुरस्कृत्य] पुरोधाय पुरोऽव्ययमिति (१, ४, ६७ पा०) गतित्वात् नमस्पुरसोर्गत्योः (१) (८, ३, ४०पा०)

(१) अव्ययं पुर इति शब्दः गतिसंज्ञः स्यात्।
(२) गतिसंज्ञयोर्नमस्पुरःशब्दयोर्विसर्गस्थाने स स्यात् कखपफेषु परेषु।

वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥५३
सम्पत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम्
न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥५४
इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।

इति सकारः । गां पृथ्वीं त्रायन्ते इति गोत्रास्तान् भिनत्तीति [गोत्रभित्] इन्द्रः [जयश्रियं वन्दीमिव] वन्दीकृतां स्त्रियमिव [शत्रुभ्यः] सकाशात् [प्रत्यानेष्यति] प्रत्याहरिष्यति, तं स्रष्टुम इति पूर्वेण सम्बन्धः ॥ ५२ ॥

वचसीति । [तस्मिन्] वार्हस्पत्ये [वचसि अवसिते] परिसमाप्ते सति [आत्मभूः] ब्रह्मा [गिरं] वाचं [ससर्ज] जगाद इत्यर्थः । [सा] गीः [सौभाग्येन] मनोहरत्वेन । हृद्भगसिन्ध्वन्ते पूर्वपदस्य च (७, ३, १८ पा०) इत्युभयपदवृद्धिः । [गर्जितात्] गर्जितस्य वा [अनन्तरम्] प्रवृत्तां [वृष्टिं जिगाय] जितवती। गर्जितपरत्वाद् वृष्टेरिव तद्विज्ञापनफलत्वात् गिरः सुभगत्वमिति भावः ॥ ५३ ॥

सम्पत्स्यत इति । [अयं वः] युष्माकं [कामः] मनोरथः सेनानीरूपः [सम्पत्स्यते] सेत्स्यति । [कश्चित्] कियानपि [कालः प्रतीक्ष्यताम्] [तु] किन्तु [अस्य] सेनान्यः [सिद्धौ] सिद्धिविषये [आत्मना] स्वयं [सर्गः] सृष्टिरेव [व्यापारः] तम् [न यास्यामि] नाहं स्रक्ष्यामीत्यर्थः ॥ ५४ ॥

कुत इत्याशङ्क्याह,—

इत इति । [इतः] मत्त एव [प्राप्तश्रीः] लब्धोदयः [स दैत्यः]

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्॥५५॥
वृतं तेनेदमेव प्राक् मया चास्मै प्रतिश्रुतम्।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः॥५६॥
संयुगे सांयुगीनं तमुद्यतं प्रसहेत कः।

तारकासुरः [इतः] मत्त एव [वृद्धिं प्राप्य] नार्हति।] तथाहि—अन्यो वृक्षस्तावदास्तां, विषस्य वृक्षः [विषवृक्षोऽपि संवर्ध्य] कुतश्चित्कारणात् सम्यक् वर्द्धयित्वा [स्वयं छेत्तुम् असाम्प्रतम्] अनर्हः। असाम्प्रतमित्यनेन निपातेन अभिहितत्वात् वृक्ष इति द्वितीयान्तो न भवति, अनभिहिते कर्मणि द्वितीयाभिधानात्। यथाह वामनः। निपातेनापि अभिहिते कर्मणि न विभक्तिः परिगणनस्य (१) प्रायिकत्वादिति॥ ५५॥

वृतमिति। [प्राक्] पूर्वं [तेन] असुरेण इदमेव देवैरवध्यत्वमेव [वृतम्] प्रार्थितम्। [मया] चास्मै तारकाय [प्रतिश्रुतम्] प्रतिज्ञातम् प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्तेति (१,४,४०पा०)(२) सम्प्रदानत्वाच्चतुर्थी। कर्त्तव्यञ्च तदित्याह,—[लोकान् दग्धुम् अलम्] समर्थम्। पर्याप्तिवचनेषु अलमर्थेषु इति (३,४,६६पा०) तुमुन्प्रत्ययः। तस्य तपः [तत्तपः वरेण] वरदानेन [शमितं हि] मयेति शेषः॥ ५६॥

संयुग इति। [संयुगे] युद्धे [उद्यन्तम्] व्याप्रियमाणम्।

---

(१) "उभसर्वतसोः कार्या धिगुपर्य्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" इत्यनेन अन्याव्ययशब्दयोगेऽपि द्वितीयाविधानात् यावदादिमेव नेह द्वितीया तस्य प्रायिकत्वादित्याह परिगणनस्येति।

(२) प्रत्याङ्पूर्वस्य श्रुवः याचनपूर्वकाङ्गीकारार्थकतया याचनरूपव्यापारस्य कर्त्ता सम्प्रदानसंज्ञः स्यात्।

अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ५७ ॥
स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥५८॥
उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लौहवत् ॥ ५९ ॥

संयुगे साधु [सांयुगीनम्] प्रतिजनादिभ्यः खञिति (४, ४, ९९ पा०) खञ्प्रत्ययः। [तम्] तारकं [निषिक्तस्य] क्वचिदेव क्षरितस्य। "नीलः कण्ठे लोहितश्च केशेषु" इति नीललोहित इति पुराणमिति स्वामी। तस्य [नीललोहितस्य] धूर्जटेः [रेतसः] शुक्रस्य [अंशादृते] अंशं विना [अन्यः कः प्रभ]वेत] अभिभवेत्। प्रसहनमभिभव इति वृत्तिकारः ॥५७॥

कथमसावीदृक्शक्तिः ? इत्याह—

स इति। [स देवः] नीललोहितः [तपसः पारे] पर [व्यवस्थितम्] तमोगुणातीतं [परम् ज्योतिः] परमात्मा अत एव [मया परिच्छिन्नप्रभावर्द्धिः] अवगाढमहिमा शयो न भवति तथा [विष्णुना च न], अतस्तस्य असा नास्तीत्यर्थः ॥५८॥

सम्प्रति तदंशोत्पत्तौ उपायं दर्शयति—,

उमेति। [ते] कार्य्यार्थिनः [यूयम्] [संयमस्तिमितम्] समा निश्चलं [शम्भोर्मनः] [उमारूपेण] उमासौन्दर्य्येण। "रू स्वभावे सौन्दर्य्ये नाणके पशुशब्दयोः। ग्रन्थावृत्तौ नाटकादा वाकारश्लोकयोरपि॥" इति विश्वः। [अयस्कान्तेन] मणिवि षेण कस्कादिषु चेति (८, ३, ४८ पा०) सकारः। [लौहव अयोधातुमिव। तेन तुल्यं क्रिया चेद्वतिरिति (५, १, ११

उभे एव क्षमे वोढुमुभयोर्वीजमाहितम्।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम ॥६०

अस्यात्मा शितिकण्ठस्य सैनापत्यमपेत्य वः।
मोक्ष्यते सुरवन्दीनां वेणीर्वीर्य्यविभूतिभिः ॥६१॥

पा०) वतिप्रत्ययो मुख्यः (१)। [आक्रष्टुम्] आहर्त्तुम् [यतध्वम्] उद्युक्ता भवत ॥ ५९ ॥

न च गत्यन्तरमस्तीत्याह,—

उभे इति। [उभयोः] शम्भोर्मम च [आहितम्] निषिक्तम् [वीजम्] तेजः [वोढुम्] सोढुं [सा वा] उमा शम्भोः, अष्टमूर्त्तेः तस्य इयं [तदीया जलमयी मूर्त्तिर्वा] [मम] [उभे एव क्षमे] न तृतीयेत्यर्थः। वाशब्दो द्वन्द्वार्थे न तु अन्यार्थे। एतदेव उदाहृत्य इत्थमेव व्याख्यातं गणव्याख्याने। अत्र दीपकालङ्कारः। प्राकरणिकयोः उमामहेश्वरयोः अप्रकारणिकयोः अग्निजलमूर्त्त्योश्च औपम्यस्य गम्यत्वात्। यथाह भोजराजः,—"प्रस्तुतानामप्रस्तुतानाञ्चौपम्यस्य गम्यत्वे दीपकम्" इति। न च इयं तुल्ययोगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतत्वेन च उत्थानादिति ॥ ६० ॥

तस्येति। [तस्य शितिकण्ठस्य] अष्टमूर्त्तेः [आत्मा] पुत्र इत्यर्थः। "आत्मा वै पुत्रनामासि" इति श्रुतेः। [वः] युष्माकं सेनापतेर्भावः [सैनापत्यम्] पत्यन्तपुरोहितादिभ्यो यगिति (५, १, १२८ पा०) यक्प्रत्ययः। [उपेत्य] प्राप्य [वीर्य्यविभू-

(१) क्रिया हि व्यापाररूपा कर्त्तृनिष्ठा तस्या एव क्रियावाचत्वात् फलपरत्वे लक्षणा इत्याशयेन मुख्य इत्युक्तम्। तथाच कर्त्तृनिष्ठक्रियातुल्यक्रियाबोधने इव कर्मनिष्ठफलसदृशफलरूपक्रियाबोधकत्वेऽपि वतिप्रत्ययः स्यादेवेत्याकरे मुख्यम्।

इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्त्तव्यास्तेऽपि देवा दिवं ययुः ॥६२॥

तत्र निश्चित्य कन्दर्पमगमत् पाकशासनः ।
मनसा कार्य्यसंसिद्धित्वराद्विगुणरंहसा ॥६३॥

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।

तिभिः] शौर्य्यसम्पत्तिभिः [सुरवन्दीनां वेणीर्मोक्ष्यते] विस्रंसयिष्यति तारकासुरं हनिष्यतीति भावः ॥ ६१ ॥

इतीति । [विश्वस्य योनिः] कारणम् । "योनिः स्त्रीस्थानभेदे कारणे ताम्रिके पणे" इति वैजयन्ती । [विबुधान्] सुरान् [इति व्याहृत्य] अभिधाय [तिरोदधे] अन्तर्हितवान् [ते] देवा [अपि] [मनसि आहितं कर्त्तव्यम्] यैः ते तथोक्ताः सन्तः [दिवम्] स्वर्गं [ययुः] प्रापुः ॥६२॥

तत्रेति । [पाकः] नाम कश्चिदसुरः तस्य [शासनः] इन्द्रः [तत्र] हरचित्ताकर्षणकृत्ये [कन्दर्पं निश्चित्य] साधकत्वेनेति शेषः । [कार्य्यसंसिद्धौ त्वरया] औत्सुक्येन द्वौ गुणौ यस्य मन [द्विगुणम्] द्विरावृत्तं [रंहः] वेगो यस्य तेन तथोक्तेन । "गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । [मनसा अगमत्] सस्मार इत्यर्थः । गमेर्लुङ् च्लेरङादेशः ॥६३॥

अथेति । [अथ] स्मरणानन्तरं स स्मृत इत्यर्थः । पुष्पं धनुः यस्य सः [पुष्पधन्वा] कामः । वा संज्ञायाम् (१) (५, ४, १३३ पा०) इत्यनङ् । "ललितं त्रिषु सुन्दरम्" इत्यमरः ।

(१) धनुरन्तादबहुव्रीहेरनङ् स्याद्वा संज्ञायाम् ।

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥६४॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः ॥ २ ॥

ललितायाः] सुन्दर्य्याः [योषितः भ्रुवौ लते] इव [ चारुणी ङ्गे] कोटी यस्य तत् तथोक्तम् [चापम्] [रतिः] स्मरप्रिया। रतिः स्मरप्रियायाम्" इत्यमरः। तस्याः [वलयपदानि] कङ्कण- ानानि [अङ्कः] चिह्नं यस्य स तथोक्ते [कण्ठे आसज्य] लग- त्वा। चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेः त्रिभुवनैक- रस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते। [सहचरस्य] ख्युः [ मधोः ] वसन्तस्य [हस्ते न्यस्तम् चूताङ्कुरम्] एव स्त्रम्] यस्य स तथोक्तः। [ प्राञ्जलिः ] कृताञ्जलिः सन् तमखम्] इन्द्रम् [उपतस्थे] सङ्गतवान्। (१, ३, २५ पा० ०) सङ्गतिकरणार्थात् आत्मनेपदम्। अत्र स्वभावोक्तिः स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्" इति। मालिनीवृत्त- तम्। "न न म य य युतेयं मालिनी भोगिलोकैः" इति लक्षणात्॥ ६४ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविर- चितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमा- ख्यायां द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ।

तस्मिन् मघोनस्त्रिदशान् विहाय
सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां
प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

तस्मिन्निति । [मघोनः] इन्द्रस्य [अक्ष्णां सहस्रम्] त्रिर वृत्ता दश परिमाणमेषामिति [त्रिदशान्] देवान् । संख्यय व्ययासन्नादूराधिकसंख्याः संख्येये (२, २, २५ पा०) इति ( बहुव्रीहिः । बहुव्रीहौ संख्येये ( ५, ४, ७३ पा० ) इति (२) ड प्रत्ययः । उक्तार्थत्वात् सुचो निवृत्तिः (३) [ विहाय] त्व [तस्मिन्] कामे [युगपत् पपात] । सहस्रेण अक्षिभिः अद्राक्षी इति आदरातिशयोक्तिः । ननु सुचिरपरिचितानेकसुरपरित्यागे भगवतो महेन्द्रस्य कथम् अकाण्डे तस्मिन्नेकस्मिन् पक्षपातः इत्याशङ्क्य अर्थान्तरं न्यस्यति,—[प्रायः] भूम्ना [प्रभूणामाश्रितेषु सेवकेषु विषये [गौरवम्] आदरः [प्रयोजनापेक्षितया कार्य र्थित्वेन हेतुना [चलम्] चञ्चलम् । फलतन्त्राः प्रभवः न गुणतन्त्रा इति भावः ॥ १ ॥

---

( १ ) संख्येयेऽर्थे वर्त्तमानया संख्यया सह अव्ययादयः सम स्यन्ते स बहुव्रीहिः ।

( २ ) संख्येयेऽर्थे वर्त्तमानात् संख्यान्तबहुव्रीहेर्डच् स्यात्

( ३ ) समासेनैव सुजर्थस्याभिधानात् उक्तार्थानामप्रयो इत्युक्तः सुचो निवृत्तिः ।

स वासवेनासनसन्निकृष्टम्
इतो निषीदेति विसृष्टभूमिः।
भर्त्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना
वक्तुं मिथः प्राक्रमतैवमेनम् ॥ २ ॥

आज्ञापय ज्ञातविशेष! पुंसां
लोकेषु यत् ते करणीयमस्ति।
अनुग्रहं संस्मरणप्रवृत्तम्
इच्छामि संवर्द्धितमाज्ञया ते ॥ ३ ॥

स इति। [सः] कामः [वासवेन] इन्द्रेण आसनस्य सिंहासनस्य सन्निकृष्टं सन्निहितम् [आसनसन्निकृष्टम्] यथा तथा। षष्ठ्यायं समासः। •कृद्योगलक्षणया तु न लोकाव्ययनिष्ठाखलर्थतृनामिति (२, ३, ६९ पा०) षष्ठीनिषेधात्। [इतो निषीद] इह उपविश [इति विसृष्टभूमिः] दत्तावकाशः सन् [भर्त्तुः] स्वामिनः [प्रसादम्] अनुग्रहं [मूर्ध्ना प्रतिनन्द्य] सम्भाव्य [मिथः] रहसि। "मिथोऽन्योऽन्यं रहस्यपि" इत्यमरः। [एनम्] इन्द्रम् [एवम्] वक्ष्यमाणप्रकारेण [वक्तुं प्राक्रमत] उपक्रान्तवान्। प्रोपाभ्यां समर्थाभ्याम् (१, ३, ४२ पा०) इत्यात्मनेपदम् ॥ २ ॥

आज्ञापयेति। हे [पुंसां ज्ञातविशेष!] ज्ञातसार! ज्ञातविशेष इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। [आज्ञापय].तदिति शेषः। उत्तरवाक्ये यच्छब्दप्रयोगात् न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः। किं तदित्याह,—[लोकेषु ते] तव [यत् करणीयम्] कर्त्तव्यम् [अस्ति]। [संस्मरणेन प्रवृत्तम्] उत्पन्नं

केनाभ्यसूया पदकाङ्क्षिणा ते
नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य
मत्कार्मुकस्यास्य निदेशवर्त्ती ॥ ४ ॥
असम्मतः कस्तव मुक्तिमार्गं
पुनर्भवक्लेशभयात् प्रपन्नः ।

[ते] तव [अनुग्रहम्] प्रसादम् [आज्ञया] नियोगेण [संवर्द्धि तम्] वृद्धिं गमितम् [इच्छामि] संस्मरणक्तमनुग्रहं केनचि नियोगेन वर्द्धय क्वचित्कर्मणि नियुङ्क्ष्व इत्यर्थः। अन्यथा नास्ति परितोष इति भावः। तुमुन्नन्तपाठे णिजर्थे (२) यत्न कार्य्यः ॥ ३ ॥

न च मे किञ्चिदसाध्यमस्तीत्याह,—

केनेति। [पदकाङ्क्षिणा] स्वाराज्यकामेन [ केन ] पुंसा [नितान्तदीर्घैः] अतिप्रभूतैः [तपोभिः] [ते] तव [अभ्यसूया] ईर्ष [जनिता] तं ब्रूहीति शेषः। किमर्थं [यावत्] यतः स भवद्वैर [आहितसायकस्य] संहितवाणस्य [ अस्य मत्कार्मुकस्य] निदेशे वर्त्तते इति [निदेशवर्त्ती] आज्ञावशः [भवति] अविलम्बेनैव भविष्यतीत्यर्थः। वर्त्तमानसामीप्ये वर्त्तमानवद्वा (३, ३, १३१ पा०) इति लट् ॥ ४ ॥

सम्प्रति चतुर्वर्गे मोक्षमधिकृत्य आह,—

असम्मत इति। [तव असम्मतः कः] [पुनर्भवः] पुनरुत्पत्ति

---

( १ ) णिजन्ते वर्द्धयितुमित्येव स्यात् तच्च णिलोपे सूत्राभावात् यत्नः निपातनादिः कार्य्यः।

बद्धश्चिरं तिष्ठतु सुन्दरीणाम्
आरेचितभ्रूचतुरैः कटाक्षैः ॥ ५ ॥
अध्यापितस्योशनसापि नीतिं
प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीडयामि
सिन्धोस्तटावोघ इव प्रवृद्धः ॥ ६ ॥
कामैकपत्नीव्रतदुःखशीलां

संसार इति यावत् तत्र ये [क्लेशाः] जन्मजरामरणादयस्तेभ्यः (भयात्) [मुक्तिमार्गं प्रपन्नः] तं वद। यतः सोऽपि [आरेचिताभिः] एकैकशो विवर्त्तिताभिः [भ्रूभिश्चतुरैः] [सुन्दरीणां कटाक्षैः [बद्धश्चिरं तिष्ठतु] आरेचितलक्षणन्तु,—"स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम्। तयोर्मूलसमुत्क्षेपं कौटिल्याद्भ्रूकुटिं विदुः॥" इति ॥ ५ ॥

धर्मार्थौ अधिकृत्याह,—

अध्यापितस्येति। [उशनसा] शुक्रेण [नीतिम्] नीतिशास्त्रम् [अध्यापितस्यापि] अपिशब्दात् शुक्रशिष्याणाम् अप्रधृष्यत्वं गम्यते। गतिबुद्धीत्यादिना (१, ४, ५२ पा०) द्विकर्मकादिङ्-धातोर्ण्यन्तात्प्रधाने कर्मणि क्तः "अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मणः" इति वचनात्। [ते द्विषः] तव शत्रोः [कस्य अर्थधर्मौ] [प्रयुक्तः] प्रहितः [रागः] विषयाभिलाष एव [प्रणिधिः] दूतो येन सोऽहम्। "प्रणिधिः प्रार्थने चरे" इति यादवः। [प्रवृद्धः ओघः] प्रवाहः [सिन्धोः] नद्याः [तटाविव पीडयामि ?] [वद] ॥ ६ ॥

लोलं मनश्चारुतया प्रविष्टाम्।
नितम्बिनीमिच्छसि मुक्तलज्जां
कण्ठे स्वयङ्ग्राहनिषक्तबाहुम् ॥ ७ ॥
कयासि कामिन् ! सुरतापराधात्
पादानतः कोपनयावधूतः।
तस्याः करिष्यामि दृढानुतापं
प्रवालशय्याशरणं शरीरम् ॥ ८ ॥

काममधिकृत्याह,—

कामिति। एकः पतिर्यस्याः सा [एकपत्नी] पतिव्रता। नि सपत्न्यादिषु इति (४, १, ३५ पा०) ङीप्। तस्याः [व्रत पातिव्रत्यं तेन [दुःखशीलां दुःखस्वभावां दृढव्रताम् इत्यर्थ "शीलं स्वभावे सद्वृत्ते" इत्यमरः। [चारुतया] सुन्दरत्वे हेतुना [लोलं मनः] त्वच्चित्तं [प्रविष्टां कां नितम्बिनी नारीं [मुक्तलज्जाम्] सतीं [कण्ठे] [स्वयङ्ग्राहनिषक्तबाहुम् स्वयं गृह्णातीति स्वयङ्ग्राहाः। विभाषा ग्रह इति (३, १,१४ पा०) णप्रत्ययः। न च जलचर एव ग्राह इति नियमः जलच ग्राह एवेति नियमादिति। स्वयङ्ग्राहा च सा निषक्तबाहु तां तथाभूताम् [इच्छसि] त्वदर्थं पतिव्रतामपि व्रताद्भ्रंश यिष्यामीत्यर्थः। एतच्चेन्द्रस्य पारदारिकत्वादुक्तम्। तथा श्रुतिः। "अहल्यायै जारः" इति ॥ ७ ॥

त्रिविधा नायिका, स्वकीया परकीया साधारणी चेति तत्र परकीयां प्रति उक्तम्। इतरे प्रत्याह,—

कयेति। हे [कामिन् !] कामुक! [सुरतापराधात्] अन्य सङ्गादित्यर्थः। [पादानतः] प्रणतः सन् [कोपनया] कोप

प्रसीद विश्राम्यतु वीर ! वज्रं
शरैर्मदीयैः कतमः सुरारिः ? ।
बिभेतु मोघीकृतबाहुवीर्य्यः
स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥

तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा ।
कुर्य्यां हरस्यापि पिनाकपाणेः
धैर्य्यच्युतिं के मम धन्विनोऽन्ये ? ॥१०॥

शीलया [कया] स्त्रिया [अवधूतः] तिरस्कृतोऽसि। [तस्याः शरीरं दृढ़ानुतापम्] गाढ़पश्चात्तापम् अतएव [प्रबालशय्याशरणं करिष्यामि] इति ॥ ८ ॥

प्रसीदेति। हे [वीर ! प्रसीद] प्रसन्नो भव वज्रम्] कुलिशम् [विश्राम्यतु] उदास्तामित्यर्थः। [मदीयैः शरैर्मोघीकृतबाहुवीर्य्यः] विफलीकृतभुजशक्तिः [कतमः] दैत्यदानवादिषु यः कश्चन [सुरारिः ?]। वा बहूनां जातिपरिप्रश्ने डतमच्)५, ३, ९३ पा०) इति डतमच्प्रत्ययः। [कोपेन स्फुरिताधराभ्यः स्त्रीभ्योऽपि बिभेतु] किमु वक्तव्यं पुंभ्य इत्यर्थः सकलेभ्यः सर्वतो बिभेतीति भावः। भीत्रार्थानां भयहेतुः (१, ४, २५ पा०) इति अपादानत्वात् पञ्चमी ॥ ९ ॥

तवेति। किं बहुना, [तव प्रसादात्] अनुग्रहात् [कुसुमायुधोऽपि] अतिदुर्बलास्त्रोऽपि अहम् [एकं मधुम्] वसन्तमेव [सहायं लब्ध्वा] पिनाकः पाणौ यस्य सः [पिनाकपाणिः] प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ (२, २, ३६, पा० वा०) तस्य

अथोरुदेशादवतार्य्य पादम्
आक्रान्तिसम्भावितपादपीठम् ।
सङ्कल्पितार्थे विवृतात्मशक्तिम्
आखण्डलः काममिदं बभाषे ॥ ११ ॥

सर्वं सखे! त्वय्युपपन्नमेतत् ।
उभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्य्यमहत्सु कुण्ठं
त्वं सर्वतोगामि च साधकञ्च ॥१२॥

[हरस्यापि] हरः पिनाकी चेत्यतिदारुण इति भावः। [धैर्य्यच्युतिम्] धैर्य्यहानिं [कुर्य्याम्] कर्त्तुं शक्नुयामित्यर्थः। शकि लिङ् चेति (३,३, १७२ पा०) शक्यार्थे लिङ्। [अन्ये धन्विनः] धनुर्भृतः [मम के?] न केऽपीत्यर्थः। किंशब्दः कुत्सायाम्। "कुत्साप्रश्नवितर्केषु किंशब्दः इष्यते" इति शाश्वतः ॥१०॥

अथेति। अथ स्मरवाक्यश्रवणानन्तरम् [आखण्डलः] सहस्राक्षः [ऊरुदेशात् पादम्] [आक्रान्त्या] आक्रमणेन [सम्भावितं पादपीठम्] यस्मिन् तद्यथा तथा [अवतार्य्य] [सङ्कल्पितार्थे] हरचित्ताकर्षणरूपे विषये [विवृतात्मशक्तिम्] "कुर्य्यां हरस्यापि" इत्यादिना प्रकटीकृतस्वसामर्थ्यं [कामम्] स्मरम् [इदम्] वक्ष्यमाणं बभाषे ॥ ११ ॥

सर्वमिति। हे [सखे!] सखे इति सम्बोधनं गौरवार्थं [सर्वम्] [एतत् त्वयि उपपन्नम्] सिद्धं [मम कुलिशम्] वज्रं [भवांश्च] [उभे अस्त्रे] तत्र [वज्रं तपोवीर्य्येण] तपोबलेन

अवैमि ते सारमतः खलु त्वां
कार्य्ये गुरुख्यात्मसमं नियोच्ये।
व्यादिश्यते भूधरतामवेच्य
कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥
आशंसता वाणगतिं वृषाङ्के
कार्य्यं त्वया नः प्रतिपन्नकल्पम्।

[महत्सु] प्रबलेषु [कुण्ठम्] प्रतिबद्धप्रसरं [त्वम्] अस्त्रं [सर्वतोगामि च साधकञ्च] तापसेषु अपि अकुण्ठमित्यर्थः ॥१२॥

अवैमीति। हे सखे! [ते सारम्] बलम् [अवैमि] वेद्मि [अतः खलु] अत एव [आत्मसमम्] मत्तुल्यं [त्वाम् गुरुणि] महति [कार्य्ये] "तस्मै हिमाद्रेः" इति वक्ष्यमाणे [नियोक्ष्ये] स्वराद्यन्तोपसृष्टादिति वक्तव्यमिति (१, २, ६४ पा० सूत्रस्थात्) वार्त्तिकात् आत्मनेपदनियमः। तथाहि—सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह,—[कृष्णेन] विष्णुना। धरतीति धरः पचाद्यच्। भुवो धरः [भूधरः] तस्य भावस्तत्तां भूधरणशक्तिमित्यर्थः। [अवेक्ष्य] ज्ञात्वा [शेषः] सर्पराजः [देहोद्वहनाय] स्वदेहमुद्वोढुम्। क्रियार्थोपपदस्येत्यादिना (२, ३, १४ पा०) चतुर्थी। [व्यादिश्यते] नियुज्यते। शेषशायी हि भगवान् ॥ १३ ॥

नियोगाङ्गीकारं सिद्धवत् कर्त्तुमाह,—

आशंसतेति। [वृषाङ्के] हरे [वाणगतिं] वाणप्रसरम् [आशंसता] कथयता "कुर्य्यां हरस्यापि पिनाकपाणेः" इत्यादिनेति शेषः। [त्वया] [नः] अस्माकं [कार्य्यं प्रतिपन्नकल्पम्] अङ्गीकृतप्रायम् ईषदसमाप्तौ (५, ३, ६७ पा०) कल्पप्प्रत्ययः। कथमेतत्?

निबोध यज्ञांशभुजामिदानीम्
उच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥
अमी हि वीर्य्यप्रभवं भवस्य
जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो
ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५॥

अत आह,—[इदानीम्] उच्चैरुन्नता द्विषो येषां तेषाम् [उच्चैर्द्विषां यज्ञांशभुजाम्] देवानाम्। एतेन द्विषत्सु यज्ञभागत्वं सूच्यते। [ईप्सितम्] आप्तुमिष्टम्] [एतदेव] हरे वाणप्रयोगरूपमेव [निबोध] हरायत्तं बुध्यस्व इत्यर्थः। बुध बोधने इति धातोर्लोट्। अत्र आशंसता प्रार्थयमानेनेति नाथव्याख्यानमनाथव्याख्यानम् आङ् पूर्वयोः शास्तिशंसत्योरिच्छार्थत्वे आत्मनेपदनियमात्। याञ्चार्थत्वस्य अप्रामाणिकत्वात्। कुर्य्यां हरस्य अपीति अत्रानयोरभावात् अयोगाच्चेति ॥१४॥

किं तत्कार्य्यं कथं वा, तस्य हरायत्तत्वं कुतो वा मदपेक्षा? इत्यत्राह,—

अमी इति। [हि] यस्मात् [अमी] देवाः [जयाय] शत्रुजयार्थं [भवस्य] हरस्य [वीर्य्यप्रभवम्] तेजःसम्भूतं [सेनान्यम्] सेनापतिम् [उशन्ति] कामयन्ति वश कान्तौ इति धातोर्लट्। ब्रह्मणां सद्योजातादिमन्त्राणाम् (१) अङ्गानां हृदयादिमन्त्राणां भूः (२) स्थानम् [ब्रह्माङ्गभूः] जातमन्त्रन्यास इत्यर्थः।

(१) ओं ह्रीं सद्योजाताय नम इत्यादिमन्त्राणाम्।
(२) ओं ह्रां हृदयाय नमः ओं ह्रीं शिरसे स्वाहेत्याद्यङ्गमन्त्राणाम्।

तस्मै हिमाद्रेः प्रयतां तनूजां
यतात्मने रोचयितुं यतस्व।
योषित्सु तद्वीर्य्यनिषेकभूमिः
सैव क्षमेत्यात्मभुवोपदिष्टम्॥ १६॥

गुरोर्नियोगाच्च नगेन्द्रकन्या
स्थाणुं तपस्यन्तमधित्यकायाम्।
अन्वास्ते इत्यप्सरसां मुखेभ्यः
श्रुतं मया मत्प्रणिधिः स वर्गः॥ १७॥

[ब्रह्मणि] निजतत्त्वे। "वेदस्तत्त्वं तपोब्रह्म" इत्युभयत्रापि अमरः। [योजितात्मा] नियमितचित्तः मन्त्रन्यासपूर्वकं ब्रह्म ध्यायन्नित्यर्थः।• [स] भवः [च] [त्वदेकेषोः] तव एक-बाणस्य [निपातेन साध्यः] अनन्यसाध्योऽयमस्मिन् अवसर इति भावः॥ १५॥

तस्मा इति। [यतात्मने] नियतचित्ताय [तस्मै] भवाय। रुच्यर्थानां प्रीयमाण इति (१, ४, ३३ पा०) सम्प्रदानत्वात् चतुर्थी। [प्रयतां हिमाद्रेस्तनूजाम्] पार्वतीम् [रोचयितुं यतस्व] भवितव्यञ्च अत्र पार्वत्या एवेत्याह,—[योषित्सु] स्त्रीषु मध्ये। यतश्च निर्द्धारणमिति (२, ३, ४१ पा०) सप्तमी। [क्षमा] शक्ता [तस्य] हरस्य [वीर्य्यम्] रेतस्तस्य [निषेकः] क्षरणं तस्य [भूमिः] क्षेत्रं सा पार्वत्येव, [इति आत्मभुवा] ब्रह्मणा [उपदिष्टम्] "उमे एव क्षमे वोढुमित्यादिना, उक्त-मित्यर्थः॥ १६॥

सापि इदानीं सन्निकृष्टैव तस्येत्याह,—

तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्
अर्थोऽयमर्थान्तरभाव्य एव ।
अपेक्षते प्रत्ययमुत्तमं त्वां
वीजाङ्कुरः प्रागुदयादिवाम्भः ॥ १८ ॥

गुरोरिति। [नगेन्द्रकन्या च] पार्वती [गुरोः] पितुः [नियो
गात्] शासनात् [अधित्यकायाम्] (१) हिमाद्रेरूर्द्धभू
"भूमिरूर्द्ध्वमधित्यका" इत्यमरः। उपाधिभ्यां त्यकन्नासन्न
रूढयोरिति ( ५, २, ३४ पा० ) त्यकन्प्रत्ययः। [तपस्यन्ती
तपश्चरन्तम्। कर्मणोरोमन्थतपोभ्यां वर्त्तिचरोरिति (३,
१५ पा० ) क्यङ्प्रत्ययः। ततः शतृप्रत्ययः [स्थाणुम्] रुद्र
[अन्वास्त] उपास्त इत्यर्थः। [इति] इदं [मया अप्सर
मुखेभ्यः श्रुतम्] न च एतदैतिह्यमात्रमित्याह,— [ स वर्गः
सोऽप्सरसां गणः [मत्प्रणिधिः] मम गूढचरः। "प्रणि
प्रार्थने चरे" इति यादवः ॥१७॥

तदिति। [तत्] तस्मात् [सिद्ध्यै कार्य्यसिद्ध्यर्थं] [गच्छ
देवकार्य्यं कुरु ] आशिषि लोट्। [अयमर्थः] प्रयोजन
अर्थान्तरभाव्यः] कारणान्तरसाध्य एव। तच्च कारणान्
पार्वतीसन्निधानमिति भावः "अर्थः प्रकारे विषये वि
कारणवस्तुषु। अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने॥
इति विश्वः। तथापि वीजसाध्योऽङ्कुरः [वीजाङ्कुरः] [उदयात
उत्पत्तेः [प्राक् अम्भ इव] [ त्वामुत्तमं प्रत्ययं] कारणम् [अपे
क्षते ] "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः

---

(१) यतः समुदायात् जातिगुणक्रियाभिः एकदेशस्य पृ
क्करणं तद्वाचकपदात् सप्तमी चात् षष्ठी स्यात्।

तस्मिन् सुराणां विजयाभ्युपाये
तवैव नामास्त्रगतिः कृती त्वम्।
अप्यप्रसिद्धं यशसे हि पुंसाम्
अनन्यसाधारणमेव कर्म ॥ १९ ॥

सुराः समभ्यर्थयितार एते
कार्य्यं त्रयाणामपि विष्टपानाम्।
चापेन ते कर्म न चातिहिंस्रम्
अहो वतासि स्पृहणीयवीर्य्यः ॥ २० ॥

तस्मादस्मिन्नर्थे तव परमसहकारित्वादनन्यसाध्योऽयमर्थ इति भावः ॥ १८ ॥

तस्मिन्निति। [सुराणां विजयाभ्युपाये] जयस्य उपायभूते [तस्मिन्] हरे [अस्त्रगतिः] अस्त्रप्रसरः [तवैव नाम] नामेति सम्भावनायाम्। अन्येषान्तु सम्भावनापि नास्तीति भावः। अतः [त्वं कृती] कृतमस्यास्तीति कृती कृतार्थः। तथाहि [अप्रसिद्धमपि अनन्यसाधारणमेव कर्म पुंसां यशसे हि] इदन्तु प्रसिद्धम् असाधारणञ्चेति अतियशस्करमिति भावः ॥ १९ ॥

प्रोत्साहनार्थं स्तौति,—

सुरा इति। [एते सुराः समभ्यर्थयितारः] याचितारः [कार्य्यम्] प्रयोजनं [त्रयाणां विष्टपानामपि] सम्बन्धि सर्वलोकार्थम् इत्यर्थः। [कर्म ते] तव [चापेन] न तु अन्येनेति भावः। [अति-हिंस्रम्] अतिघातुकञ्च [न] [अहो वत] इति सम्बोधने। "अहोवत[illegible]" इति "[illegible]" इति। "[illegible]"

मधुश्च ते मन्मथ ! साहचर्या-
दसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति
व्यादिश्यते केन हुताशनस्य ? ॥ २१ ॥

तथेति शेषामिव भर्त्तुराज्ञाम्
आदाय मूर्ध्ना मदनः प्रतस्थे ।
ऐरावतास्फालनकर्कशेन
हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥

इति विश्वः । [स्पृहणीयवीर्योऽसि] आश्चर्यविक्रमोऽसि
"आश्चर्यं स्पृहणीयञ्च" इति नानार्थकोषः ॥ २० ॥

मधुश्चेति । हे [मन्मथ !] असौ मधुश्च] वसन्तोऽपि [ते
साहचर्यात्] सहचरत्वादेव [अनुक्तोऽपि] अप्रेरितोऽपि [सहाय
सहकार्य्येव । तथाहि, [समीरणः] वायुः [हुताशनस्य
अग्नेः [नोदयिता] प्रेरको भव इति [केन व्यादिश्यते ?] न
मधुसमीरणयोः उक्तिमन्तरेण सहायताकरणं सामान्यधर्मः,
च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथग्निर्दिष्ट इति प्रतिवस्तू-
मालङ्कारोऽयम् । तदुक्तम्, "यत्र सामान्यनिर्देशः पृथग्वाक्य-
द्वये यदि । गम्यौपम्याश्रिता सा स्यात् प्रतिवस्तूपमा मता"
इति ॥ २१ ॥ [illegible]

तथेति । [तथा] अस्त्विति [भर्त्तुः] स्वामिनः [शेषामि-
[illegible] [illegible]
[illegible]" इति विश्वः । [illegible]
[illegible] [आज्ञां मूर्ध्ना आदाय] [illegible]

स माधवेनाभिमतेन सख्या
रत्या च साशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः
स्थाण्वाश्रमं हैमवतं जगाम ॥ २३ ॥

तस्मिन् वने संयमिनां मुनीनां
तपः समाधेः प्रतिकूलवर्ती ।

[मदनः प्रतस्थे] समवप्रविभ्यः स्थः (१, ३, २२ पा०) इति आत्मनेपदम् । इन्द्रः [ऐरावतास्फालनेन] प्रोत्साहनार्थेन ताडनेन [कर्कशेन] परुषेण [हस्तेन तदङ्गम्] मदनदेहं [पस्पर्श] हस्तस्पर्शेन सम्भावयामास इत्यर्थः । ग्रैवामिव आज्ञामित्यत्र साधकबाधकप्रमाणाभावात् उपमोत्प्रेक्षयोः सन्देहसङ्कर इति । यदि भर्त्रा ग्रैवापि दत्ता तदा ताम् आज्ञामिव इत्युपमा । अथ न दत्ता तर्हि ग्रैवात्वेन उत्प्रेक्षिता । ग्रैवादानन्तु सन्दिग्धमिति ॥ २२ ॥

स इति । [सः] मदनः [अभिमतेन] प्रियेण [सख्या] सुहृदा [माधवेन] वसन्तेन [रत्या] स्वदेव्या [च साशङ्कम्] सङ्कटमापतितम् इति सभयम् [अनुप्रयातः] सन् तथा [अङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिः] येन स तथोक्तः । शरीरत्यागेनापि सर्वथा इन्द्रकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः । [हैमवतम्] हिमवति भवं [स्थाणोः] हरस्य [आश्रमं जगाम] ॥ २३ ॥

[illegible] [तस्मिन् वने] [illegible] [संयमिनाम्] [illegible] प्रतिकूलं वर्तते इति [illegible] [मधुः] वसन्तः [illegible]

सङ्कल्पयोनेरभिमानभूतम्
आत्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥

कुबेरगुप्तां दिशमुष्णरश्मौ
गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन
व्यलीकनिःश्वासमिवोत्ससर्ज ॥ २५ ॥

मनोभवस्य [अभिमानभूतम्] गर्वहेतुभूतमित्यर्थः। कार्यकारणयोः अभेदोपचारः। [आत्मानम्] निजस्वरूपम् [आधाय] सन्निधाप्य [जजृम्भे] प्रादुर्बभूव वसन्तधर्मान् प्रवर्त्तयामास इत्यर्थः ॥ २४ ॥

वसन्तधर्मानाह,—

कुबेरेति। [उष्णरश्मौ] सूर्य्ये साहसिके च नायके [समयम्] दक्षिणायनकालं सङ्गमकालञ्च [ विलङ्घ्य ] अकाण्डे व्यतिक्रम्य [कुबेरगुप्ताम्] धनपतिपालितां कुत्सितशरीरेण केनचित् रक्षिताञ्च उदीचीं कौबेरीं दिशं काञ्चित् नायिकाञ्च [गन्तुम्] चलितुं सङ्गन्तुञ्च [ प्रवृत्ते] सति [दक्षिणा दिक्] दाक्षिण्यवती नायिका च [मुखेन] अग्रभागेण वक्त्रेण च। वहतीति वहः प्रवाहकः। गन्धस्य वहं [गन्धवहम्] अनिलं व्यलीकेन दुःखेन निःश्वासः तं [व्यलीकनिःश्वासमिव] "दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्यवक्रयोः" इति वैजयन्ती। [उत्ससर्ज] प्रवर्त्तयामास भर्त्तरि समयोल्लङ्घनेन पराङ्मुखत्वमुपगते सति स्त्रियो दाक्षिण्यात् [illegible] दुःखात् निःश्वसन्तीति भावः। [illegible] समासोक्तिः [illegible] इति तात्पर्यार्थः। अत्र उभयोः सङ्करः। न च समासोक्तिरेवेयमुत्प्रेक्षा [illegible]

असूत सद्यः कुसुमान्यशोकः
स्कन्धात् प्रभृत्येव सपल्लवानि।
पादेन नापैक्षत सुन्दरीणां
सम्पर्कमाशिञ्जितनूपुरेण ॥ २६ ॥

ति शङ्कितव्यं केवलविशेषणसामर्थ्यात् एव अप्रस्तुतप्रतीतौ
। उत्तिष्ठते अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका
तीयते। न च श्लेष एव प्रकृताप्रकृतविषयः उभयश्लेषे श्लिष्ट-
शेष्यानङ्गीकारात्। तस्मात् शब्दशक्तिमूलोऽयं ध्वनिः।
च व्यलीकनिःश्वासरूपचेतनधर्मसम्भावनार्थं, दक्षिणस्यादिशो
ायिकया सह अभेदमासादयन् अभेदलक्षणातिशयोक्त्युप-
ोविनीं निःश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति "वाच्य-
सङ्ग्रहभूतः" इति व्याख्यामः ॥ २५ ॥

असूतेति। [अशोकः] वृक्षविशेषः [सद्यः] [स्कन्धात्]
काण्डात् [प्रभृत्येव] स्कन्धादारभ्य इत्यर्थः। भाष्यकारवचनात्
प्रभृतियोगे पञ्चमीति कैयटः। भाष्यञ्च "मूलात् प्रभृत्यग्रात्
शाखास्तप्नुवन्ति" इति "कार्त्तिक्याः प्रभृति आग्रहायणी मासि"
इत्यादि। [सपल्लवानि कुसुमानि असूत] उभयमपि अजी-
जनत् इत्यर्थः। [आशिञ्जितौ नूपुरः] यस्य तेन। शिञ्जधातोः
अकर्मकात्त्वर्थाकर्मकेत्यादिना (३, ४, ७२ पा०) कर्तरि
क्तः। [सुन्दरीणां पादेन सम्पर्कम्] ताडनं [नापैक्षत]। "सनू-
पुररवेण चरणेनाभिताडनम्। दोहदं यत् अशोकस्य
ततः पुष्पोद्गमो भवेत्॥" इति। बकुलो मुखशीधुसिक्तः "पादा-
घातः कुरबकः कुरुते विलासमालोकितात्तिलक उत्कलिको
विभाति॥" २६॥

सद्यः प्रवालोद्गमचारुपत्रे
नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्
नामाक्षराणीव मनोभवस्य ॥ २७ ॥

वर्णप्रकर्षे सति कर्णिकारं
दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ २८ ॥

सद्य इति । [मधुः] वसन्त एव इषुकारः [प्रवालोद्गमाः] पल्
वाङ्कुरा एव [चारूणि पत्त्राणि] पक्षा यस्य तस्मिन् । "प
वाहनपक्षयोः" इत्यमरः । नवं चूतं चूतकुसुमं तदेव बाण
तस्मिन् [नवचूतबाणे] [समाप्तिं नीते] सति [सद्यः] [मनो
भवस्य ] धन्विनः [नामाक्षराणीव] [द्विरेफान्] भ्रमरान् [निवे
शयामास] निदधौ । अत्र प्रवालपत्त्र इत्याद्येकदेशविवर्ति
रूपकं मधोरिषुकारत्वं रूपयन् नामाक्षराणीव इत्युत्प्रेक्षाय
निमित्तमित्येकदेशविवर्तिरूपकोत्थापिता इयमुत्प्रेक्षा ॥ २७ ॥

वर्णेति । [कर्णिकारम्] कर्णिकारकुसुमम् । अवयवे
प्राण्योषधिवृक्षेभ्यः (४, ३, १३५ पा० वा०) इति अण्प्रत्ययस्य त
तस्य पुष्पफलमूलेषु बहुलमिति (४, ३, १६६ पा० ) लुक् ए
मन्यत्रापि द्रष्टव्यम् । [वर्णप्रकर्षे] वर्णोत्कर्षे सति सति [निर्ग
न्धतया] हेतुना [चेतो दुनोति स्म] पर्यतापयत् । [illegible]
(३, २, १२८ वा० ) भूतार्थे लट् । [illegible] [प्रायेण] [illegible]
विधातुः [प्रवृत्तिः] [गुणानां सामग्र्यविधौ] [illegible]

बालेन्दुवक्राण्यविकासभावात्
बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥ २९

लग्नद्विरेफाञ्जनभक्तिचित्रं
मुखे मधुश्रीस्तिलकं प्रकाश्य ।

[illegible]षये [पराङ्मुखो] सर्वत्रापि वस्तुनि किञ्चिद्दोषं सम्पाद-
ति यथा चन्द्रे कलङ्कः । अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यते
ति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासो-
लङ्कारः ॥ २८ ॥

बालेन्द्विति । [अविकासभावात्] निर्विकासत्वात् मुकुल-
[illegible]वात् हेतोः [बालेन्दुः] इव [वक्राणि] [अतिलोहितानि]
[illegible]तिरक्तानि [पलाशानि] किंशुकपुष्पाणि । "पलाशे किंशुकः
[illegible]र्णः" इत्यमरः । [वसन्तेन] पुंसा [समागतानाम्] सङ्गतानां
[वनस्थलीनाम्] स्त्रीणां [सद्यः] सद्योदत्तानि पुराणेषु अति-
[illegible]लौहित्याभावादिति भावः । [नखक्षतानीव बभुः] अत्र वस-
न्तस्य वनस्थलीनाञ्च विशेषणसाधारण्यात् नायकत्वव्यवहार-
[illegible]तीतेः समासोक्तिः तावदस्ति । नखक्षतानीव इति जाति-
[illegible]रूपोत्प्रेक्षा [illegible]गुणनिमित्ता [illegible]गम्यते । सा च
[illegible]नायक[illegible]तिष्ठती [illegible] इत्युत्प्रेक्षा[illegible]
[illegible] समासोक्ति-
[illegible] ॥ २९ ॥

लग्नेति । [मधुश्रीः] वसन्तलक्ष्मीः [लग्नद्विरेफा] एव

रागेण बालारुणकोमलेन
चूतप्रवालोष्ठमलञ्चकार ॥ ३० ॥
मृगाः पियालद्रुममञ्जरीणां
रजःकणैर्विघ्नितदृष्टिपाताः ।
मदोद्धताः प्रत्यनिलं विचेरुः
वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥
चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यत् मधुरं चुकूज ।

[अञ्जनभक्तयः] कज्जलरचनाः ताभिः [चित्रम्] चित्रवर्णं [तिलकम्] पुष्पविशेषमेव तिलकं विशेषकम् । मुखं प्रारम्भः तस्मिन्नेव [मुखे] वक्त्रे [प्रकाश्य] प्रकटय्य [बालारुणकोमलेन] बालार्कसुन्दरेण [रागेण] अरुणिम्ना तेनैव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं [चूतप्रवालोष्ठम् अलञ्चकार] प्रसाधयामास। अत्र रूपकालङ्कारः ॥ ३० ॥

मृगा इति । [पियालद्रुमाः] राजादनवृक्षाः । “राजादनं पियालश्च” इत्यमरः । तेषां [मञ्जर्यः] तासां [रजःकणैः] [विघ्निताः] सञ्जातविघ्नाः । [दृष्टीनां पाताः] प्रसरा येषां ते तथोक्ताः [मदोद्धताः] मृगाः [प्रत्यनिलम्] अनिलाभिमुखं [मर्मराः] मर्मरशब्दवन्तः [पत्रमोक्षाः] जीर्णपर्णपाताः यासु ताः [वनस्थलीविशेषाः] वनप्रदेशेषु चेरुश्च । “देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्” इति (हरिकारिकोक्तेः) चरतेः सकर्मकत्वम् ॥ ३१ ॥

मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य ॥ ३२ ॥

हिमव्यपायाद्विशदाधराणाम्
आपाण्डुरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥

तपस्विनः स्थाणुवनौकसस्ताम्
आकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।

चूतेति । [चूताङ्कुराणामास्वादेन] [कषायकण्ठः] रक्तकण्ठः । "सुरभावपथे रक्ते कषाय इति केशवः"। पुमान् कोकिलः [पुंस्कोकिलः] पुंग्रहणं प्रागल्भ्यद्योतनार्थम् । [मधुरं चुकूज] इति [यत्] [तत्] कूजनम् [एव] [मनस्विनीनां मानविघाति] रोषनिरासे [दक्षम्] [स्मरस्य वचनम्] मानं त्यजतेति आज्ञावचनं [जातम्] कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुः इत्यर्थः ॥ ३२ ॥

हिमेति । [हिमस्य व्यपायात्] अपगमात् [विशदाः] नीरुजाः [अधराः] ओष्ठाः यासां तासाम् [आपाण्डुरीभूतमुखच्छवीनाम्] कुङ्कुमपरिहारादिति भावः । [किम्पुरुषाङ्गनानाम्] [पत्रविशेषकेषु] पत्ररचनासु [स्वेदोद्गमः पदं चक्रे] घर्मोदयात् स्वेदोद्भवोऽभूदित्यर्थः । विशदाधरत्वं मधूच्छिष्टपरिहारादिति भावः । हिमर्तौ नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयात् ददतीति प्रसिद्धम् ॥ ३३ ॥

तपस्विन इति । [स्थाणोर्वनमोकः] येषां ते [तपस्विनः]

प्रयत्नसंस्तम्भितविक्रियाणां
कथञ्चिदीशा मनसां बभूवुः ॥ ३४ ॥

तं देशमारोपितपुष्पचापे
रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं
द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ३५ ॥

तत्रत्या मुनयः । समानकाल आद्यन्तावस्याः [आकालिकीम्] अकालभवत्वात् उत्पत्त्यनन्तरविनाशिनीमित्यर्थः । आकालिकडाद्यन्तवचन इति ( ५, १, ११४ पा० ) समानकालादिकट् प्रत्ययः प्रकृतेराकाल आदेशश्च निपातितः । टिड्ढाणञित्यादिना ङीप् (४, १, १५ पा० ) । केचिदकालात् [illegible] त्वात्स्वार्थे ठगित्याहुः । ताम् आकालिकीं [मधुप्रवृत्तिम्] [वीक्ष्य] [प्रयत्नेन संस्तम्भितविक्रियाणाम्] निरुद्धविकाराणां [मनसां] [कथञ्चिदीशाः] नियन्तारः [बभूवुः] ॥ ३४ ॥

तमिति । [आरोपितम्] अधिज्यं कृतम् [पुष्पचापम्] येन तस्मिन् [रतिर्द्वितीया] यस्य तस्मिन् रतिसहाये [मदने तं देशम्] आश्रमम् [प्रपन्ने] प्राप्ते सति [द्वन्द्वानि] स्थावराणि जङ्गमानि च मिथुनानि [काष्ठा] उत्कर्षः । "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः । ताम् [गतः] यः [स्नेहः] इष्टसाधननिबन्धनः प्रेमापरपर्यायः ममताभिमानः । "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः" इत्यमरः । स एव [रसः] तेन [अनुविद्धम्] [illegible] [भावम्] [illegible] [क्रियया] कार्यभूतया चेष्टया [विवव्रुः] प्रकटीचक्रुः [illegible] इत्यर्थः ॥ ३५ ॥

मधु द्विरेफः कुसुमैकपात्रे
पपौ प्रियां स्वामनुवर्त्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः ॥ ३६ ॥
ददौ रसात् पङ्कजरेणुगन्धि
गजाय गण्डूषजलं करेणुः ।

तच्चेष्टा आह मध्वित्यादिभिश्चतुर्भिः—
मध्विति । द्वौ रेफौ वर्णविशेषौ यस्य सः [द्विरेफः] भ्रमरः । उपचारात्तदर्थोऽपि द्विरेफ उच्यते । यथाह कैयटः,—"शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते यथा भ्रमरशब्दस्य द्विरेफत्वात् द्विरेफो भ्रमरः ।" [कुसुमम्] एव [एकम्] साधारणम् [पात्रम्] तस्मिन् [मधु] मकरन्दम् । "मधु मद्ये पुष्परसे" इति विश्वः । [स्वां प्रियाम्] भृङ्गीम् [अनुवर्त्तमानः] अनुसरन् [पपौ] तत्पीतशेषं पपौ इत्यर्थः । कृष्णश्चासौ सारः शबलश्च [कृष्णसारः] कृष्णमृगः । वर्णो वर्णेनेति (१) (२,१,६९ पा०) समासः । [स्पर्शेन] स्पर्शसुखेन [निमीलिताक्षीम्] [मृगीम्] [शृङ्गेण अकण्डूयत] घर्षितवान् । कण्ड्वादिभ्यो यगिति (३,१,२७ पा०) यक् ततः कर्त्तरि लङ् ॥ ३६ ॥

ददाविति । [रसात्] अतिरागात् [करेणुः] करिणी । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । पङ्काज्जायते इति पङ्कजं तस्य रेणुः पङ्कजरेणुः तस्य गन्धोऽस्यास्तीति [पङ्कजरेणुगन्धि]

(१) वर्णो वर्णेन वर्णवाचकः समस्यते स च तत्पुरुषः ।

अर्धोपभुक्तेन बिसेन जायां
सम्भावयामास रथाङ्गनामा ॥ ३७ ॥
गीतान्तरेषु श्रमवारिलेशैः
किञ्चित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि
प्रियामुखं किम्पुरुषश्चुचुम्बे (स्म) ॥ ३८
पर्य्याप्तपुष्पस्तवकस्तनाभ्यः
स्फुरत्प्रवालोष्ठमनोहराभ्यः ।

[गण्डूषजलम्] मुखान्तर्गतजलम् [गजाय] ददौ। [रथाङ्गनामा] चक्रवाकः [अर्धम्] यथा तथा [उपभुक्तेन] अर्धजग्धेन [बिसेन जायां सम्भावयामास] स्वजग्धशेषं ददौ इत्यर्थः ॥३७॥

गीतेति। [किम्पुरुषः] किन्नरः [श्रमवारिलेशैः] स्वेदोद-बिन्दुभिः [किञ्चित्] ईषत् [समुच्छ्वासिताः] विश्लेषिताः [पत्रलेखाः] यस्य तत् पुष्पाणामासवः मद्यं [पुष्पासवः] पुष्पोद्भवमद्यमित्यर्थः वसन्ते मधुकस्य सम्भवात्। पुष्पवासितमिति केचित्। तेन [आघूर्णिताभ्याम्] उद्भ्रान्ताभ्यां [नेत्राभ्याम्] [शोभते] इति तथोक्तं [प्रियामुखम्] [गीतान्तरेषु] गीतमध्येषु [चुचुम्बे (स्म)] ॥ ३८ ॥

पर्य्याप्तेति। [पर्य्याप्ताः] समग्राः [पुष्पस्तवकाः] एव [स्तनाः] यासां [ताभ्यः] स्तनाकारोपपन्नत्वात् [illegible] (४, १, ५४ [illegible]) [illegible] न ङीष्। [स्फुरन्तः चञ्चलाः] पल्लवा एव [ओष्ठाः] तैः [मनोहराभ्यः] [लताः] एव [वध्वः] ताभ्यः [illegible] [अवापुरिति] [illegible] पुंस्त्वं [illegible] गम्यते।

लतावधूभ्यस्तरवोऽप्यवापुः
विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥
श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥ ४० ॥
लतागृहद्वारगतोऽथ नन्दी
वामप्रकोष्ठार्पितहेमवेत्रः।

[विनम्राः शाखाः] एव [भुजाः] तैः [बन्धनान्यवापुः] ताभिः आलिङ्गिता इत्यर्थः। स्थावराणामपि मदनविकारोऽभूत् किमुतान्येषाम् इति भावः। एतच्च तरुलतानामपि चेतनत्वात् उक्तम्। यथाह मनुः—"अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति (१अ० ४९श्लो०)। अत्र रूपकालङ्कारः ॥३९॥

श्रुतेति। [तस्मिन् क्षणे] वसन्ताविर्भावकाले भगवान् [हरः] [श्रुताप्सरोगीतिरपि] दिव्याङ्गनागानमाकर्णयन्नपि इत्यर्थः। [प्रसङ्ख्यानपरः] आत्मानुसन्धानपरः [बभूव] [हि] तथाहि [आत्मनः] चित्तस्य [ईश्वराणाम्] नियन्तॄणां वशिनामित्यर्थः। विहन्यन्ते एभिरिति [विघ्नाः] प्रत्यूहाः। घञर्थे कप्रत्ययः। [जातु] कदाचिदपि [समाधिभेदे] समाधिभञ्जने [प्रभवः] समर्था न [भवन्ति] ॥ ४० ॥

लतेति। [अथ] [लतागृहद्वारम्] [गतः] [वामे प्रकोष्ठे] [अर्पितहेमवेत्रः] धारितहेमदण्डः [नन्दी] नन्दिकेश्वरः। "नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे" इति कोषः।

मुखार्पितैकाङ्गुलिसंज्ञयैव
मा चापलायेति गणान् व्यनैषीत् ॥ ४१ ॥
निष्कम्पवृक्षं निभृतद्विरेफं
मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात् काननमेव सर्वं
चित्रार्पितारम्भमिवावतस्थे ॥ ४२ ॥
दृष्टिप्रपातं परिहृत्य तस्य
कामः पुरः शुक्रमिव प्रयाणे ।

[मुखे अर्पितायाः] सरोषविस्मयस्तिमितावलोकं निहितायाः [एकस्या अङ्गुलेः] तर्जन्याः [संज्ञया] सूचनया [एव] "संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना" इत्यमरः । [गणान्] प्रमथान् [चापलाय] चापलं कर्त्तुम् [मा] भवतेति । क्रियार्थोपपदस्येत्यादिना चतुर्थी । [व्यनैषीत्] शिक्षितवान् ॥ ४१ ॥

न केवलं गणा एव विनीताः, किन्तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह,—

निष्कम्पेति । [निष्कम्पवृक्षम्] इदम् उद्भिज्जोपलक्षणम् । [निभृतद्विरेफम्] निश्चलभृङ्गं स्वेदजोपलक्षणमेतत् । [मूकाण्डजम्] निःशब्दपक्षिसरीसृपादिकम्, एतेन अण्डजजातिरुक्ता । [शान्तमृगप्रचारम्] जरायुजोपलक्षणमेतत् । [सर्वम् एव काननम्] [तच्छासनात्] नन्दीश्वराज्ञया [चित्रार्पितारम्भम्] चित्रलिखितारम्भम् [इवावतस्थे] "नृ-गवाद्या जरायुजाः स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः । उद्भिदस्तरुगुल्माद्याः" इत्यमरः ॥ ४२ ॥

प्रान्तेषु संसक्तनमेरुशाखं

ध्यानास्पदं भूतपतेर्विवेश ॥ ४३ ॥

स देवदारुद्रुमवेदिकायां

शार्दूलचर्मव्यवधानवत्याम्।

आसीनमासन्नशरीरपातः

त्रियम्बकं संयमिनं ददर्श ॥ ४४ ॥

दृष्टेति। [कामः] [प्रयाणे] यात्रायां पुरोगतः शक्रो यस्मिन् देशे तं [पुरःशक्रम्] देशम् [इव]। "प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च। अपि शक्रसमो राजा हतसैन्यो निवर्त्तते॥" इति प्रतिषेधात्। [तस्य दृष्टिप्रपातम्] दृग्विषयं [परिहृत्य] [प्रान्तेषु] पार्श्वदेशेषु [संसक्ताः] अन्योऽन्यसंसृष्टाः [नमेरूणाम्] सुरपुन्नागानां [शाखाः] यस्य तत्। तिरोधानयोग्यमिति भावः। [भूतपतेः] शिवस्य [ध्यानास्पदम्] समाधिस्थानम्। आस्पदं प्रतिष्ठायामिति (६, १, १४६ पा०) निपातः। [विवेश] ॥ ४३ ॥

स इति। [आसन्नशरीरपातः] आसन्नमृत्युः [सः] कामः [शार्दूलचर्मणा व्यवधानवत्याम्] व्याघ्रचर्मास्तृतायामित्यर्थः। "मोक्षश्रीर्व्याघ्रचर्मणि" इति प्राशस्त्यादिति भावः। [देवदारुद्रुमवेदिकायामासीनम्] उपविष्टं [संयमिनम्] समाधिनिष्ठं [त्रियम्बकम्] त्रिनेत्रं [ददर्श]। त्र्यम्बकमित्युक्तेः पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयमियङादेशश्छान्दसः, महाकविप्रयोगात् अभियुक्तैः अङ्गीकृतः। केचित्साहसिकाः त्रिलोचनमिति पेठुः॥ ४४ ॥

पर्य्यङ्कबन्धस्थिरपूर्वकाय-
मृज्वायतं सन्नमितोभयांसम्।
उत्तानपाणिद्वयसन्निवेशात्
प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥

भुजङ्गमोन्नद्धजटाकलापं
कर्णावसक्तद्विगुणाक्षसूत्रम्।
कण्ठप्रभासङ्गविशेषनीलां
कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति,—

पर्य्यङ्केति। [पर्य्यङ्कबन्धेन] वीरासनेन [स्थिरपूर्वकायम्] निश्चलोत्तरार्द्धम् ऋजुरायतश्च [ऋज्वायतः] तं [सन्नमितौ उभौ अंसौ] यस्य तं तथोक्तम्। वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोग इत्युक्तं कैयटेन। [उत्तानः] ऊर्द्धतलो यः [पाणिद्वयस्य सन्निवेशः] संस्थानं तस्मात् [अङ्कमध्ये प्रफुल्लम्] (१) [राजीवं] पङ्कजं यस्य तम् [इव] स्थितम्। वीरासने वशिष्ठः,—"एकं पादमथैकस्मिन् विन्यसेदुरुसंस्थितम्। इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥" इति। तथा योगसारे,—"उत्तानिते करतले करमुत्तानितं परम्। आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥" इति ॥ ४५ ॥

भुजङ्गमेति। [भुजङ्गमेन] [उन्नद्धः] उन्नमय्य बद्धः [जटाकलापः] येन तं तथोक्तं [कर्णावसक्तम्] कर्णावलम्बीत्यर्थः। अत एव [द्विगुणम्] द्विरावृत्तम् [अक्षसूत्रम्] अक्षमाला यस्य

(१) प्रपूर्वात् फुल्लविकाशे इत्यस्मात् पचाद्यच्।

किञ्चित्प्रकाशस्तिमितोग्रतारैः
भ्रूविक्रियायां विरतप्रसङ्गैः।
नेत्रैरविस्पन्दितपक्ष्ममालैः
लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥

अवृष्टिसंरम्भमिवाम्बुवाहम्
अपामिवाधारमनुत्तरङ्गम्।
अन्तश्चराणां मरुतां निरोधात्
निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥

तं [कण्ठप्रभाणाम्] [सङ्गेन] मिश्रणेन [विशेषनीलाम्] अतिनीलां [ग्रन्थिमतीम्] बन्धनयुक्तां [कृष्णत्वचम्] कृष्णमृगाजिनं [दधानम्] ॥ ४६ ॥

किञ्चिदिति। [किञ्चित्प्रकाशाः] ईषत्प्रकाशाः [स्तिमिताः] निश्चलाः [उग्राः] च [ताराः] कनीनिका येषां तैः। "तारकाक्ष्णः कनीनिका" इत्यमरः। [भ्रूविक्रियायाम्] भ्रूविक्षेपे [विरतप्रसङ्गैः] प्रसक्तिरहितैः [अविस्पन्दितपक्ष्ममालैः] अचलितपक्ष्मपङ्क्तिभिः अधःप्रसृता मयूखा येषां तैः [अधोमयूखैर्नेत्रैः] त्रिनेत्रत्वाद् बहुवचनं। [लक्ष्यीकृतघ्राणम्] नासाग्रनिविष्टदृष्टिमित्यर्थः। "करणान्यवहिष्कृत्य स्थाणुवन्निश्चलात्मकः। आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः॥" इति योगसारे ॥ ४७ ॥

अवृष्टीति। अन्तश्चरन्तीति [अन्तश्चराः] तेषां [मरुताम्] प्राणादीनां [निरोधात्] हेतोः [अवृष्टिसंरम्भम्] अविद्यमानवर्षसम्भ्रमम् [अम्बुवाहमिव] स्थितम्। एतेन प्राणनिरोधः

कपालनेत्रान्तरलब्धमार्गै:
ज्योति:प्ररोहैरुदितै: शिरस्त: ।
मृणालसूत्राधिकसौकुमार्य्यां
बालस्य लक्ष्मीं ग्लपयन्तमिन्दो: ॥ ४९ ॥

मनो नवद्वारनिषिद्धवृत्ति
हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो विदुस्तम्
आत्मानमात्मन्यवलोकयन्तम् ॥ ५०

सूचित: । [अनुत्तरङ्गम्] अनुद्गततरङ्गम् [अपामाधारम्] ह्रदमिव स्थितम् । एतेन अपाननिरोध: सूचित: । तथा [निवाते] निर्वातदेशे [निष्कम्पम्] निश्चलं [प्रदीपमिव] स्थितम् । एतेन अशेषवायुनिरोध: सूचित: । "निवातावाश्रयावातौ" इत्यमर: ॥ ४८ ॥

कपालेति । [कपालनेत्रान्तरेण] ब्रह्मकरोटिनेत्रविवरेण [लब्धमार्गै:] शिरस्तो ब्रह्मरन्ध्रात् । पञ्चम्यास्तसिल् । [उदितै:] उद्भूतै: [ज्योति:प्ररोहै:] तेजोऽङ्कुरै: [मृणालसूत्राधिकं सौकुमार्य्यम्] मार्दवं यस्यास्तां [बालस्येन्दो:] शिरश्चन्द्रस्य [लक्ष्मीं ग्लपयन्तम्] ॥ ४९ ॥

मन इति । [नवभ्यो द्वारेभ्यो निषिद्धा] निवर्त्तिता [वृत्ति:] सञ्चारो यस्य तत् तथोक्तं, [समाधिना] प्रणिधानेन [वश्यम्] वशङ्कृतम् । यत्प्रत्यय: । "प्रणिधानं समाधानं समाधिश्च समाश्रये" इति हलायुध: । [मन: हृदि] हृदयाख्ये अधिष्ठाने [व्यवस्थाप्य ]। तथाच वशिष्ठ:,—"यतो निर्याति विषयान्

स्मरस्तथाभूतमयुग्मनेत्रं
पश्यन्नदूरात् मनसाप्यधृष्यम् ।
नालक्षयत् साध्वससन्नहस्तः
स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१ ॥

निर्वाणभूयिष्ठमथास्य वीर्य्यं
सन्धुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्याम्
अदृश्यत स्थावरराजकन्या ॥ ५२ ॥

यस्मिंस्त्वेव प्रलीयते । हृदयं तद्विजानीयात् मनसः स्थितिकारणम् ॥" इति । [क्षेत्रविदः] क्षेत्रज्ञाः पुरुषाः । [यम्] न क्षरतीति [अक्षरम्] अविनाशिनं [विदुः] विदन्ति । विदो लटो वेति (३, ४, ८३ पा०) झेर्जुस् । तम् [आत्मानम् आत्मनि] स्वस्मिन् [अवलोकयन्तम्] साक्षात्कुर्वन्तं स्वातिरेकेण परमात्मनोऽभावादिति भावः ॥ ५० ॥

स्मर इति । [स्मरः] कामः [तथाभूतम्] पूर्वोक्तरूपं [मनसाप्यधृष्यमयुग्मनेत्रम्] विषमाक्षम् [अदूरात्पश्यन्] [साध्वसेन सन्नहस्तः] विस्मयपाणिः सन् [स्वहस्तात् स्रस्तं शरं चापमपि] चापञ्च [नालक्षयत्] न विवेद भीतो मुह्यतीति भावः ॥५१॥

निर्वाणेति । [अथ] निर्वाणेन नाशेन भूयिष्ठम् [ निर्वाणभूयिष्ठम्] नष्टप्रायमित्यर्थः [अस्य] स्मरस्य [वीर्य्यम्] बलं [वपुर्गुणेन] सौन्दर्य्येण [सन्धुक्षयन्तीव] पुनरुज्जीवयन्तीव स्थिता [वनदेवताभ्याम्] सखीभूताभ्याम् [अनुप्रयाता] अनुगता [स्थावरराजकन्या] पार्वती [अदृश्यत] दृष्टा ॥ ५२ ॥

अशोकनिर्भर्त्सितपद्मरागम्
आकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवारं
वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥
आवर्जिता किञ्चिदिव स्तनाभ्यां
वासो वसाना तरुणार्करागम् ।
पर्य्याप्तपुष्पस्तवकावनम्रा
सञ्चारिणी पल्लविनी लतेव ॥ ५४ ॥
स्रस्तां नितम्बादवलम्बमाना
पुनः पुनः केशरदामकाञ्चीम् ।

तामेवाह चतुर्भिः,—

अशोकेति । [अशोकपुष्पेण निर्भर्त्सिताः] तिरस्कृताः [पद्मरागाः] येन तत् तथोक्तम् [आकृष्टहेमद्युतीनि] आहृतस्वर्णाभरणवर्णानि [कर्णिकाराणि] यस्मिन् तत् तथोक्तं [मुक्ताकलापीकृतानि सिन्धुवाराणि] निर्गुण्डीकुसुमानि यस्मिन् तत्। "सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः। [वसन्तपुष्पाणि एवाभरणं वहन्ती] ॥ ५३ ॥

आवर्जितेति । [स्तनाभ्यां किञ्चिदावर्जिता] ईषदानमितेव [तरुणार्कस्य रागः] इव रागो यस्य तत् बालार्कारुणम् इत्यर्थः । उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च (२, २,२४ पा०वा०) । [वासो वसाना] आच्छादयन्ती । अत एव [पर्य्याप्तपुष्पस्तवकावनम्रा पल्लविनी] किसलयवती [सञ्चारिणी लतेव] स्थितेति शेषः ॥ ५४ ॥

न्यासीकृतां स्थानविदा स्मरेण
मौर्वीं द्वितीयामिव कार्मुकस्य ॥ ५५ ॥
सुगन्धिनिःश्वासविवृद्धतृष्णं
बिम्बाधरासन्नचरं द्विरेफम्।
प्रतिक्षणं सम्भ्रमलोलदृष्टिः
लीलारविन्देन निवारयन्ती ॥ ५६ ॥
तां वीक्ष्य सर्वावयवानवद्यां
रतेरपि ह्रीपदमादधानाम्।

स्रस्तामिति। [स्थानविदा] निक्षेपयोग्यस्थानवेदिना [स्मरेण न्यासीकृताम्] निक्षेपीकृताम्। कर्मणि प्रभवतीति [कार्मुकम्] धनुः। कर्मण उकञ् (५,१,१८३ पा०) इत्युकञ् प्रत्ययः। तस्य [द्वितीयां मौर्वीमिव] स्थिताम्। अत्र हि न्यस्ता मौर्वी उत्तरत्र हरवैरनिर्यातनाय उपयुज्यते इति भावः। [नितम्बात् स्रस्ताम्] चलितां [केशरदाम] वकुलमाला सैव [काञ्ची] तां [पुनःपुनरवलम्बमाना] हस्तेन धारयन्ती ॥ ५५ ॥

सुगन्धीति। [सुगन्धिभिः निःश्वासैः विवृद्धतृष्णम्] बिम्बतुल्योऽधरः [ बिम्बाधरः ] वृत्तौ मध्यमपदलोपः स्यात् इति वामनः। तस्य [आसन्नचरम्] सन्निकृष्टचरं [द्विरेफम्] भृङ्गम् [प्रतिक्षणम्] [सम्भ्रमेण लोलदृष्टिः] चञ्चलाक्षी सती [लीलारविन्देन निवारयन्ती ] ॥ ५६ ॥

तामिति। [सर्वावयवेषु अनवद्याम्] अगर्ह्याम्। अवद्यपण्येति (३,१,१०१पा०) निपातः। [रतेः अपि]कामकलत्रस्यापि [ह्रीपदम्] लज्जानिमित्तम् [ आदधानाम् ] न्यूनतामावह-

जितेन्द्रिये शूलिनि पुष्पचापः
स्वकार्य्यसिद्धिं पुनराशशंसे [स] ॥५७॥

भविष्यतः पत्युरुमा च शम्भोः
समाससाद प्रतिहारभूमिम्।
योगात् स चान्तः परमात्मसंज्ञं
दृष्ट्वा परं ज्योतिरुपारराम ॥ ५८ ॥

ततो भुजङ्गाधिपतेः फणाग्रैः
अधः कथञ्चिद्धृतभूमिभागः।

स्तोमित्यर्थः। [ताम्] पार्वतीं [वीक्ष्य] [पुष्पचापः] कामः [जितेन्द्रिये] दुर्जयेऽपि इत्यर्थः। [शूलिनि] शिवे विषये [स्वकार्य्यसिद्धिम्] पुनराशशंसे (स) चकमे। पूर्वं साध्वसस्रस्तहस्त इत्यादिना कार्य्यसिद्धेः उन्मूलितत्वाभिधानादिह पुनरित्युक्तम् ॥ ५७ ॥

भविष्यत इति। [उमा च भविष्यतः पत्युः शम्भोः प्रतिहारभूमिम्] द्वारदेशं [समाससाद]। "स्त्री द्वार्द्वारं प्रतिहारः" इत्यमरः। [सः] शम्भुः [च] [अन्तः] [परमात्मा] इति [संज्ञा] यस्य तत् [परम्] मुख्यम्। "परं दूरान्यमुख्येषु" इति यादवः। [ज्योतिर्दृष्ट्वा] साक्षात् कृत्य। [योगात्] ध्यानात्। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः। [उपारराम] उपारमत्। व्याङ्परिभ्यो रमः (१,३, ८३ पा०) इति परस्मैपदम् ॥ ५८ ॥

तत इति। [ततो भुजङ्गाधिपतेः] शेषस्य [फणाग्रैः] [अधः] भूमेरधः [कथञ्चित्] अतियत्नेन [धृतो भूमिभागः]

शनैःकृतप्राणविमुक्तिरीशः
पर्य्यङ्कबन्धं निविड़ं बिभेद ॥ ५९ ॥
तस्मै शशंस प्रणिपत्य नन्दी
शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्त्तुरेनां
भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥ ६० ॥
तस्याः सखीभ्यां प्रणिपातपूर्वं
स्वहस्तलूनः शिशिरात्ययस्य ।

सोपवेशनभूभागो यस्य सः तथोक्तः। वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः। [शनैः] कृता प्राणानां प्राङ्निरुद्धानां विमुक्तिः पुनः सञ्चारो येन सः[कृतप्राणविमुक्तिः] [ईशो निविड़म्] दृढं [पर्य्यङ्कबन्धम्] वीरासनम् [बिभेद] शिथिलीचकार ॥ ५९ ॥

तस्मा इति। अथ [नन्दी तस्मै] भगवते। क्रियाग्रहणात्(१) चतुर्थी। [प्रणिपत्य] नमस्कृत्य [शुश्रूषया] सेवया निमित्तेन [उपेताम्] सेवार्थमागताम् इत्यर्थः। [शैलसुतां शशंस] निवेदयामास। [भर्त्तुः] स्वामिनः [भ्रूक्षेपमात्रेण] भ्रूसंज्ञयैव [अनुमतप्रवेशाम्] अङ्गीकृतप्रवेशाम् [एनाम्] शैलसुतां [प्रवेशयामास च] ॥ ६० ॥

तस्या इति। [तस्याः] पार्वत्याः [सखीभ्यां] पूर्वोक्ताभ्यां [स्वहस्तेन लूनः] उपचितः [पल्लवभङ्गभिन्नः] किशलयशकल-

(१) कर्मणा यमभिप्रैतीति (१,४,३२पा०) सूत्रे कर्मपदेन क्रियया अपि ग्रहणस्य वार्त्तिककृतोक्तत्वात् क्रियोद्देश्यतया सम्प्रदानत्वम्।

व्यकीर्य्यत त्र्यम्बकपादमूले
पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥६१ ॥

उमापि नीलालकमध्यशोभि
विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णाच्युतपल्लवेन
मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥

अनन्यभाजं पतिमाप्नुहीति
सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित्
पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥

भिन्नः [शिशिरात्ययस्य] वसन्तस्य सम्बन्धी [पुष्पोच्चयः] पुष्पप्रकरः। हस्तादाने चेरस्तेय इति (३, ३, ४० पा०) घञ्विषयत्वात् कवीनामयं प्रामादिकः प्रयोग इतिवल्लभः। [त्र्यम्बकपादमूले] [प्रणिपातपूर्वं] प्रणतिपूर्वकं [व्यकीर्य्यत] विक्षिप्तः ॥ ६१ ॥

उमापीति। [उमापि नीलालकानां मध्ये शोभते] इति तथोक्तम् अलकन्यस्तमित्यर्थः। [नवकर्णिकारं विस्रंसयन्ती] [कर्णाच्चुग्रतः पल्लवः] यस्य तेन [मूर्ध्ना वृषभध्वजाय प्रणामं चकार ]। क्रियाग्रहणात् सम्प्रदानत्वम् ॥ ६२ ॥

अनन्येति। [सा] कृतप्रणामा देवी [भवेन] हरेण अन्यां न भजतीति [अनन्यभाजम्] भजो ण्विरिति (३, २, ६२पा०) ण्विप्रत्ययः। सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः। [पतिमाप्नुहीति तथ्यम्] सत्यम् [एवाभिहिता] उक्ता उक्तरव

कामस्तु बाणावसरं प्रतीक्ष्य
पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः
शरासनज्यां मुहुराममर्श ॥ ६४ ॥

अथोपनिन्ये गिरिशाय गौरी
तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैः
मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥

तथैव सम्भवादिति भावः । अभिदधातेः ब्रुवर्थस्य दुह्यादित्वात् अप्रधाने कर्मणि क्तः । तथाहि [ईश्वरव्याहृतयः] महापुरुषोक्तयः [कदाचित्] अपि [लोके] भुवने । "लोकस्तु भुवने जने" इत्यमरः । [विपरीतम्] विसंवादिनम् [ अर्थम् ] अभिधेयं [न पुष्णन्ति] न बोधयन्तीत्यर्थः ॥ ६३ ॥

कामस्त्विति । [कामस्तु बाणावसरं प्रतीक्ष्य] उमासन्निधानात् अयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं [पतङ्गवत्] शलभवत् । "समौ पतङ्गशलभौ" इत्यमरः । तेन तुल्यं क्रिया चेद्वतिरिति (५, १, ११५ पा० ) वतिप्रत्ययः । [वह्निमुखं विविक्षुः] प्रवेष्टुमिच्छुः । विशतेः सनन्तादुप्रत्ययः । उमायाः समक्षम् [ उमासमक्षम् ] अक्ष्णोः समीपम् । अव्ययीभावे शरत्प्रभृतिभ्य इति ( ५, ४, १०७ पा० ) समासान्तोऽच्प्रत्ययः । [हरे बद्धलक्ष्यः] सन् [शरासनस्य ज्याम्] मौर्वीम् [मुहुराममर्श] परामृष्टवान् ॥ ६४ ॥

अथोपेति । [ अथ गौरी ] तपोऽस्यास्तीति तपस्वी ।

प्रतिग्रहीतुं प्रणयिप्रियत्वात्
त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा
धनुष्यमोघं समधत्त बाणम् ॥ ६६ ॥

हरस्तु किञ्चित् परिलुप्तधैर्य्यः
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥ ६७ ॥

अस्मायामेधास्रजो विनिरिति (५, २, १२१ पा०) विनिप्रत्ययः। तस्मै [तपस्विने] [गिरिशाय ताम्ररुचा] रक्तवर्णेन [करेण] [भानुमतः] अंशुमतः [मयूखैर्विशोषिताम्] मन्दाकिन्याः [पुष्कराणि] पद्मानि तेषां [बीजानि] तेषां [मालाम्] जपमालिकाम् [उपनिन्ये] समर्पितवती ॥ ६५ ॥

प्रतिग्रहीतुमिति। [त्रिलोचनश्च प्रणयिप्रियत्वात्] अर्थिप्रियत्वात् [ताम्] अक्षमालां [प्रतिग्रहीतुम्] स्वीकर्त्तुम् [उपचक्रमे।] पुष्पं धनुर्यस्य सः [पुष्पधन्वा] कामः [च]। वा संज्ञायाम् (५, ४, १३३ पा०) इत्यनङादेशः। सम्मोह्यते अनेनेति [सम्मोहनं नाम]। नामेति प्रसिद्धौ। [अमोघं बाणम्] सायकं [धनुषि समधत्त] संहितवान् ॥ ६६ ॥

हरस्त्विति। [हरस्तु] हरोऽपि [चन्द्रोदयारम्भे अम्बुराशिः इव] [किञ्चित्] ईषत् [परिलुप्तधैर्य्यः] न तु प्राकृतजनवत् अत्यन्तलुप्तधैर्य्य इति भावः। [बिम्बफलतुल्यः अधरोष्ठः] यस्य तस्मिन् [उमामुखे विलोचनानि व्यापारयामास] त्रिभिरपि

विवृण्वती शैलसुतापि भावम्
अङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ
मुखेन पर्य्यस्तविलोचनेन ॥ ६८ ॥

अथेन्द्रियक्षोभमयुग्मनेत्रः
पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुः
दिशामुपान्तेषु ससर्ज दृष्टिम् ॥६९॥

लोचनैः साभिलाषम् अद्राक्षीदित्यर्थः । एतेन भगवतो रति-भावोदय उक्तः ॥ ६७ ॥

विवृण्वतीति । [शैलसुतापि [स्फुरद्बालकदम्बकल्पैः] विकसत्कोमलनीपसदृशैः पुलकितैः इत्यर्थः । "ईषदसमाप्तौ" (५,३, ६७ पा०) कल्पप् प्रत्ययः । [अङ्गैर्भावम्] रत्याख्यं [विवृण्वती] प्रकाशयन्ती [चारुतरेण पर्य्यस्तविलोचनेन] व्रीडाविभ्रान्तनेत्रेण [मुखेन] असाचि साचि सम्पद्यमाना कृता [साचीकृता] तिर्य्यक्कृता । "तिर्य्यगर्थे साचि तिर" इत्यमरः । [तस्थौ] क्रिया मुखं साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव, देव्या अप्युदितो रतिभाव इति भावः ॥ ६८ ॥

अथेति । [अथ] अयुग्मानि नेत्राणि यस्य सः [अयुग्मनेत्रः] त्रिनेत्रः [वशित्वात्] जितेन्द्रियत्वात् [इन्द्रियक्षोभम्] पूर्वोक्तमिन्द्रियविकारं [पुनः बलवत्] दृढं [निगृह्य] निवार्य्य [स्वचेतोविकृतेः] स्वचित्तविकारस्य [हेतुम्] कारणं [दिदृक्षुः] द्रष्टुमिच्छुः [दिशामुपान्तेषु दृष्टिं ससर्ज] प्रसारयामास ॥६९॥

स दक्षिणापाङ्गनिविष्टमुष्टिं
नतांसमाकुञ्चितसव्यपादम्।
ददर्श चक्रीकृतचारुचापं
प्रहर्त्तुमभ्युद्यतमात्मयोनिम्॥ ७०॥

तपःपरामर्शविवृद्धमन्योः
भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य।
स्फुरन्नुदर्चिः सहसा तृतीयात्
अक्ष्णः कृशानुः किल निष्पपात॥ ७१॥

क्रोधं प्रभो! संहर संहरेति

स इति। [सः] भगवान् [दक्षिणापाङ्गे निविष्टा] स्थिता [मुष्टिः] यस्य तं [नतांसम्] [आकुञ्चितः सव्यपादः] यस्य तम् आलीढाख्यस्थानके स्थितमित्यर्थः। [चक्रीकृतचारुचापम्] मण्डलीकृतसौम्यकोदण्डं [प्रहर्त्तुमभ्युद्यतमात्मयोनिम्] मनोभवं [ददर्श]। आलीढलक्षणमाह यादवः,—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। वितस्त्यन्तरगौ पादौ मण्डलं तोरणाकृती। समानौ स्यात्समपदमालीढं पदमग्रतः। दक्षिणं वाममाकुञ्च्य प्रत्यालीढं विपर्यये॥" इति॥ ७०॥

तप इति। [तपःपरामर्शेन] तपस आस्कन्दनेन [विवृद्धमन्योः] प्रवृद्धकोपस्य [भ्रूभङ्गेण दुष्प्रेक्ष्यम्] दुर्दर्शं [मुखम्] यस्य [तस्य] हरस्य [तृतीयादक्ष्णः] [स्फुरन्] उद्दीप्यमानः [उदर्चिः] ऊर्ध्वज्वालः [कृशानुः] अग्निः [सहसा] अतर्कितमेव। "अतर्किते तु सहसा" इत्यमरः। [निष्पपात किल] निश्चक्राम खलु॥ ७१॥

यावद्गिरः खे मरुतां चरन्ति।
तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार॥ ७२॥

तीव्राभिषङ्गप्रभवेण वृत्तिं
मोहेन संस्तम्भयतेन्द्रियाणाम्।
अज्ञातभर्तृव्यसना मुहूर्त्तं
कृतोपकारेव रतिर्बभूव॥ ७३॥

क्रोधमिति। हे [प्रभो!] स्वामिन्! [क्रोधं संहर संहर] निवर्त्तय निवर्त्तय। चापले द्वे भवत इति वक्तव्यमिति (८, १, १२पा० सू० स्थेन) वार्त्तिकेन द्वित्वम्। "सम्भ्रमेण प्रवृत्तिश्चापलमिति" काशिका। इत्थेवं [मरुतां] देवानां [गिरः] वाचः [खे] व्योम्नि [यावत् चरन्ति] प्रवर्त्तन्ते [तावत्] तत्कालमेव भवस्य नेत्रात् जन्म यस्य सः [भवनेत्रजन्मा]। अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद इति वामनः। [सः वह्निर्मदनम्] भस्मैव अवशेषो यस्य तं [भस्मावशेषं चकार] ददाह इत्यर्थः॥७२॥

तीव्रेति। [तीव्राभिषङ्गप्रभवेण] अतिदुःसहाभिभवसम्भवेन। "अभिषङ्गस्त्वभिभवे सङ्गे आक्रोशनेऽपि च" इति वैजयन्ती। [इन्द्रियाणाम्] चक्षुरादीनां [वृत्तिम्] व्यापारं [संस्तम्भयता] प्रतिबध्नता [मोहेन] मूर्च्छया कर्त्रा [रतिः] मदनभार्य्या [मुहूर्त्तम् अज्ञातं भर्तृव्यसनम्] भर्तृनाशो यया सा तथोक्ता सती [कृतोपकारेव बभूव] सहसा दुःखोपनिपातात् मुमूर्च्छेत्यर्थः। मोहेन दुःखसंवेदनाभावात् तस्योपकारकत्वोक्तिः॥ ७३॥

तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य ।
स्त्रीसन्निकर्षं परिहर्त्तुमिच्छन्
अन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥७५॥

सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।

तमिति । [तपस्वी] तपोनिष्ठः [भूतपतिः] शिवः [तपसो विघ्नम्] अन्तरायभूतं [तम्] कामम् [आशु वज्रः] अशनिः [वनस्पतिम्] वृक्षम् [इव] [अवभज्य] भङ्क्त्वा [स्त्रीसन्निकर्षम्] स्त्रीसन्निधानं [परिहर्त्तुमिच्छन्] तस्यानर्थहेतुत्वादिति भावः। [सभूतः] सगणः सन् [अन्तर्दधे] ॥ ७४ ॥

शैलात्मजेति । [शैलात्मजा] पार्वती [अपि] [उच्छिरसः] उन्नतशिरसो महतः [पितुरभिलाषम्] हरो वरोऽस्त्विति मनोरथम्, [ललितम्] सुन्दरम् [आत्मनो वपुश्च] [व्यर्थम्] निष्फलं [समर्थ्य] विचार्य्य [सख्योः समक्षम्] पुरः [इति] च हेतुना [अधिकं जातलज्जा] समानजनसमक्षम् अवमानस्य अतिदुःसहत्वादिति भावः । [शून्या] निरुत्साहा सती [कथञ्चित्] कृच्छ्रेण [भवनस्याभिमुखी जगाम] ॥ ७५ ॥

सपदीति । [सपदि अद्रिः] हिमवान् [रुद्रस्य संरम्भात्]

सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीत् वेगदीर्घीकृताङ्गः॥७६॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
मदनदहनो नाम तृतीयः सर्गः॥

---

कोपात् [भीत्या]। "संरम्भः सम्भ्रमे कोपे" इति विश्वः। [मुकुलिताक्षीम्] निमीलितनेत्राम्। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (५, ४, ११३ पा०) इति षच्प्रत्ययः। षिद्गौरादिभ्यश्चेति (४, १, ४१ पा०) ङीष्। अनुकम्पितुमर्हाम् [अनुकम्प्याम्]। ऋहलोर्ण्यदिति (३, १,१२४, पा०) ण्यत्प्रत्ययः। [दुहितरं दोर्भ्यामादाय दन्तयोर्लग्नां पद्मिनीम्] नलिनीं [बिभ्रत् सुरगज इव वेगेन] रयेण [दीर्घीकृताङ्गः] आयतीकृतशरीरः सन् पन्थानं प्रति गता प्रतिपथा मार्गानुसारिणी गतिर्यस्य सः [प्रतिपथगतिरासीत्] पन्थानम् अनुसृत्य जगाम इत्यर्थः॥७६॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां तृतीयः सर्गः॥

---

## चतुर्थः सर्गः ।

अथ मोहपरायणा सती
विवशा कामबधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता
नववैधव्यमसह्यवेदनम् ॥ १ ॥

मूर्च्छिता रतिरित्युक्तम् । सम्प्रति तद्वृत्तान्तमेवाह,—

अथेति । [अथ] अनन्तरं मोहो मूर्च्छा परम् अयनम् आश्रयो यस्याः सा [मोहपरायणा] मोहैकशरणा [सती ।] "परायणमभिप्रेते तत्परे परमाश्रय" इति यादवः । [विवशा] मूढ़त्वात् निश्चेष्टा [कामबधूः] रतिः । [असह्या] दुःसहा [वेदना] यस्मिन् तत् तथोक्तम् । विधवायाः गतभर्तृकायाः भावः वधव्यं नवञ्च तत् वैधव्यञ्चेति [नववैधव्यम्] । नवग्रहणं दुःसहत्वद्योतनार्थम् । [प्रतिपादयिष्यता] अनुभावयिष्यता क्रियार्थक्रियायां लृट् (१) । [विधिना] दैवेन । "विधिर्विधाने दैवे च" इत्यमरः । [विबोधिता] वैधव्यानुभावफलोऽयं विधिरिति भावः । अस्मिन् सर्गे वियोगिनीवृत्तानि । "विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी" इति लक्षणात् ॥ १ ॥

---

(१) लृट् शेषे चेति ३, ३, १३ सूत्रे चकारात् क्रियार्थायां क्रियायां लृट् स्यात् । लृटः सद्वा ३, ३, १४ पा० इति लृटः शतरि ततः स्यडागमः ।

अवधानपरे चकार सा
प्रलयान्तोन्मिषिते विलोचने।
न विवेद तयोरतृप्तयोः
प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥

अयि जीवितनाथ! जीवसी-
त्यभिधायोत्थितया तया पुरः।
ददृशे पुरुषाकृति क्षितौ
हरकोपानलभस्म केवलम् ॥ ३ ॥

अवधानेति। [सा] रतिः [प्रलयान्ते] मूर्च्छावसाने। प्रलयो नष्टचेष्टता" इत्यमरः। [उन्मिषिते] उन्मीलिते विलोचने]। अवधानं परं प्रधानं ययोः ते अवधानपरे दिदृयया अवहिते [चकार।] द्रष्टव्याभावात्तु न विवेदेत्याह ति। [प्रियम्] कामम् [अतृप्तयोः] तृप्तिं न गतयोः नित्यदिदृक्षमाणयोः इत्यर्थः। [तयोः] लोचनयोः दर्शनक्रियापेक्षया म्बन्धे षष्ठी। अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोः स्य कर्मभूतस्य तम् [अत्यन्तविलुप्तदर्शनम्] सन्तं [न विवेद] ज्ञातवती। प्रियनाशापरिज्ञानात् दिदृक्षाचक्रे इति तात्पर्यार्थः ॥ २ ॥

अयीति। अयीति प्रश्ने। "अयि प्रश्नानुनययोः" इति ाक्षः। [अयि जीवितनाथ! जीवसि] प्राणिषि कच्चिदिति ? अभिधायोत्थितया] [तया] रत्या [पुरः] अग्रे [क्षितौ] पुरुषस्य ाकृतिरिव आकृतिर्यस्य तत् [पुरुषाकृति] [केवलम्] एकाम् रकोपानलभस्म ददृशे] दृष्टं न तु पुरुष इति भावः ॥ ३ ॥

अथ सा पुनरेव विह्वला
वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्द्धजा
समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥

उपमानमभूद्विलासिनां
करणं यत्तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां
न विदीर्य्ये कठिनाः खलु स्त्रियः ॥ ५ ॥

अथेति। [अथ] भस्मदर्शनानन्तरं [पुनरेव विह्वला विक्लवा [वसुधालिङ्गनधूसरस्तनी] वसुधालिङ्गनेन क्षिति लुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः सा तथोक्ता स्वाङ्गाच्चोपसर्जनादसंयोगोपधादिति (४, १, ५४ पा०) ङीप् [विकीर्णमूर्द्धजा] विकीर्णा विक्षिप्ताः मूर्द्धजाः केशाः यस्याः स तथोक्ता [सा] रतिः [स्थलीम्] वनभूमिं तत्रत्याम् प्राणि इत्यर्थः। जानपदकुण्डगोणस्थलेत्यादिना (४, १, ४२ पा०) ङीप्। [समदुःखाम्] स्वतुल्यशोकां [कुर्वतीव. विललाप] परिदेवितवती। "विलापः परिदेवनम्" इत्यमरः ॥ ४ ॥

उपमानमिति। [तव यत्करणम्] गात्रम्। "करणं साधक तमक्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः। [कान्तिमत्तया] सौन्द र्य्येण हेतुना [विलासिनाम्] विलसनशीलानाम्। वौ कषल सेत्यादिना (३, २, १४३ पा०) घिनुण्प्रत्ययः। उपमीयते येन तत् [उपमानम् अभूत्] [तत्] करणम् [इदमीदृशीं दशाम्] अवस्थां [गतम्] भस्मीभूतमित्यर्थः। तथापि [न

क नु मां त्वदधीनजीवितां
विनिकीर्य्य क्षणभिन्नसौहृदः।
नलिनीं क्षतसेतुबन्धनो
जलसङ्घात इवासि विद्रुतः॥ ६ ॥

दीर्य्ये] न विदीर्णा भवामि। कर्मकर्त्तरि लट् (१)। तथाहि, ...लयः कठिनाः खलु] काठिन्यत्वात् अविदीर्य्यमाणत्वमित्यर्थः। ...रणात् कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। "धीरसञ्चारिणी ...ष्टिर्गतिर्गोहृषभाश्रिता। स्मितपूर्वं तथालापो विलास इति ...र्त्तितः" ॥ ५ ॥

क्वेति। हे प्रिय! [क्षतसेतुबन्धनः] भग्नसेतुबन्धः [जल...ातः] जलौघः [नलिनीमिव] जलैकायत्तजीवितामिति ...। [त्वदधीनजीविताम्] त्वदायत्तप्राणां [मां क नु ...निकीर्य्य] कुत्र वा निक्षिप्य [क्षणभिन्नसौहृदः] क्षणत्यक्त...हार्दः सन् [विद्रुतः] पलायितोऽसि। सेतुसौहृदयोः स्थिति...त्वेन साम्यम्। सुहृदो भावः सौहृदम्। युवादित्वादण्...यः (२)। हृदयस्य हृल्लेखयदण्लासेषु इति (६, ३, ५० ...) हृदादेशः अपि हृद्भावात् न हृद्भगसिन्ध्वन्ते पूर्वपदस्य (७, ३, १९ पा०) इति उभयपदवृद्धिः। हृदूतस्याखि...तु उभयपदवृद्धिः स्यात् यथा सुहृदो भावः सौहार्दमिति। ...ह वामनः,-"सौहृददौर्हृदशब्दौ अनयि हृद्भावादिति" ॥६॥

---

(१) दृ-विदारणे इत्यस्य सकर्मकतया कर्मणः कर्तृत्वविवक्षायां ...लम्।

(२) हायनान्तयुवादिभ्योऽण् (५, १, १३० पा०) सूत्रेण ...र्थे ऽण्।

कृतवानसि विप्रियं न मे
प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं
विलपन्त्यै रतये न दीयते ? ॥ ७ ॥
स्मरसि स्मर ! मेखलागुणैः
उत गोत्रस्खलितेषु बन्धनम् ? ।
च्युतकेशरदूषितेक्षणा-
न्यवतंसोत्पलताड़नानि वा ? ॥ ८ ॥
हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् ।

कृतवानिति । हे प्रिय ! त्वम् [मे] मम [विप्रियम्] अप्रियं [कृतवान् नासि] [मया च ते] तव [प्रतिकूलम्] अप्रि यम् [न कृतम्] [अकारणम्] निष्कारणमेव परस्परापकारक कारणाभावेऽपि इत्यर्थः । क्रियाविशेषणमेतत् । [विलपन्त्यै] त्वद्दर्शनार्थिन्यै अपीति भावः । [रतये] [किम्] कथं [दर्शनं दीयते ?] क्रियाग्रहणात् चतुर्थी ॥ ७ ॥

विप्रियमाशङ्कते,—

स्मरसीति । हे [स्मर ! गोत्रस्खलितेषु] नामव्यत्यासे "गोत्रं नाम्न्यचले कुले" इति विश्वः । [मेखलागुणैः बन्ध स्मरसि उत ?] स्मरसि वा । "विकल्पे किं किमुत च" इत्यमर [च्युतकेशरैः] भ्रष्टकिञ्जल्कैः [दूषिते ईक्षणे] येषु तानि [अ तंसोत्पलताड़नानि] सधूलिक्षेपताड़नानि इत्यर्थः । [स्मरसि वा ?] अपकारस्मरणादिदम् अदर्शनमिति भावः ॥ ८ ॥

उपचारपदं न चेदिदं
त्वमनङ्गः कथमक्षता रतिः ? ॥ ६ ॥
परलोकनवप्रवासिनः
प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितः
त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥

दय इति। [हृदये वससीति] स्मरवाक्यानुवादः। इत्येवं-
पम् [मत्प्रियं यदवोचः] उक्तवानसि। ब्रूञो लुङि वच
म् (७, ४, २० पा० ) इत्युमागमः [तत्कैतवमवैमि] मिथ्येति
न्ये [इदम्] वचनम् [उपचारपदम्] परस्य रञ्जनार्थं यद्-
प्रभाषणं स उपचारस्तस्य पदं स्थानं कैतवस्थानमिति यावत्
चेत् त्वमनङ्गः] अशरीरः [कथं रतिः अक्षता] अविनष्टा ?
श्रयनाशेऽपि आश्रितमविनष्टमिति विरोधादिति भावः ॥६॥
न च मे कश्चिद्विचारः किन्तु लोकः शोच्यत इत्याह,—
लोकेति। [परलोकम्] प्रति [नवप्रवासिनः] अचिरप्रोषि-
य अनेन अनुगमनकालानतिपातः सूच्यते। [तव पदवीम्]
र्गं [प्रतिपत्स्ये] त्वामनुगमिष्यामीत्यर्थः। अतो मे नास्ति
चार इति भावः। किन्तु [विधिना] दैवेन [एष जनः]
कः [वञ्चितः] प्रतारितः [देहिनां सुखं त्वदधीनम्] त्वयि
नं खलु। अधिशब्दस्य शौण्डादित्वात् सप्तमी शौण्डैरिति
१, ४० पा०) समासः। अध्युत्तरपदादिति (५, ४, ७ पा०)
त्ययः। एवमन्यत्रापि। सुखप्रदाभावे कुतः सुखम् ? इति
: ॥ १० ॥

रजनीतिमिरावगुण्ठिते
पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रिय ! कामिनां प्रियाः
त्वदृते प्रापयितुं क ईश्वरः ? ॥ ११ ॥

नयनान्यरुणानि घूर्णयन्
वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः
प्रमदानामधुना विडम्बना ॥ १२ ॥

तदेवाह,—रजनीति। हे [प्रिय ! रजनीतिमिरेण अव-गुण्ठिते] आवृते [पुरमार्गे घनशब्दविक्लवाः] गर्जितभीता [प्रियाः] कामिनां वसतिं प्रापयितुं [त्वदृते] त्वां विना अन्यारादितरर्त्ते इत्यादिना (२, ३, २९ पा॰) पञ्चमी। [क ईश्वरः ?] शक्तः न कश्चिदित्यर्थः। न हि कामान्धानां भीति-रस्तीति भावः ॥ ११ ॥

नयनानीति। [अरुणानि नयनानि घूर्णयन्] भ्रमयन् तथा [पदे पदे] प्रतिपदम्। वीप्सायां द्विरुक्तिः (१) [वचनानि स्खलयन्] विपर्य्यासयन् [प्रमदानां वारुणीमदः] मद्यमदः [अधुना] त्वयि असति [विडम्बना] अनुकृतिमात्रम्। मदना-भावे मदस्य निष्फलत्वात् इति भावः। तथा च शिशुपालवधे "तं मदो दयितसङ्गमभूष" इति ॥ १२ ॥

---

(१) सर्वस्य द्वे (८,१,१,पा॰) इति अधिकृत्य नित्यवीप्सयोः (८, १, ४ पा॰) सूत्रेण वीप्सार्थे द्वित्वम्। सर्वस्य प्रकृतिप्रत्यय-समुदायस्य इत्यर्थः।

अवगम्य कथीकृतं वपुः
प्रियबन्धोस्तव निष्फलोदयः।
बहुलेऽपि गते निशाकरः
तनुतां दुःखमनङ्ग! मोच्यति ॥ १३ ॥ ✗

हरितारुणचारुबन्धनः
कलपुंस्कोकिलशब्दसूचितः।
वद सम्प्रति कस्य बाणतां
नवचूतप्रसवो गमिष्यति ॥ १४ ॥

अलिपङ्क्तिरनेकशस्त्वया

अवगम्येति। हे [अनङ्ग!] अशरीर। [प्रियबन्धोः] प्रियसखस्य [तव वपुः] शरीरं [कथीकृतम्] अकथा कथा सम्पद्यमानं कृतं शब्दमात्रशिष्टम् [अवगम्य] ज्ञात्वा [निष्फलोदयः] उद्दीप्याभावात् उद्दीपनवैफल्यमिति भावः। [निशाकरः] चन्द्रः [बहुले] कृष्णपक्षे [गतेऽपि तनुताम्] कार्श्यं [दुःखम्] यथा तथा कष्टात् [मोच्यति] तथा वृद्धिरिति दुःखायिष्यते इत्यर्थः ॥ १३ ॥

हरितेति। हरितश्च अरुणश्च। वर्णो वर्णेनेति (२,१,६९ पा०) तत्पुरुषः। [हरितारुणं चारु बन्धनम्] वृन्तं पुष्पस्य यस्य स तथोक्तः [कलेन] मधुरेण [पुंस्कोकिलशब्देन] पुरुषकोकिलनादेन [सूचितः] ऋतुमापितः चूतदर्शनकार्यत्वात् कलशब्दस्य इति भावः। [नवचूतप्रसवः] नवचूतकुसुमं [सम्प्रति कस्य बाणताम्] शरत्वं [गमिष्यति? वद।] अन्यस्य पुष्पबाणस्य अभावात् इति भावः ॥ १४ ॥

गुणकृत्ये धनुषो नियोजिता ।
विकृतैः करुणस्वनैरियं
गुरुशोकामनुरोदितीव माम् ॥ १५ ॥
प्रतिपद्य मनोहरं वपुः
पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां
मधुरालापनिसर्गपण्डिताम् ॥ १६ ॥
शिरसा प्रणिपत्य याचिता-

अलीति । [त्वया अनेकशः] बहुशः [धनुषः] कार्मुकस्य [गुणकृत्ये] मौर्वीकार्य्ये गुणवत्कर्मणि च [नियोजिता] अधिकृता [इयम् अलिपङ्क्तिः करुणस्वनैः] दीनस्वनैः [विकृतैः] कूजितैः [गुरुशोकाम्] दुर्भरदुःखाम् । "गुरुस्तु गोष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति शब्दार्णवः । [माम् अनुरोदितीव ।] उपसर्गात् सकर्मकत्वम् । रुदादिभ्यः सार्वधातुके (७, २,७६ पा०) इति इड़ागमः ॥ १५ ॥

प्रतिपद्येति । [तावत्] पुनरपि [मनोहरं वपुः] शरीरं [प्रतिपद्य] प्राप्य [उत्थितः] सन् [मधुरालापेषु] प्रियोक्तिषु [निसर्गपण्डिताम्] स्वभावप्रगल्भां [ कोकिलाम् ] [ रतिदूतिपदेषु] सुरतदूतीस्थानेषु [आदिश] आज्ञापय प्रगल्भामामिव दौत्याधिकार इति भावः । ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयात् ह्रस्वः । "अपि माषं मषं कुर्य्याच्छन्दोभङ्गं त्यजेत्गिरम्" इति केचित् । ङ्यापोः संज्ञाछन्दसोर्बहुलमिति बहुलग्रहणात् ह्रस्व इति वल्लभः ॥ १६ ॥

न्युपगूढानि सवेपथूनि च।
सुरतानि च तानि ते रहः
स्मर! संस्मृत्य न शान्तिरस्ति मे॥ १७॥
रचितं रतिपण्डित! त्वया
स्वयमङ्गेषु ममेदमार्त्तवम्।
ध्रियते कुसुमप्रसाधनं
तव तच्चारु वपुर्न दृश्यते॥ १८॥
विबुधैरसि यस्य दारुणैः
असमाप्ते परिकर्मणि स्मृतः।

शिरसेति। हे [स्मर!] [शिरसा प्रणिपत्य याचितानि सवेपथूनि] सकम्पानि। ट्वितोऽथुच् (३, ३, ८९ पा०) इति अथुच्प्रत्ययः। सात्त्विकान्तरोपलक्षणमेतत्। "स्तम्भप्रलय-रोमाञ्चाः स्वेदो वैवर्ण्य वेपथू। अश्रुवैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः॥" इति। [उपगूढानि] आलिङ्गनानि च। नपुंसके भावे क्तः। [तानि] अनुभूतप्रकाराणि [रहः] एकान्ते [सुरतानि च संस्मृत्य मे शान्तिर्नास्ति।] अत्र समानकर्तृकत्वं दुर्घटं समानक्रियापेक्षा अस्तीति केचित्॥ १७॥

रचितमिति। हे [रतिपण्डित!] रतिकुशल! [त्वया मम अङ्गेषु] अवयवेषु [स्वयं रचितम्] ऋतुरस्य प्राप्तः [आर्त्तवं] वासन्तम्। ऋतोरण् (५, १, १०५ पा०) इति अण्प्रत्ययः। [कुसुमप्रसाधनम्] पुष्पाभरणम् [इदं ध्रियते] अवतिष्ठते। धृञ् अवस्थान इति धातोस्तौदादिकात् कर्त्तरि लट्। [तव तत्] प्रसाधकं [चारु] सुन्दरं [वपुः] तु [न दृश्यते]॥ १८॥

तमिमं कुरु दक्षिणेतरं
चरणं निर्मितरागमेहि मे ॥ १८ ॥

अहमेत्य पतङ्गवर्त्मना
पुनरङ्काश्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः
प्रिय ! यावन्न विलोभ्यसे दिवि ॥ २० ॥

मदनेन विनाकृता रतिः
क्षणमात्रं किल जीवितेति मे ।

विबुधैरिति । [दारुणैः] क्रूरैः प्राणान्तिके कर्मणि नियोगात् इति भावः । [विबुधैः] देवैः अनभिज्ञत्वञ्च ध्वन्यते । [यस्य] मञ्चरणस्य [परिकर्मणि] प्रसाधने । "परिकर्म प्रसाधनम्" इत्यमरः । [असमाप्ते] सति [सृतोऽसि] [तमिमं दक्षिणेतरम्] वामं [मे चरणं निर्मितरागम्] रचितलाक्षारागं [ कुरु एहि ] आगच्छ ॥ १८ ॥

अहमिति । [अहम् पतङ्गवर्त्मना] शलभमार्गेण अग्निःप्रवेशेन इत्यर्थः । "पतङ्गः शलभे चाग्नौ मार्जारेऽर्के शरे खगे" इति वैजयन्ती । [एत्य] आगत्य [पुनस्ते अङ्काश्रयणी]उत्सङ्गवर्त्तिनी [भवामि] सम्प्रत्येव भविष्यामि । वर्त्तमानसामीप्ये वर्त्तमानवद्वेति ( ३, ३, १३१ पा० ) लट् । हे [प्रिय ! दिवि] स्वर्गे [चतुरैः सुरकामिनीजनैः] अप्सरोगणैः [यावन्न विलोभ्यसे] विलोभयिष्यसे । यावत्पुरानिपातयोर्लट् (३, ३, ४ पा०) इति लट् ॥ २० ॥

मदनेनेति । हे [रमण ! त्वाम् अनुयामि यद्यपि] अनु-

वचनीयमिदं व्यवस्थितं
रमण ! त्वामनुयामि यद्यपि ॥ २१ ॥
क्रियतां कथमन्त्यमण्डनं
परलोकान्तरितस्य ते मया ? ।
सममेव गतोऽस्यतर्किंतां
गतिमङ्गेन च जीवितेन च ॥ २२ ॥
ऋजुतां नयतः स्मरामि ते
शरमुत्सङ्गनिषण्णधन्वनः ।

ामिष्याम्येव। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति (३, ३, १३१ पा०) लट्। यद्यपीत्यवधारणे इति केशवः। किन्तु [रतिः मदनेन विनाकृता] वियोजिता सतीत्यर्थः। सुप्सुपेति समासः। [क्षणमात्रं जीविता किल] इति [इदम्] [वचनीयम्] निन्दा [मे] मम [व्यवस्थितम्] स्थिरमभूत् ॥ २१ ॥

क्रियतामिति। [परलोके अन्तरितस्य] व्यवहितस्य मृतस्य इत्यर्थः। [ते] तव [मया अन्त्यमण्डनं कथम्] केन प्रकारेण [क्रियताम् ?] क्रियतामित्यत्र कामचारे लोट्। हुतदग्धस्य ते यथेच्छमण्डनमपि न सम्भवतीत्यर्थः। कुतः ? [अङ्गेन च जीवितेन च समम्] सहैव [अतर्किताम्] अविचारितां [गतिं गतोऽसि।] इह मृतशरीरमपि नास्ति कस्य मण्डनम् ? इति भावः ॥ २२ ॥

ऋजुतामिति। [शरम् ऋजुताम्] आर्जवं [नयतः] [उत्सङ्गे निषण्णम्] अङ्कगतं धनुर्यस्य तस्य। धनुषश्च (५, ४, १३२ पा०)

मधुना सह सस्मितां कथां
नयनोपान्तविलोकितञ्च यत् ॥ २३ ॥
क्व नु ते हृदयङ्गमः सखा
कुसुमायोजितकार्मुको मधुः ? ।
न खलूग्ररुषा पिनाकिना
गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४ ॥
अथ तैः परिदेविताक्षरैः
हृदये दिग्धशरैरिवाहतः ।

इत्यनङ्गादेशः । [ते] तव [मधुना] वसन्तेन [सह] मधुर्दैत्ये वसन्ते च चैत्रे च" इति विश्वः । [सस्मितां कथाम्] आलापं तथा [ यन्नयनोपान्तविलोकितम् ] अपाङ्गवीक्षणं ते इत्यनुषङ्गः । तच्च [स्मरामि] ॥ २३ ॥

क्व न्विति । हृदयं गच्छतीति [हृदयङ्गमः ] हृद्यः । खच्प्रकरणे गमेः सुप्युपसंख्यानमिति ( ३, २, ३८ पा० वा० ) खच्प्रत्ययः । अरुर्द्विषदजन्तस्य मुम् ( ६, ३, ६७ पा० ) इति मुमागमः । [ते] तव [सखा कुसुमैरायोजितम्] आरचितं [कार्मुकम्] येन कार्मुकनिर्माता [मधुः] वसन्तः [क्व नु?] क्व वा गत इति शेषः । अथवा [सोऽपि उग्ररुषा ] तीव्रकोपेन [पिनाकिना] ईश्वरेण [सुहृदा] मदनेन [ गतां ] प्राप्तां [गतिं] भस्मतामित्यर्थः । [न गमितः खलु ? ] न प्रापितः किम् ? "जिज्ञासानुनये खलु" इत्यमरः ॥ २४ ॥

अथेति । [अथ तैः परिदेविताक्षरैः] विलापवचनैः [हृदये दिग्धशरैः] विषलिप्तसुखशरैः [इवाहतः] सन् । "विषाक्ते

रतिमभ्युपपत्तुमातुरां
मधुरात्मानमदर्शयत् पुरः ॥ २५ ॥
तमवेक्ष्य रुरोद सा भृशं
स्तनसम्बाधमुरो जघान च।
स्वजनस्य हि दुःखमग्रतो
विवृतद्वारमिवोपजायते ॥ २६ ॥
इति चैनमुवाच दुःखिता
सुहृदः पश्य वसन्त ! किं स्थितम् ?।

दिग्धलिप्तकौ" इत्यमरः। [मधुः] वसन्तः [आतुराम्] आपन्नां [रतिम् अभ्युपपत्तुम्] अनुग्रहीतुम् आश्वासयितुम् इत्यर्थः। "अभ्युपपत्तिरनुग्रहः" इत्यमरः। [आत्मानं पुरः अदर्शयत्] आविरभूदित्यर्थः ॥ २५ ॥

तमिति। [सा] रतिः [तम्] मधुम् [अवेक्ष्य] दृष्ट्वा [भृशं रुरोद] स्तनौ सम्बाध्य [स्तनसम्बाधम्।] परिक्लिश्यमाने चेति (३, ४, ५५ पा०) (१) णमुल्। [उरो जघान] ताड़ितवती [च]। तथाहि [स्वजनस्य अग्रतः दुःखं विवृतम्] अपसारितं [द्वारम्] कपाटं यस्य तदिव [उपजायते] आविर्भवति उच्छ्वलं प्रवर्त्तते इत्युत्प्रेक्षाभिप्रायः ॥ २६ ॥

इतीति। दुःखमस्याः सञ्जातं [दुःखिता] सञ्जातदुःखेत्यर्थः। (५, २, ३६ पा०) तारकादित्वादितच्। सा रतिः [एवम्] वसन्तम् [इत्युवाच च।] चकारः पूर्वोक्तसमुच्चयार्थः।

---

(१) सर्वतः पीड्यमाने स्वाङ्गे द्वितीयान्ते उपपदे णमुल् स्यात्।

तदिदं कणशो विकीर्य्यते
पवनैर्भस्म कपोतकर्बुरम्॥ २७॥
अयि सम्प्रति देहि दर्शनं
स्मर! पर्य्युत्सुक एष माधवः।
दयितास्वनवस्थितं नृणां
न खलु प्रेम चलं सुहृज्जने॥ २८॥
अमुना ननु पार्श्ववर्त्तिना
जगदाज्ञां ससुरासुरं तव।
विसतन्तुगुणस्य कारितं
धनुषः पेलवपुष्पपत्रिणः॥ २९॥

हे [वसन्त! पश्य] [सुहृदः] त्वत्सखस्य [किं स्थितम्] किमुपस्थितम् [तदिदं कपोतकर्बुरम्] पारावतधवलं [कणशः] चूर्णीभूतम्। (५, ४, ४२ पा०) अल्पार्थाच्छस्प्रत्ययः। [भस्म पवनैः] विकीर्य्यते, पश्य भस्मीभूतस्ते सुहृदित्यर्थः॥ २७॥

अयीति। [अयि स्मर!] [सम्प्रति दर्शनं देहि एष माधवः] वसन्तः [पर्य्युत्सुकः] त्वद्दर्शनोत्कण्ठितः। त्वामपि अनादृतवतोऽस्य को माधवः? इत्याशङ्क्याह। [नृणाम्] पुरुषाणां [दयितासु प्रेम अनवस्थितम्] अस्थिरं चलमित्यर्थः। [सुहृज्जने प्रेम तु न चलं खलु]॥ २८॥

ईदृश्याः सुहृदः कति न सन्ति इत्याशङ्क्य न कोऽपीत्याह,—अमुनेति। [ननु] मदन! [पार्श्ववर्त्तिना] सहचरेण [अमुना] वसन्तेन [ससुरासुरम्] सुरासुरसहितं [जगत्] [बिसतन्तुगुणस्य] मृणालसूत्रमौर्वीकस्य [पेलवानि] कोमलानि

गत एव न ते निवर्त्तते
स सखा दीप इवानिलाहतः।
अहमस्य दशेव पश्य माम्
अविषह्यव्यसनेन धूमिताम्॥ ३०॥
विधिना कृतमर्द्धवैशसं
ननु मां कामवधे विमुञ्चता।
अनपायिनि संश्रयद्रुमे
गजभग्ने पतनाय वल्लरी॥ ३१॥

[पुष्पाणि] एव [पत्रिणः बाणा यस्य तस्य [तव धनुषः आज्ञां कारितम्] जगदाज्ञां कारितेत्यर्थः। हृक्रोरन्यतरस्यामिति (१, ४, ५३ पा०) जगतः कर्मत्वम्॥ २९॥

गत इति। [स ते सखा अनिलाहतः] वायुताडितः [दीप इव गत एव न निवर्त्तते] [अहमस्य] दीपायमानस्य [दशा] वर्त्तिः [इव] तिष्ठामीति शेषः। "दशा वर्त्तावस्थायां वस्त्रान्ते स्युर्दशा अपि" इति विश्वः। कुतः? [अविषह्यव्यसनेन]सोढुमशक्यदुःखप्रकर्षेण [धूमिताम्] सञ्जातधूमां [मां पश्य] धूमवत्त्वात् नष्टदीपदशासाम्यं धूमस्य व्यसनमेवेत्यर्थः॥ ३०॥

विधिनेति। [ननु] वसन्त! [कामवधे] मदनवधे [मां विमुञ्चता] वर्जयता अमारयतेत्यर्थः। [विधिना] दैवेन विशसति हिनस्तीति विशसो घातुकः पचाद्यच्। विशसस्य कर्म वैशसं (५, १, १३० पा०) युवादित्वादण्प्रत्ययः। [अर्द्धवैशसम्] अर्द्धवधः [कृतम्] "अर्द्धो वा एष आत्मनो यत् पत्नी" इति श्रुतेः।

तदिदं क्रियतामनन्तरं
भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनात्
ननु मां प्रापय पत्युरन्तिकम् ॥ ३२ ॥
शशिना सह याति कौमुदी
सह मेघेन तड़ित् प्रलीयते ।

पत्युः स्वस्य च आश्रयाश्रयिभूतयोः एकपदार्थत्वाभिप्रायेण अर्थोक्तिः। तथा च एकदेशबधे देशान्तरस्यापि बधनियमनात् मामपि विधिरप्रन्नेव हतवानिति तात्पर्य्यम्। एतदेवोपपादयति [अनपायिनि] अनपायित्वेन विश्वस्ते [संश्रयद्रुमे] आश्रयवृक्षे [गजभग्ने] सति [वल्लरी] लता [पतनाय] भवतीति शेषः। पतितुमेव सालमित्यर्थः। तुमर्थाच्च भाववचनादिति (२, ३, १५ पा०) चतुर्थी ॥ ३१ ॥

सम्प्रति अनन्तरकर्त्तव्यं प्रार्थयते,—

तदिति। [तत्] तस्मात्कारणादुक्तप्रकारेण अन्यथापि मरणस्य अवश्यम्भावादित्यर्थः। [अनन्तरं भवता इदम्] वक्ष्यमाणं [बन्धुजनप्रयोजनम्] बन्धुकृत्यं [क्रियताम्] प्रार्थनायां लोट्। तदेव उपदिशति:[ननु] वसन्त ! [विधुराम्] विवशां [मां ज्वलनातिसर्जनात्] अग्निदानात् [पत्युरन्तिकं प्रापय] अग्निप्रवेशनं कारयेत्यर्थः॥३२॥

कर्त्तव्ये प्रथमार्थः श्लोकामित्याह,—

शशिनेति। [कौमुदी] चन्द्रिका [शशिना सह याति] शशिनि अस्तमिते स्वयं नश्यतीत्यर्थः। [तड़ित्] सौदामिनी [मेघेन सह प्रलीयते] प्रणश्यति। कर्त्तरि लट्। [प्रमदाः] स्त्रियः

प्रमदाः पतिवर्त्मगा इति
प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥
अमुनैव कषायितस्तनी
सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा
रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥
कुसुमास्तरणे सहायतां
बहुशः सौम्य ! गतस्त्वमावयोः ।

पतिवर्त्म गच्छन्तीति [पतिवर्त्मगाः] पतिमार्गानुगामिन्यः [इति] एतत् [विचेतनैः] अल्पचेतनैः अविवेकिभिः अपीत्यर्थः । [प्रतिपन्नम्] ज्ञातम् । अलवणा यवागूः अनुदरा कन्येतिवत् अल्पत्वाभिप्रायेण विचेतनैः अपीति निर्देशः । नाथस्तु पृथग्‌जनैरिति पपाठ । पतिवर्त्मगा इत्यत्र स्मृतिः । "आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियते या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥" इति ॥ ३३ ॥

अमुनेवेति । [अमुना] पुरोवर्त्तिना [सुभगेन] शोभनेन [प्रियगात्रभस्मना एव] एवकारो मण्डनान्तरनिवृत्त्यर्थः । [कषायितस्तनी] रञ्जितस्तनी । "रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे" इति वैजयन्ती । [नवपल्लवसंस्तरे यथा] नवपल्लवतल्पे इव [ विभावसौ ] वह्नौ [ तनुम् ] शरीरं [ रचयिष्यामि ] निधास्यामि इत्यर्थः ॥ ३४ ॥

कुसुमेति । हे [सौम्य !] साधो ! [त्वम् आवयोः] रतिपञ्चबाणयोः [बहुशः] बहुवारं [कुसुमास्तरणे] पुष्पशयने [सहा-

कुरु सम्प्रति तावदाशु मे
प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥
तदनु ज्वलनं मदर्पितं
त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः
क्षणमप्युत्सहते न मां विना ॥ ३६ ॥
इति चापि विधाय दीयतां
सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र तं मया
सहितः पास्यति ते स बान्धवः ॥३७ ॥

यतां गतः ।] [सम्प्रति प्रणिपाताञ्जलिना याचितः] अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः । [आशु मे चिताम्] काष्ठचयं [कुरु] कुरुष्व । यथा इह तथामुत्र उपकर्त्तव्यं मित्रेणेत्यर्थः ॥ ३५ ॥

तदिति । [तत्] चिताकरणम् [अनु] अनन्तरं मय्यर्पितं [मदर्पितं ज्वलनम्] अग्निं [दक्षिणवातवीजनैः] मलयमारुतसञ्चालनैः [त्वरयेः] त्वरितं ज्वलयेत्यर्थः । त्वराहेतुमाह,— [ते] तव [विदितं खलु] मतिबुद्धिपूजार्थेभ्यश्चेति ( ३, २, १८८ पा० ) वर्त्तमाने क्तः । तद्योगात् कर्त्तरि षष्ठी । [यथा] येन प्रकारेण [स्मरः मां विना क्षणमपि न उत्सहते] न इच्छति तथा त्वया ज्ञातमेव इत्यर्थः ॥ ३६ ॥

इतीति । [अपिच] [इति] एवं [विधाय] कृत्वा [नौ] आवाभ्याम् [एक एव सलिलस्य अञ्जलिर्दीयताम्] । तम् [अभ्

परलोकविधौ च माधव !
स्मरमुद्दिश्य विलोलपल्लवाः।
निवपेः सहकारमञ्जरीः
प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥

इति देहविमुक्तये स्थितां
रतिमाकाशभवा सरस्वती।
शफरीं ह्रदशोषविक्लवां
प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९ ॥

कुसुमायुधपत्नि ! दुर्लभः

लिम्] [स ते बान्धवः] सखा स्मरः [परत्र परलोके] [मया सहितो विभज्य पास्यति] ॥ ३७ ॥

परलोकेति। किञ्च हे [माधव !] वसन्त ! [परलोकविधौ] पिण्डोदकादिकर्मणि [स्मरमुद्दिश्य] [विलोलाः पल्लवाः] यासु ताः [सहकारमञ्जरीः] चूतवल्लरीः [निवपेः] देहि [हि] यस्मात् कारणात् [ते सखा] स्मरः [प्रियाः चूतप्रसवाः] यस्य स तथोक्तः ॥ ३८ ॥

इतीति। [इति देहस्य विमुक्तये] शरीरस्य विसर्गाय [स्थिताम्] कृतनिश्चयामिति यावत् [रतिम्] [आकाशभवा सरस्वती] अशरीरा वाक् [ह्रदशोषविक्लवाम्] ह्रदस्य जलाधारस्य शोषेण विक्लवां [शफरीम्] प्रोष्ठीम्। "प्रोष्ठी तु शफरी द्वयोः" इत्यमरः। [प्रथमा वृष्टिः] वर्षम् [इव] [अन्वकम्पयत्] अनुकम्पितवती सदयमुवाचेत्यर्थः। "कृपा दयानुकम्पा स्यात्" इत्यमरः ॥ ३९ ॥

तव भर्त्ता न चिराद्भविष्यति ।
शृणु येन स कर्म्मणा गतः
शलभत्वं हरलोचनार्च्चिषि ॥ ४० ॥
अभिलाषमुदीरितेन्द्रियः
स्वसुतायामकरोत् प्रजापतिः ।
अथ तेन निगृह्य विक्रियाम्
अभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥
परिणेष्यति पार्वतीं यदा
तपसा तत्प्रवणीकृतो हरः ।

कुसुमेति । हे [कुसुमायुधपत्नि !] रते ! [तव भर्त्ता] [चिरात्] चिरं [दुर्लभो न भविष्यति] किन्तु अचिरमेव सुलभो भविष्यति इत्यर्थः । किञ्च, [शृणु] तत्कर्मेति शेषः [येन कर्म्मणा] [सः] ते भर्त्ता [हरलोचनस्यार्च्चिः] ज्वाला "ज्वाला भासो नपुंस्यर्च्चिः" इत्यमरः । तस्मिन् [शलभत्वम्] पतङ्गत्वं [गतः] "समौ पतङ्गशलभौ" इत्यमरः ॥ ४० ॥

तदेव कर्मोपाचष्टे,—

अभिलाषमिति । [उदीरितेन्द्रियः] प्रेरितेन्द्रियः स्मरेणेति शेषः । [प्रजापतिः] ब्रह्मा [स्वसुतायाम्] सरस्वत्याम् [अभिलाषम्] अनुरागम् [अकरोत्] । [अथ तेन] प्रजापतिना [विक्रियाम्] इन्द्रियविकारं [निगृह्य] निरुध्य [अभिशप्तः] सन् [एतत् फलम्] दाहात्मकं स्वकर्मफलम् [अन्वभूत्] ॥ ४१ ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन,—

परिणेष्यतीत्यादिना । [धर्मेण] धर्माख्यप्रजापतिना [याचितः]

उपलब्धसुखस्तदा स्मरं
वपुषा स्वेन नियोजयिष्यति ॥ ४२ ॥
इति चाह स धर्मयाचितः
स्मरशापावधिदां सरस्वतीम् ।
अशनेरमृतस्य चोभयोः
वशिनश्चाम्बुधराश्च योनयः ॥४३॥ युग्मकम् ।
तदिदं परिरक्ष शोभने !
भवितव्यप्रियसङ्गमं वपुः ।
रविपीतजला तपात्यये
पुनरोघेन हि युज्यते नदी ॥ ४४ ॥

प्रार्थितः [सः] भगवान् ब्रह्मा, [तपसा] कारणेन [तस्याम्] पार्वत्यां [प्रवणीकृतः] अभिमुखीकृतः [हरः] शिवः [यदा पार्वतीं परिणेष्यति] उद्वक्ष्यति [तदा उपलब्धसुखः] प्राप्तानन्दः सन् [स्मरम्] कामं [स्वेन वपुषा नियोजयिष्यति] सङ्गमयिष्यति,—[इति] एवं [स्मरशापस्यावधिदाम्] अवसानदायिनीं [सरस्वतीम्] वाचञ्च [आह] एवं शापावधिमपि उक्तवान् इत्यर्थः । ननु तथा क्रुद्धस्य कथमीदृशो शान्तिः ? अत आह,—[वशिनः] जितेन्द्रियाश्च [अम्बुधराश्च] [अशनेरमृतस्य च ] इति [उभयोर्योनयः] प्रभवाः । वशिपक्षे अशन्यमृतशब्दौ कोपप्रसादपरौ अन्यत्र वैद्युताम्बुदकपरौ । युग्मकम् ॥ ४२ ॥ ४३ ॥

तदिति । हे [शोभने !] [तत्] तस्मात् कारणात् [भवितव्यः] भविष्यन् [प्रियसङ्गमः] यस्य तथोक्तम् [इदं वपुः परि-

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनाम्
आश्वासयत् सुचरितार्थपदैर्वचोभिः ॥४५॥

अथ मदनवधूरुपप्लवान्तं
व्यसनकृशा परिपालयाम्बभूव ।
शशिन इव दिवातनस्य लेखा

रच्च] तथाहि [रविपीतजला नदी] [तपात्यये] प्रावृषि। "प्रावृट् तपात्यय" इति हलायुधः। [पुनरोघेन] प्रवाहेण [युज्यते] सङ्गच्छते [हि] ॥ ४४ ॥

इत्थमिति। [इत्थम्] अनेन प्रकारेण [अदृश्यरूपं किमपि भूतम्] कश्चित्प्राणी। युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः। [रतेः] मदनदाराणां [मरणव्यवसायबुद्धिम्] मरणोद्योगबुद्धिं [मन्दीचकार] निवारयामासेत्यर्थः। "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः। अथ [कुसुमायुधबन्धुः] वसन्तश्च [तत्प्रत्ययात्] तस्मिन् भूते विश्वासात्। "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः। [एनाम्] रतिं [सुष्ठु चरितार्थानि पदानि] येषां तैः [वचोभिः] वाक्यैः [आश्वासयत्] सर्वथा ते देवताप्रसादात् प्रियसङ्गमो भविष्यतीत्यादिवचनैः अस्याः दुःखम् अपाचकार इत्यर्थः ॥ ४५ ॥

अथेति। [अथ] अनन्तरं [व्यसनेन] दुःखेन [कृशा मदनवधूः] रतिः [उपप्लवान्तं] विपदवधिं [किरणपरिक्षयेण धूसरा] मलिना [दिवातनस्य] दिनभवस्य। सायञ्चिरमित्यादिना (४,

किरणपरिचयधूसरा प्रदोषम् ॥ ४६ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
रतिविलापो नाम चतुर्थः सर्गः ॥

---

## पञ्चमः सर्गः ।

---

तथा समक्षं दहता मनोभवं
पिनाकिना भग्नमनोरथा सती ।

३, २३ पा०) ख्युप्रत्ययः। [शशिनः] चन्द्रस्य [लेखा] [प्रदोषम्]। रश्मिमिव [परिपालयाम्बभूव] प्रतीक्षांचक्रे । पुष्पिताग्रावृत्तम् "अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ४६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां चतुर्थः सर्गः ॥ ४ ॥

---

तथेति। पर्वतस्यापत्यं स्त्री [पार्वती तथा] तेन प्रकारेण अक्ष्णः समीपे [समक्षं] पुरतः। अव्ययं विभक्तिसमीपसमृद्धी त्यादिना (२, १, ६ पा०) अव्ययीभावः। [मनोभवं] मन्मथं [दहता] भस्मीकुर्वता [पिनाकिना] ईश्वरेण [भग्नः]. खण्डितः [मनोरथः] अभिलाषो यस्याः सा तथोक्ता सती [हृदयेन]

निनिन्द रूपं हृदयेन पार्वती
प्रियेषु सौभाग्यफला हि चारुता ॥ १ ॥
इयेष सा कर्त्तुमवन्ध्यरूपतां
समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं
तथाविधं प्रेम पतिश्च तादृशः ? ॥ २ ॥

मनसा [रूपं] सौन्दर्य्यं [निनिन्द] धिक् मे रूपं, यत् हरमनोहरणाय नालम् इति गर्हितवतीत्यर्थः। युक्तञ्च एतदित्याह,— तथाहि, [चारुता] सौन्दर्य्यम् [प्रियेषु] पतिषु विषये [सौभाग्यम्] प्रियवाल्लभ्यम् [फलम्] यस्याः सा तथोक्ता। सौन्दर्य्यस्य तदेव फलं यद्भर्त्तृसौभाग्यं लभ्यते; नो-चेत् विफलं तत् इति भावः। अस्मिन् सर्गे वंशस्थं वृत्तम्। "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

इयेषेति। [सा] पार्वती [समाधिम्] एकाग्रताम् [आस्थाय] अवलम्ब्य [तपोभिः] वक्ष्यमाणनियमैः करणभूतैः [आत्मनः] स्वस्य [अवन्ध्यरूपताम्] सफलसौन्दर्य्यम् [कर्त्तुम् इयेष] इच्छति स्म, तपसा शिवं वशीकर्त्तुमुद्युक्तेत्यर्थः। [अन्यथा] ततोऽन्यप्रकारेण [कथं वा] तत् [द्वयमवाप्यते] ? ] किं तद्-द्वयं ? तथाभूता विधा प्रकारो यस्य तत् [तथाविधं प्रेम] स्नेहः, येन अर्द्धाङ्गहरा हरस्य भवेदिति भावः। [तादृशः पतिश्च] यो मृत्युञ्जय इति भावः। द्वयमेव खलु स्त्रीणामपेक्षितं, यद्भर्त्तृवाल्लभ्यं जीवद्भर्त्तृकत्वञ्चेति, तच्च तपश्चर्य्यैकसाध्यमिति निश्चिकाय इत्यर्थः। अत्र मनुः,—"यद् दुष्करं यद्-

निशम्य चैनां तपसे कृतोद्यमां
सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा
निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥
मनीषिताः सन्ति गृहेषु देवताः
तपः क्व वत्से ! क्व च तावकं वपुः ।

रापं यद्दुर्गं यच्च दुस्तरम् । तत् सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥" इति (अ० ११ श्लो० १३८) ॥ २ ॥

निशम्येति । [मेना] मेनका [च] [गिरीशप्रतिसक्तमानसाम्] हरासक्तचित्तां [तपसे] तपश्चरणाय [कृतोद्यमाम्] कृतोद्योगाम् [सुतां निशम्य] श्रुत्वा [एनाम्] पार्वतीम् [वक्षसा परिरभ्य] आलिङ्ग्य [महतो मुनिव्रतात्] तपसः [निवारयन्ती उवाच] । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात्, वारणार्थानामीप्सितः (१, ४, २७ पा०) इति न अपादानत्वं, तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् ध्रुवमपायेऽपादानमिति (१, ४, २४ पा०) अपादानत्वमेव स्यात् । यथाह भाष्यकारः,—"यत्र मिथ्या सम्प्राप्य निवर्त्तते तत्र ध्रुवमपायेऽपादानमिति प्रसिद्धम्" ॥ ३ ॥

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह,—

मनीषिता इति । [हे वत्से !] मनस ईषिताः इष्टाः [मनीषिताः] शकन्ध्वादित्वात्साधुः । [देवताः] शच्यादयः [गृहेषु सन्ति] त्वं ता आराधयेति शेषः । [तपः क्व] तव इदम् [तावकम्] युष्मदस्मदोः अन्यतरस्यां खञ् च (४, ३, १ पा०) इत्यण्प्रत्ययः । तवकममकावेकवचने इति (४, ३, ३ पा०)

पदं सहेत भ्रमरस्य पेलवं
शिरीषपुष्पं न पुनः पतत्त्रिणः ॥ ४ ॥

इति ध्रुवेच्छामनुशासती सुतां
शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ? ॥ ५ ॥

कदाचिदासन्नसखीमुखेन सा
मनोरथज्ञं पितरं मनस्विनी ।

तवकादेशः। [वपुश्च क्व ?] तथाहि [पेलवम्] मृदुलं [शिरीषपुष्पं भ्रमरस्य] भृङ्गस्य [पदम्] पदस्थितिं [सहेत] [पत्त्रिणः पुनः] पक्षिणस्तु [पदं न] सहेत अतिसौकुमार्यात् दिव्योपभोगयोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः। अत्र दृष्टान्तालङ्कारः ॥ ४ ॥

इतीति। [इति] एवम् [अनुशासती] उपदिशन्ती [मेना ध्रुवेच्छाम्] स्थिरव्यवसायां [सुताम्] पार्वतीम् [उद्यमात्] उद्योगात्तपोलक्षणात् [नियन्तुम्] निवारयितुम् [न शशाक] समर्था न अभूत्। तथाहि, [ईप्सितार्थे] इष्टार्थे [स्थिरनिश्चयं मनः निम्नाभिमुखं पयश्च कः प्रतीपयेत् ?] प्रतीकूलयेत् प्रतिनिवर्त्तयेदित्यर्थः। निम्नप्रवणं पय इव इष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः। अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालङ्कारः ॥ ५ ॥

कदाचिदिति। अथ [कदाचित् मनस्विनी] स्थिरचित्ता [सा] पार्वती [मनोरथज्ञम्] अभिलाषाभिज्ञं [पितरम्] हिम-

अयाचतारण्यनिवासमात्मनः
फलोदयान्ताय तपःसमाधये ॥ ६ ॥
अथानुरूपाभिनिवेशतोषिणा
कृताभ्यनुज्ञा गुरुणा गरीयसा।
प्रजासु पश्चात् प्रथितं तदाख्यया
जगाम गौरी शिखरं शिखण्डिमत् ॥७॥
विमुच्य सा हारमहार्य्यनिश्चया

वक्तम् [आसन्नसखी] आप्तसखी सैव [मुखम्] उपायः। "मुखं निःसरणे वक्ते प्रारम्भोपाययोरपि" इति विश्वः। तेन [फलोदयः] फलोत्पत्तिः [अन्तः] अवधिर्यस्य तस्मै [तपःसमाधये] तपोनियमार्थम् [आत्मनः] स्वस्य [अरण्यनिवासम्] वनवासम् [अयाचत] दुह्याचित्यादिना (१) (१, ४, ५१ पा० सू० भा०) द्विकर्मकत्वम् ॥ ६ ॥

अथेति। [अथ गौरी] [अनुरूपेण] योग्येन [अभिनिवेशेन] आग्रहेण तुष्यतीति तथोक्तेन [गरीयसा] पूज्यतमेन [गुरुणा] पित्रा [कृताभ्यनुज्ञा] तपः कुरु इति कृतानुमतिः सती [पश्चात्] तपःसिद्ध्युत्तरकालम् [प्रजासु] जनेषु [तदाख्यया] तस्याः गौर्य्याः संज्ञया [प्रथितम्] गौरीशिखरमिति प्रसिद्धमित्यर्थः। [शिखण्डिमत्] न तु हिंस्रप्राणिप्रचुरमिति भावः। [शिखरम्] शृङ्गम् [जगाम] ययौ ॥ ७ ॥

---

(१) दुह्याच् पच् दण्ड्रुधि-प्रच्छि-चिब्रू-शासि-जि-मन्थ् मुषाम्।
कर्मयुक् स्यादकथितं तथा स्यान्नी-हृ-कृष्-वहाम्। भाष्यका०

विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं
पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

यथा प्रसिद्धैर्मधुरं शिरोरुहैः
जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं
सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥

विमुच्येति। [अहार्य्यनिश्चया] अनिवार्य्यनिश्चया [सा] गौरी [विलोलाभिः] चलाभिः [यष्टिभिः] प्रतिसरैः [प्रविलुप्तम्] प्रमृष्टं [चन्दनम्] स्तनान्तरगतं येन तं तथोक्तम् [हारम्] मुक्तावलीं [विमुच्य] विहाय [बालारुणबभ्रु] बालार्कपिङ्गलं [पयोधरयोः] स्तनयोः [उत्सेधेन] उच्छ्रायेण [विशीर्णा] विघटिता [संहतिः] अवयवसंश्लेषो यस्य तत् तथोक्तम् [वल्कलम्] कण्ठलम्बि स्तनोत्तरीयभूतम् [बबन्ध] धारयामास इत्यर्थः ॥ ८ ॥

यथेति। तस्याः देव्याः आननम् [तदाननं प्रसिद्धैः] भूषितैः। "प्रसिद्धौ ख्यातभूषितौ" इत्यमरः। रोहन्तीति रुहाः। इगुपध-ज्ञा-प्री-किरः क इति (३, १, १३५ पा॰) कप्रत्ययः। शिरसि रुहाः तैः [शिरोरुहैः] मूर्द्धजैः [यथा मधुरम्] प्रियम् [अभूत्]। "स्वादुप्रियौ तु मधुरौ" इत्यमरः। [जटाभिरप्येवम्] मधुरम् अभूत्]। तथाहि [पङ्कजम्] पद्मम् [षट्पदश्रेणिभिः] भ्रमरपङ्क्तिभिरेव [न] किन्तु सह शैवलासङ्गेन [सशैवलासङ्गमपि]। तेन सहेति तुल्ययोगे (२, २,

प्रतिक्षणं सा कृतरोमविक्रियां
व्रताय मौञ्जीं त्रिगुणां बभार याम्।
अकारि तत्पूर्वनिबद्धया तया
सरागमस्या रसनागुणास्पदम्॥ १०॥

विसृष्टरागादधरान्निवर्त्तितः
स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयी तया करः॥ ११॥

२८ पा॰ ) बहुव्रीहिः। [प्रकाशते] शैवलेनापि शोभते एव इत्यर्थः॥ ९॥

प्रतिक्षणमिति। [सा] देवी [प्रतिक्षणम्] क्षणे क्षणे [कृतरोमविक्रियाम्] पारुष्यात् कृतरोमाञ्चां [त्रिगुणाम्] त्रिरावृत्तां [यां मौञ्जीम्] मुञ्जमयीं मेखलाम् [व्रताय] तपसे [बभार]। तदेव पूर्वं प्रथमं यस्य [तत्पूर्वम्] यथा तथा [निबद्धया तया] मौञ्ज्या [अस्याः] देव्याः [रशनागुणास्पदम्] स्थानं जघनं सह रागेण [सरागम्] सलोहितम् [अकारि] कृतम् सौकुमार्य्यातिशयादिति भावः॥ १०॥

विसृष्टेति। [तया] देव्या [विसृष्टरागात्] त्यक्तलाक्षारसरञ्जनात् निसृष्टेति पाठे नितरां त्यक्तलाक्षारागात्। [अधरात्] अधरोष्ठात् [निवर्त्तितः] रागत्यागेन निष्प्रयोजनत्वात् इति भावः तथा [स्तनाङ्गरागेण अरुणितात्] अरुणीकृतात् पतनसमये तस्य स्तनयोः उपरोधादिति भावः। [कन्दुकाच्च] निवर्त्तितः। [कुशाङ्कुराणाम्] [आदानेन] लवनेन [परिक्षताः]

महार्हशय्यापरिवर्त्तनच्युतैः
स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी
निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥

पुनर्ग्रहीतुं नियमस्थया तया
द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं
विलोलदृष्टं हरिणाङ्गनासु च ॥ १३ ॥

प्रणिताः अङ्गुलयः] यस्य स तथोक्तः [करः] पाणिः [अक्षसूत्रप्रणयी] अक्षमालासहचरः [कृतः] ॥ ११ ॥

महार्हेति। महान् अर्हो मूल्यं यस्याः सा [महार्हा] श्रेष्ठा या [शय्या] तस्यां [परिवर्त्तनेन]लुण्ठनेन [च्युतैः] भ्रष्टैः [स्वकेशपुष्पैरपि] [या] देवी [दूयते स्म] क्लिश्यति स्म पुष्पाधिकसौकुमार्य्यात् इति भावः। [सा] देवी बाहुलताम् उपधत्ते उपधानीकरोतीति [बाहुलतोपधायिनी] सती ]केवले] संस्तरणरहिते [स्थण्डिले] भूमौ [एव अशेत] शयितवती। तथा [निषेदुषी] उपविष्टा च क्वसुश्चेति (४, २, १०७ पा०), क्वसुः उगितश्चेति (४, १, ६ पा०) ङीप्। भूमौ एव शयनादिव्यवहारो न जातु उपरि इत्यर्थः ॥ १२ ॥

पुनरिति। [नियमस्थया] व्रतस्थया [तया] देव्या [द्वयेऽपि द्वयं पुनः ग्रहीतुम्] पुनः आनेतुं [निक्षेपः अर्पितामिव] निक्षेपत्वेन अर्पितं किम्? क्वचित् द्वयोषु इति प्रामादिकः पाठः। कुत्र द्वये किं द्वयम् अर्पितम्, इत्याह,—[तन्वीषु लतासु]

अतन्द्रिता सा स्वयमेव वृक्षकान्
घटस्तनप्रस्रवणैर्व्यवर्द्धयत्।
गुहोऽपि येषां प्रथमाप्तजन्मनां
न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥
अरण्यबीजाञ्जलिदानलालिताः
तथा च तस्यां हरिणा विशश्वसुः।

विलास एव चेष्टितं [विलासचेष्टितम्] [हरिणाङ्गनासु विलोलदृष्टम्] चञ्चलावलोकितं [च]। व्रतस्थायां तस्यां तयोः अदर्शनात् लतादिषु दर्शनाच्च अर्पितम् इवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणम् अस्तीति भावः ॥ १३ ॥

अतन्द्रितेति। [सा] देवी [स्वयमेव अतन्द्रिता] असञ्जाततन्द्रा सती तारकादित्वात् (५, २, ३६ पा०) इतच्प्रत्ययः। [वृक्षकान्] स्वल्पवृक्षान्। अल्पे (५, ३, ८५ पा०) इति अल्पार्थे कप्रत्ययः। [घटौ] एव [स्तनौ] तयोः [प्रस्रवणैः] प्रस्रुतपयोभिः [व्यवर्द्धयत्]। [गुहः] कुमारः [अपि] [प्रथमाप्तजन्मनाम्] प्रथमलब्धजन्मनाम् अग्रजातानाम् इत्यर्थः [येषाम्] वृक्षकाणां सम्बन्धि [पुत्रवात्सल्यम्] सुतप्रेम [न अपाकरिष्यति] उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्त्तिष्यते इत्यर्थः ॥१४॥

अरण्येति। [अरण्यबीजानाम्] नीवारादीनाम् [अञ्जलयः] तेषां [दानेन] लालिताः [हरिणाश्च तस्याम्] देव्यां [तथा विशश्वसुः] विश्वस्तं जग्मुः। "समौ विस्रब्धविश्वस्तौ" इत्यमरः। [यथा कुतूहलात्] औत्सुक्यात् [तदीयैः] हरिणसम्बन्धिभिः [नयनैः] नेत्रैः करणैः संकीयैः [लोचने सखीनां पुरः] पुरतः अनेन तेषां सम्बन्धसहत्वमुक्तम्। [अमिमीत]

यथा तदीयैर्नयनैः कुतूहलात्
पुरः सखीनाममिमीत लोचने ॥ १५ ॥

कृताभिषेकां हुतजातवेदसं
त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्
न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥

अक्षिपरिमाणतारतम्यज्ञानाय मानं चकार इत्यर्थः। केचित्तु सा पार्वती तदीयैः नेत्रैः कुतूहलात् पुरोऽग्रे वर्त्तमानानां सखीनां लोचने अमिमीत अतस्थत्वात् आत्मन इत्याहुः। माङ्माने इति अस्माद्धातोर्लङ्। इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः ॥ १५ ॥

तपःप्रभावमाह,—

कृतेति। [कृताभिषेकाम्] कृतस्नानां [हुतजातवेदसम्] हुताग्निकां कृतहोमाम् इत्यर्थः। त्वचा वल्कलेन उत्तरासङ्गवतीम् उत्तरीयवतीं [त्वगुत्तरासङ्गवतीम्] अधीतमस्याः अस्तीति [अधीतिनीम्] स्तुतिपाठादि कुर्वतीम्। इष्टादिभ्यश्च (५, २, ८८ पा०)। इति इनिः [ताम्] देवीं [दिदृक्षवः] द्रष्टुमिच्छवः [ऋषयः] मुनयः [अभ्युपागमन्] समुपागताः। न च अत्र कनिष्ठसेवादोष इत्याह,—[धर्मवृद्धेषु वयो न समीक्ष्यते] न प्रमाणीक्रियते। सति धर्मज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः। तथाच मनुः,—"न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः इति॥" (अ० २, श्लो० १५६) ॥ १६ ॥

विरोधिसत्त्वोज्झितपूर्वमत्सरं
द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसम्भृतानलं
तपोवनं तच्च बभूव पावनम् ॥ १७ ॥

यदा फलं पूर्वतपःसमाधिना
न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं
तपो महत् सा चरितुं प्रचक्रमे ॥ १८ ॥

विरोधीति । [विरोधिभिः सत्त्वैः] गोव्याघ्रादिभिः [उज्झित-पूर्वमत्सरम्] त्यक्तपूर्ववैरं हिंसारहितमित्यर्थः । [द्रुमैः अभीष्ट-प्रसवेन] इष्टफलेन [अर्चिताः] पूजिताः [अतिथयः] यस्मिन् तत् तथोक्तं [नवानामुटजानाम्] पर्णशालानाम् [अभ्य-न्तरेषु सम्भृताः] सञ्चिताः [अनलाः] अग्नयो यस्मिन् तत् तथोक्तं [तच्च तपोवनम्] पावयतीति [पावनं बभूव]। अहिंसातिथिसत्काराग्निपरिचर्य्याभिः जगत्पावनं बभूव इत्यर्थः ॥ १७ ॥

यदेति । [सा] देवी [यदा] यस्मिन् काले [तावता] ताव-त्प्रमाणेन [पूर्वतपःसमाधिना] पूर्वेण अनुष्ठीयमानप्रकारेण तपो-नियमेन [काङ्क्षितं फलं लभ्यम्] लब्धुं शक्यं [नामंस्त] अशक्यम् अमंस्तेत्यर्थः । [तदा] तत्काले अविलम्बेन इत्यर्थः [स्वश-रीरस्य मार्दवम्] मृदुत्वं सौकुमार्य्यम् [अनपेक्ष्य] अविगणय्य [महत्] दुश्चरं [तपश्चरितुम्] साधयितुं [प्रचक्रमे] उपच-क्रमे ॥ १८ ॥

क्लमं ययौ कन्दुकलीलयापि या
तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं
मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥

शुचौ चतुर्णां ज्वलतां हविर्भुजां
शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभाम्
अनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥

क्लममिति । [या] देवी [कन्दुकलीलया] कन्दुकक्रीड़यापि [क्लमं [ययौ] ग्लानिं प्राप [तया] देव्या [मुनीनां चरितम्] तीव्रं तपः [व्यगाह्यत] प्रविष्टम् । अत्र उत्प्रेक्ष्यते,—[ध्रुवम्] अस्याः [वपुः काञ्चनपद्मेन] सुवर्णकमलेन [निर्मितम्] गठितम् अत एव [प्रकृत्या] पद्मस्वभावेन [मृदु च] सुकुमारमपि काञ्चनस्वभावेन [ससारञ्च] कठिनम् [एव] तथा च तत् उपादानकत्वात् देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वम् इत्युत्प्रेक्षार्थः ॥ १९ ॥

शुचाविति । [शुचौ] ग्रीष्मे [शुचिस्मिता] विशदमन्दहासा [सुमध्यमा] पार्वती [ज्वलताम्] दीप्तिमतां [चतुर्णां हविर्भुजाम्] अग्नीनां [मध्यगता] सती नेत्रे प्रतिहन्तीति तां [नेत्रप्रतिघातिनीं प्रभाम्] सावित्रं तेजः [विजित्य] न विद्यते अन्यत्र दृष्टिर्यस्याः सा [अनन्यदृष्टिः] सती [सवितारम्] सूर्य्यम् [ऐक्षत] ददर्श । "ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः" इति स्मरणात्, पञ्चाग्निमध्ये तपश्चचारेत्यर्थः ।

तथातितप्तं सवितुर्गभस्तिभि:
मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः
शनैः शनैः श्यामिकया कृतं पदम् ॥ २१ ॥

अयाचितोपस्थितमम्बु केवलं
रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः किल पारणाविधिः
न वृक्षवृत्तिव्यतिरिक्तसाधनः ॥ २२ ॥

तत्र सवितैव पञ्चमोऽग्निः "अग्निः सविता सवितैवाग्निः" इति श्रौतलिङ्गात् ॥ २० ॥

तथेति । [सवितुः] सूर्य्यस्य [गभस्तिभिः] किरणैः [तथा] पूर्वोक्तप्रकारेण [अतितप्तम्] सन्तप्तं तस्याः इदं [तदीयं मुखं कमलश्रियम्] कमलस्य शोभां [दधौ] प्राप । यथा रवितापात् कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः । किन्तु [अस्य] मुखस्य [दीर्घयोः अपाङ्गयोः केवलम्] नेत्रान्तयोः एव [शनैः शनैः] मन्दं मन्दं [श्यामिकया] कालिम्ना [पदम्] स्थानं [कृतम्] तयोः सौकुमार्य्यादित्यर्थः ॥ २१ ॥

अयाचितेति । [अयाचितोपस्थितम्] अप्रार्थितोपनतं [केवलम् अम्बु] उदकं [रसात्मकस्य] अमृतमयस्य [उडूनाम्] नक्षत्राणां [पतिः चन्द्रस्तस्य] [रश्मयश्च] [तस्याः] पार्वत्याः [पारणाविधिः] अभ्यवहारकर्म [बभूव] तावन्मात्रसाधनकोऽभूत् इत्यर्थः । साध्यसाधनयोः अभेदेन व्यपदेशः साधनान्तरव्यावृ-

निकामतप्ता विविधेन वह्निना
नभश्चरेणेन्धनसम्भृतेन सा ।
तपात्यये वारिभिरुक्षिता नवैः
भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥ २३ ॥
स्थिताः क्षणं पक्ष्मसु ताड़िताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।

त्यर्थः । [किल] इति प्रसिद्धौ । वृक्षाणां या [वृत्तिः] जीवनोपायः [तद्व्यतिरिक्तम्] [साधनम्] उपायो यस्य स तथोक्तः पारणाविधिः [न बभूव] । वृक्षोऽपि अयाचितोपस्थितेन मेघोदकेन इन्दुकिरणैश्च जीवतीति प्रसिद्धम् अम्बिकापि तावन्मात्रम् अवलम्बतेत्यर्थः ॥ २२ ॥

निकामेति [विविधेन] पञ्चविधेन इत्यर्थः [नभश्चरेण] खेचरेण आदित्यरूपेण इत्यर्थः । [इन्धनसम्भृतेन] काष्ठसमिद्धेन [वह्निना] [निकामम्] अत्यन्तं [तप्ता सा] अम्बिका [तपात्यये] ग्रीष्मान्ते प्रावृषीत्यर्थः [नवैर्वारिभिः उक्षिता ] सिक्ता सती [भुवा] पञ्चाग्नितप्तया [सह ऊर्ध्वगम्] ऊर्ध्वं प्रसृतम् [उष्माणम्] वाष्पम् [अमुञ्चत्] "ग्रीष्मोष्मवाष्प उष्माणः" इति यादवः ॥२३॥

स्थिता इति । उदकस्य विन्दवः [उदविन्दवः] मन्थोदनेत्यादिना ( ६, ३, ६० पा० ) उदकशब्दस्य उदादेशः । प्रथमे [उदविन्दवः] प्रथमविशेषणात् विन्दूनां विरलत्वं बहुवचनात् न अतिविरलत्वञ्च गम्यते तथा च चिरत्वनाभ्यन्तरगमनयोः निर्वाहः । [तस्याः] पार्वत्याः [पक्ष्मसु] नेत्रलोमसु [क्षणम्]

( १ ) मन्थादिषु परेषु उदकस्य उदः स्यात् ।

बलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः ॥ २४ ॥
शिलाशयान्तामनिकेतवासिनीं
निरन्तरास्वन्तरवातवृष्टिषु।
व्यलोकयन्नुन्मिषितैस्तड़िन्मयैः
महातपः साक्ष्य इव स्थिताः क्षपाः ॥ २५ ॥

[स्थिताः] स्थितिं गताः स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षण-मिति स्नैग्ध्यञ्च गम्यते। अनन्तरं [ताड़िताः] व्यथिताः [अधरः] ओष्ठो यैः ते तथोक्ताः एतेन अधरस्य मार्दवं गम्यते। ततः [पयो-धरयोः] स्तनयोः [उत्सेधे] उपरिभागे [निपातेन] पतनेन [चूर्णिताः] जर्जरिताः कुचकाठिन्यात् इति भावः। तदनु [वलीषु] उदररेखासु [स्खलिताः] निम्नोन्नतत्वादिति भावः। इत्थं [चिरेण] न तु शीघ्रं प्रतिबन्धबाहुल्यादिति भावः [नाभिम्] [प्रपेदिरे] प्रविष्टाः न तु निर्जग्मुः एतेन नाभेः गाम्भीर्य्यं गम्यते। अत्र प्रतिपदमर्थवत्त्वात्परिकरालङ्कारः ॥२४॥

शिलेति। निरन्तरासु] नीरन्ध्रासु अन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयः तासु [अन्तरवातवृष्टिषु] न निकेते गृहे वसतीति [अनिकेतवासिनीम्] अनावृतदेशवासिनीम् इत्यर्थः शिलायां शेते इति [शिलाशयाम्] शिलातलशायि-नीम्। अधिकरणे शेतेरिति (३, २, १५ पा०) अच्प्रत्ययः। [ताम्] पार्वतीं साक्षाद्द्रष्टा साक्षी। साक्षाद्द्रष्टरि संज्ञा-याम् (१) (५,२, ९१ पा०) इति इनिप्रत्ययः। तस्य कर्म साक्ष्यम्

(१) साक्षाच्छब्दाद्द्रष्टर्य्यर्थे इ नि गम्यस्यचासादिनेन भत्वात् अव्ययटिलोपः।

निनाय सात्यन्तहिमोत्किरानिलाः
सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः
पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥

[महातपसः साक्ष्ये स्थिताः क्षपाः] [तडिन्मयैः] विद्युद्रूपैः [उन्मिषितैः] अवलोकनैः [व्यलोकयन्निव] इवेति चक्षुषा विलोकनमेव उत्प्रेक्ष्यते साक्ष्यन्तु "आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥" इति प्रमाणसिद्धत्वात् न उत्प्रेक्ष्यमित्यनुसन्धेयम् ॥ २५ ॥

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा सम्प्रति हेमन्ते तपश्चरणप्रकारमाह,—

निनायेति । [सा] पार्वती उत्किरन्ति क्षिपन्ति इति उत्किराः इगुपधज्ञेत्यादिना (३,१,१३५पा०)कः । [अत्यन्तं हिमानाम् उत्किराः अनिलाः] यासु ताः [सहस्यरात्रीः] पौषरात्रीः । "पौषे तैषसहस्यौ द्वौ" इत्यमरः । उदके वासः [उदवासः] प्रेषंवासवाहनधिषु च (१) (६, ३, ५८, पा० ) इत्युदादेशः । [उदवासे तत्परा] आसक्ता तथा परस्परमाक्रन्दिनि] अन्योन्यम् आक्रोशिनि [ पुरः] अग्रे [वियुक्ते] विरहिणि वियोगं प्राप्ते इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोः [चक्रवाकयोर्मिथुने] द्वन्द्वे कृपावती] सती [निनाय] । दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा

(१) पेषमादिषु परेषु उदकस्य उदः स्यात् ।

मुखेन सा पद्मसुगन्धिना निशि
प्रवेपमानाधरपत्रशोभिना।
तुषारवृष्टिक्षतपद्मसम्पदां
सरोजसन्धानमिवाकरोदपाम् ॥ २७ ॥
स्वयं विशीर्णद्रुमपर्णवृत्तिता
परा हि काष्ठा तपसस्तया पुनः।

न तु कामितया इति व्याख्यानवकाशः। "अप्सु वासस्तु हेमन्ते क्रमशो वर्द्धयेत्तपः" इति मनुः (अ० ६, श्लो० २३) ॥२६॥

मुखेनेति। [सा] पार्वती [निशि] रात्री [पद्मवत् सुगन्धिना] सुरभिणा गन्धस्येत् इत्यादिना (५,४, १३५ पा०) (१) इकारः। [प्रवेपमानः] कम्पमानः [अधरः] ओष्ठ एव [पत्रम्] दलं तेन [शोभते] इति तथोक्तेन [मुखेन] [तुषारवृष्ट्या] तुहिनवर्षेण [क्षताः] नाशिताः [पद्मसम्पदः] यासां तासाम् [अपां सरोजसन्धानम्] पद्मसङ्घटनम् [अकरोत् इव] इत्युत्प्रेक्षालङ्कारः। पद्मान्तरं तुहिनेन उपहन्यते तन्मुखपद्मन्तु न तथेति व्यतिरेकालङ्कारो व्यज्यते इत्युभयोः सङ्करः ॥ २७ ॥

स्वयमिति। [स्वयं विशीर्णानि] स्वतश्च्युतानि [द्रुमपर्णानि] एव [वृत्तिः] जीवनं यस्य तस्य भावस्तत्ता [तपसः परा काष्ठा] परमुत्कर्षो हि। "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः। [तया] देव्या [पुनः तत्] पर्णवर्त्तनम् [अपि अपाकीर्णम्] अपाकृतम्। [अतः] पर्णापकरणाद्धेतोः प्रियं वदतीति [प्रियंवदा] प्रियवशे वदः खच् इति (३, २, ३८ पा०)

(१) उत्पूतिसु सुरभिपूर्वकगन्धान्तबहुव्रीहेरित् स्यात्।

तदप्यपाकीर्णमतः प्रियंवदां
वदन्त्यपर्णेति च यां पुराविदः ॥ २८॥
मृणालिकापेलवमेवमादिभिः
व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधश्चकार सा ॥ २९ ॥

खच्प्रत्ययः। अरुर्द्विषत् अजन्तस्य मुम् इति (६,३, ६७ पा॰) मुमागमः। [ताम्] पार्वतीं [पुराविदः] पुराणज्ञाः तपःकरणसमये अविद्यमानं पर्णभक्षणं यस्याः सा [अपर्णा] इति [वदन्ति] नामान्तरसमुच्चयार्थश्चकारः। स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः। अत्रापर्णामित्यपपाठः इति शब्दाभिहिते द्वितीयानुपपत्तेः। यथाह वामनः "निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य (१) प्रायिकत्वात्" इति ॥ २८ ॥

मृणालिकेति। [मृणालिकापेलवम्] पद्मिनीकन्दकोमलं [स्वम्] स्वकीयम् [अङ्गम्] शरीरम् [एवम्] उक्तप्रकारतो याग्निमध्यवासव्रतम् [आदिः] येषां तैः [व्रतैः] अहश्च निशा च [अहर्निशम्]। समाहारे द्वन्द्वैकवद्भावः। अत्यन्तसंयोगे द्वितीया। [ग्लपयन्ती] कर्शयन्ती [सा] पार्वती [कठिनैः] क्लेशसहैः इत्यर्थः। [शरीरैः उपार्जितम्] सम्पादितं तपस्विनाम्

• (१) अभिहिते प्रथमेति वार्त्तिके अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः इति परिगणने प्रायेण इत्युक्तेः निपातस्यापि अभिधानप्रयोजकत्वं सूचितमिति भावः।

अथाजिनाषाढ़धरः प्रगल्भवाक्
ज्वलन्निव ब्रह्ममयेन तेजसा।
विवेश कश्चिज्जटिलस्तपोवनं
शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥
तमातिथेयी बहुमानपूर्वया
सपर्य्यया प्रत्युदियाय पार्वती।

ऋषीणाम् [तपः] [ दूरम् [ अत्यन्तम् [अधश्चकार] तिरश्चकार अतिशिश्ये इत्यर्थः तपस्विभिः अपि एवं तपः कर्त्तुं न शक्यते इति तात्पर्य्यार्थः ॥ २८ ॥

अथेति। [अथ] अनन्तरम् [अजिनम्] कृष्णमृगत्वक् [आषाढ़ः] प्रयोजनमस्येति [आषाढ़ः] पालाशदण्डः। "पालाश-दण्ड आषाढ़ः". इत्यमरः। विशाखाषाढ़ादण् मन्यदण्डयोः (५, १, ११० पा०) इति अण्प्रत्ययः। तयोः [धरः] तयोर्धः [प्रगल्भवाक्] प्रौढ़वचनः [ब्रह्ममयेन] वैदिकेन [तेजसा] ब्रह्मवर्चसेन इत्यर्थः। [ज्वलन्निव] स्थितः इव शब्दो निर्द्धारणार्थः [कश्चित्] अनिर्दिष्टः [जटिलः] जटावान् ब्रह्मचारीति शेषः। (५, २, १०० पा०) पिच्छादित्वादिलच्प्रत्ययः। [शरीरबद्धः] बद्धशरीरः शरीरवान् इत्यर्थः। वाहिताग्न्यादिषु (२, २, ३७ पा०) पाठात् साधुः। प्रथमाश्रमः] यथा ब्रह्म-चर्य्याश्रम इव यथाशब्द इवार्थे [तपोवनम्] देव्या इति शेषः [विवेश] प्रविष्टवान् ॥ ३० ॥

तमिति। अतिथिषु साध्वी [आतिथेयी] पथ्यतिथ्यादिना (४, ४, १०४ पा०) ढञ्प्रत्ययः। टिड्ढाणञित्यादिना (४,१,१५ पा०) ङीप्। [पार्वती] [तम्] ब्रह्मचारिणं [बहुमानपूर्वया]

भवन्ति साम्येऽपि निविष्टचेतसां
वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥ ३१ ॥
विधिप्रयुक्तां परिगृह्य सत्क्रियां
परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन् ऋजुनैव चक्षुषा
प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥
अपि क्रियार्थं सुलभं समित्कुशं ?
जलान्यपि स्नानविधिक्षमाणि ते ? ।

बहुमानः पूर्वो यस्यास्तया गौरवपूर्वया इत्यर्थः [सपर्यया] अर्चया। "सपर्यार्चार्हणाः समाः" इत्यमरः। [प्रत्युदियाय] प्रत्युज्जगाम। कथं समानेऽपि तस्याः तादृशी प्रतिपत्तिः ? अत आह। [साम्ये] सति [अपि] [निविष्टचेतसाम्] स्थिरचित्तानां [वपुर्विशेषेषु] शरीरविशेषेषु अतिशयितं गौरवं यासु ताः [अतिगौरवाः] अतिगौरवसहिताः [क्रियाः] चेष्टाः [भवन्ति] प्रवर्त्तन्त इत्यर्थः। साधवो न साम्याभिनिवेशिन इति भावः ॥३१

विधीति। [सः] ब्रह्मचारी [विधिना प्रयुक्ताम्] अनुष्ठितां [सत्क्रियाम्] पूजां [परिगृह्य] स्वीकृत्य [क्षणं परिश्रमम्] विश्रामञ्च [विनीय नाम] नामेति अपरमार्थे। अथ [उमाम् ऋजुनैव] विलासरहितेनैव [चक्षुषा] पश्यन् [अनुज्झित-क्रमः] अत्यक्तोचितपरिपाटीकः सन् [वक्तुं प्रचक्रमे] प्रारेभे ॥ ३२ ॥

अपीति। अत्र अपिशब्दः प्रश्ने। [क्रियार्थम्] होमादि-कर्मानुष्ठानार्थं समिधश्च कुशाश्च [समित्कुशम्।] जातिर-प्राणिनामिति (२, ४, ६, पा०) द्वन्द्वैकवद्भावः। [सुलभमपि ?]

अपि स्वशक्त्या तपसि प्रवर्त्तसे ?
शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३ ॥
अपि त्वदावर्जितवारिसम्भृतं
प्रवालमासामनुबन्धि वीरुधाम् ? ।
चिरोज्झितालक्तकपाटलेन ते
तुलां यदारोहति दन्तवाससा ॥ ३४ ॥

सुलभं कच्चित् ? [जलानि ते] तव [स्नानविधिक्षमाणि] स्नानक्रियायोग्यानि [अपि ?] कच्चित् ? किञ्च [स्वशक्त्या] निजसामर्थ्यानुसारेण [तपसि प्रवर्त्तसे अपि ?] देहम् अपीड़यित्वा तपश्चरसि कच्चित् ? इत्यर्थः। युक्तञ्च नाम एतत् [खलु] यस्मात् [शरीरम् आद्यम्] [धर्मसाधनम्]। धर्मस्तु कायेन वाचा बुद्धा धनादिना च क्रतुभिः साध्यते तेषु च वपुः एव मुख्यं साधनं सति देहे धर्मार्थकाममोक्षलक्षणाः चतुर्वर्गाः साध्यन्ते। अत एव "सततमात्मानमेव गोपायीत" इति श्रुतिः ॥ ३३ ॥

अपि त्वदेति। त्वया [आवर्जितेन] सिक्तेन [वारिणा सम्भृतम्] जनितम् [आसां वीरुधाम्] लतानाम् [प्रवालम्] पल्लवम् [अनुबन्धपि ?] अनुस्यूतं किम् ? यत् प्रवालं [चिरोज्झितः] चिरकालत्यक्तः लाक्षारागो येन तत् तथापि पाटलं स्वभावरक्तमित्यर्थः तेन [चिरोज्झितालक्तकपाटलेन ते] तव [दन्तवाससा] अधरेण। "ओष्ठाधरौ तु रदनच्छदौ दशनवाससी" इत्यमरः। [तुलाम्] साम्यम् [आरोहति] अच्छति— इत्यर्थः। तत्र तुलाशब्दस्य साहश्यवाचित्वात् तद्योगेऽपि तुल्यार्थैः अतुलोपमाभ्यामिति (२, ३, ७२ पा० ) न तृतीयाप्रतिषेधः तस्य तुल्ये सदृशवाचिन एव ग्रहणादिति ॥ ३४ ॥

अपि प्रसन्नं हरिणेषु ते मनः
करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि ! प्रचलैर्विलोचनैः
तवाक्षिसादृश्यमिव प्रयुञ्जते ॥ ३५ ॥

यदुच्यते पार्वति ! पापवृत्तये
न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने !
तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥

अपीति। [करस्थान् दर्भान् प्रणयेन] स्नेहेन [अपहरन्ति] इति ते तथोक्तेषु सापराधेषु इति भावः। अपराधिषु इति पाठे दर्भाणां प्रणयेन प्रार्थनया अपराधिषु [हरिणेषु] विषये [ते मनः] [प्रसन्नमपि ?] न क्षुभितं किम् ? सापराधेषु अपि न कोपितव्यं तपस्विभिः इति भावः। हे [उत्पलाक्षि ! ये] हरिणाः [प्रचलैः] [चञ्चलैः] [विलोचनैः] नेत्रैः [तव अक्षिसादृश्यम् प्रयुञ्जते इव] अभिनयन्तीव प्रसन्नत्वात् मृगनेत्राणि त्वन्नयनैः साम्यमुपयान्तीति भावः। उत्पलक्षेपचलैः इति पाठान्तरे उत्पलकम्पचलैः "भावानयने द्रव्यानयनम्" इति न्यायेन क्षिप्यमाणोत्पलचलैः इत्यर्थः ॥ ३५ ॥

यदिति। हे [पार्वति ! रूपम्] सौम्याकृतिः [पापवृत्तये] पापाचरणाय [न] भवतीति [यदुच्यते] लोकैरिति शेषः। [तद्वचः] न व्यभिचरति न स्खलतीति [अव्यभिचारि] सत्यम्। "यत्राकृतिस्तत्र गुणाः" "न सुरूपाः पापसमाचारा भवन्ति" इत्यादयो लोकवादा न विसंवादमासादयन्ति इत्यर्थः। किमिति ज्ञायते [तथाहि] हे [उदारदर्शने !] आयताक्षि !

विकीर्णसप्तर्षिबलिप्रहासिभिः
तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः।
यथा त्वदीयैश्चरितैरनाविलै:
महीधरः पावित एष सान्वयः ॥ ३७ ॥

अनेन धर्मः सविशेषमद्य मे
त्रिवर्गसारः प्रतिभाति भाविनि !।
त्वया मनो निर्विषयार्थकामया
यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥

सुरूपे ! इत्यर्थः। अथवा उन्नतध्याने ! विवेकवति ! इत्यर्थः। [ते] तव [शीलम्] सद्वृत्तं, "शीलं स्वभावे सद्वृत्ते" इत्यमरः। [तपस्विनामपि] उपदिश्यते अनेनेति उपदेशः प्रवर्त्तकं प्रमाणं तत्ताम् [उपदेशतां गतम्] प्राप्तम्। मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्त्तन्ते इति भावः ॥ ३६ ॥

विकीर्णेति। एषः [महीधरः] हिमवान् सप्त च ते ऋषयश्च सप्तर्षयः। दिक्सङ्ख्ये संज्ञायाम् (१) (२, १, १, ५०पा०) इति समासः। [विकीर्णैः] पर्य्यस्तैः [सप्तर्षीणाम्] सम्बन्धिभिः [बलिभिः] पुष्पोपहारैः [प्रहसन्ति] ये तैः तथोक्तैः [दिवः] अन्तरिक्षात् [च्युतैः गाङ्गैः सलिलैः तथा न पावितः] [अनाविलैः] अकलुषैः [त्वदीयैः चरितैः] [यथा सान्वयः] सपुत्रपौत्रः पावितः पवित्रीकृतः ॥ ३७ ॥

अनेनेति। हे [भाविनि !] प्रशस्ताभिप्राये ! [अनेन]

---

(१) संज्ञायामेव दिग्वाचकसंख्यावाचकौ समस्येते स तत्पुरुषः। असंज्ञायां तु द्विगुरेव।

प्रयुक्तसत्कारविशेषमात्मना
न मां परं सम्प्रतिपत्तुमर्हसि ।
यतः सतां सन्नतगात्रि ! सङ्गतं
मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥
अतोऽत्र किञ्चिद्भवतीं बहुक्षमां
द्विजातिभावादुपपन्नचापलः ।

कारणेन [धर्मः सविशेषम्] सातिशयम् [अद्य मे] त्रयाणां धर्मकामार्थानां वर्गः [त्रिवर्गः]। "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः। तत्र [सारः] श्रेष्ठः [प्रतिभाति] [यत्] यस्मात् कारणात् [मनसो निर्विषयौ अर्थकामौ] यस्याः तया [त्वया एकः] धर्म एव [प्रतिगृह्य] स्वीकृत्य [ सेव्यते]। यत्त्वया अर्थकामौ विहाय धर्म एव अवलम्बितः अतः सर्वेषां नः स श्रेयान् इति प्रतिपद्यते इत्यर्थः ॥ ३८ ॥

सम्प्रति मनोरथं जिज्ञासुः प्रस्तौति,—

प्रयुक्तेति। [आत्मना] त्वया [प्रयुक्तः] कृतः [सत्कारविशेषः] पूजातिशयो यस्य तं [माम्] [परम्] अन्यं [सम्प्रतिपत्तुम्] अवगन्तुं [ न अर्हसि ] हे [सन्नतगात्रि !] सन्नताङ्गि !। अङ्गगात्रकण्ठेभ्यः (१) इति (४, १, ५५ पा० वा०) वक्तव्यात् ङीप् [यतः] कारणात् मनस ईषिभिः [मनीषिभिः] विद्वद्भिः। शकन्ध्वादित्वात् साधुः [सतां सङ्गतम्] सख्यं सप्तभिः पदैः आपद्यते इति [साप्तपदीनम्] सप्तपदोच्चारणसाध्यम् [उच्यते]। तच्च आवयोः त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः। साप्तपदीनं सख्यमिति ( ५, २, २२ पा० ) निपातनात् साधुः ॥३९॥

(१) अङ्गादिभ्य उपसर्जनेभ्यः स्वाङ्गवाचिभ्यो ङीप् स्यात्।

अयं जनः प्रष्टुमनास्तपोधने !
न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥

कुले प्रसूतिः प्रथमस्य वेधसः
त्रिलोकसौन्दर्य्यमिवोदितं वपुः।
असृग्यमैश्वर्य्यसुखं नवं वयः
तपः फलं स्यात् किमतः परं वद ? ॥४१॥

अत इति। हे [तपोधने !] [अतः] सख्यालेतो: [अत्र] प्रस्तावे [बहुक्षमाम्] बह्वन्तिसहां यद्वा क्षमावतीं [भवतीम्] त्वां [द्विजातिभावात्] ब्राह्मणत्वात् [उपपन्नचापलः] सुलभधार्ष्ट्यः [अयम् जनः] स्वयमित्यर्थः। किञ्चित्प्रष्टुं मनो यस्य सः [किञ्चित्प्रष्टुमनाः] प्रष्टुकामः तुम् काममनसोः अपीति (६, ३, १०७ पा० वा०) (१) मकारलोपः। रहसि भवं [रहस्यम्] गोप्यं [न चेत्] प्रतिवक्तुम् अर्हति ॥ ४० ॥

प्रष्टव्यमाह,—

कुल इति। [प्रथमस्य वेधसः] हिरण्यगर्भस्य [कुले] अन्ववाये [प्रसूतिः] उत्पत्तिः। "यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः" इति ब्रह्मपुराणवचनात्। [वपुः] शरीरं [त्रयाणां लोकानां सौन्दर्य्यमिव उदितम्] एकत्र समाहृतम् [ऐश्वर्य्यसुखम्] सम्पत्सुखम् [असृग्यम्] अन्वेषणीयं न भवति किन्तु सिद्धमेवेत्यर्थः। [वयः नवम्] यौवनमित्यर्थः। [अतः परम्] अतोऽन्यत् [किं तपःफलं स्यात् ?] [वद] अस्ति चेदिति शेषः— न किञ्चित् अस्तीत्यर्थः ॥ ४१ ॥

---

(१) लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपीत्यादिवार्त्तिकेनेत्यर्थः।

भवत्यनिष्टादपि नाम दुःसहात्
मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा
न दृश्यते तच्च कृशोदरि ! त्वयि ॥ ४२ ॥
अलभ्यशोकाभिभवेयमाकृतिः
विमानना सुभ्रु ! कुतः पितुर्गृहे ? ।

भवतीति । [दुःसहात्] सोढुमशक्यात् [अनिष्टात्] भर्त्रादिकृतादपि [मनस्विनीनाम्] धीरस्त्रीणाम् [ईदृशी] तपश्चरणलक्षणा [प्रतिपत्तिः] प्रवृत्तिः । "प्रतिपत्तिस्तु गौरवे प्राप्तौ प्रवृत्तौ प्रागल्भ्ये" इति केशवः । [भवति] [नाम] । नामेति सम्भावनायाम् । [विचारमार्गे प्रहितेन चेतसा] चित्तेन [तत्] अनिष्टं [च] हे [कृशोदरि ! त्वयि न दृश्यते] । विचार्य्यमाणे तदपि नास्ति असम्भावितत्वादित्यर्थः ॥ ४२ ॥

अनिष्टाभावमेव प्रपञ्चयति,—

अलभ्येति । हे [सुभ्रु !] इयं त्वदीया [आकृतिः] मूर्त्तिः [अलभ्यः] लब्धुमनर्हः [शोकेन] भर्त्राद्यवमानजेन दुःखेन [अभिभवः] तिरस्कारो यस्याः सा तथोक्ता दृश्यत इति शेषः । असम्भावितञ्च अयमर्थं इत्याह [पितुर्गृहे विमानना] अवमानः [कुतः?] न सम्भाव्यते एवेत्यर्थः । न च अपि अन्यस्माद्भावीत्याह । [पराभिमर्शः] परधर्षणन्तु [तव नास्ति पन्नगरत्नसूचये] मणिशिरोमणिशलाकां ग्रहीतुम् इत्यर्थः । क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२, ४, १४ पा॰) इति चतुर्थी । [करम्] हस्तं [कः] [प्रसारयेत् ?] सुभ्रु ! इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् नेयङुवङ्स्थानावस्त्रीति (१, ४, ४ पा॰) नदी·

पराभिमर्शो न तवास्ति कः करं
प्रसारयेत् पन्नगरत्नसूचये ॥ ४३ ॥
किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्द्धकशोभि वल्कलम् ?।
वद प्रदोषे स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते ? ॥ ४४ ॥

संज्ञाप्रतिषेधात् अम्बार्थनद्योर्ह्रस्वः (७, ३, १०७ पा० ) इति ह्रस्वत्वं नास्ति तेन ह्रस्वः प्रामादिक इति केचित् अन्ये तु अप्राणिजातेश्च अरज्ज्वादीनाम् ( ४, १, ६६ पा० वा० ) इत्यत्र अलाबूः कर्कन्धूरित्यूकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः। एतस्मादेव नियम ज्ञापकात् क्वचिदूकारान्तस्याप्यूङन्तत्वात् नदीत्वे ह्रस्वत्वमित्याहुः। अतएव आह वामनः ऊकारादप्यूङ् प्रकृतेरिति। सुभ्रु ! कुतस्तातस्ते ऽवमाननमिति पाठान्तरकारणन्तु साहसमेव उक्तोपपत्तिसम्भावनात्। अन्यत्रापि "सुभ्रु ! त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषिताम्" इत्यादिप्रयोगदर्शनात् वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्च त्यक्तं गोष्ठीभिः ॥४३

किमिति। हे गौरि ! [किमिति] केन हेतुना [यौवने] [त्वया] [आभरणानि अपास्य] विहाय वृद्धस्य भावो वार्द्धकम् (५, १, १३३ पा०) मनोज्ञादित्वाद्वुञ्प्रत्ययः। "वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृद्धकर्मणी" इति विश्वः। तच्च शोभत इति [वार्द्धकशोभि वल्कलं धृतम् प्रदोषे] रजनीमुखे स्फुटाः प्रकटाश्चन्द्रः तारकाश्च यस्याः सा [स्फुटचन्द्रतारका विभावरी] रात्रिः [अरुणाय] सूर्यसूताय [कल्पते यदि ?] अरुणं गन्तुं कल्पते किम् ? [वद] ब्रूहि। क्रियार्थोपपदस्य इत्यादिना (२,

दिवं यदि प्रार्थयसे वृथा श्रमः
पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना
न रत्नमन्विष्यति मृग्यते हि तत् ॥ ४५ ॥
निवेदितं निश्वसितेन सोष्मणा
मनस्तु मे संशयमेव गाहते ।

३, १४ पा० ) चतुर्थी । दीप्यमानग्रहताराके प्रदोषे यद्य-रुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं सङ्ग-च्छते इति भावः ॥ ४४ ॥

तपः प्रयोजनं निराकर्त्तुमाह,—

दिवमिति । [दिवम्] स्वर्गं [प्रार्थयसे] कामयसे [यदि] तर्हि [श्रमः] तपश्चरणप्रयासः [वृथा], निष्फलः यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः ? [तव पितुः] हिमवतः [प्रदेशाः देवभूमयः] स्वर्गपदार्थाः तत्रत्या इत्यर्थः । [अथ उपयन्तारम्] वरं प्रार्थयसे तर्हि [समाधिना] तपसा [अलं] न कार्यम् इत्यर्थः । निषेधस्य निषेधं प्रति करणत्वात् तृतीया । तथाहि [रत्नम्] कर्त्तृ [न अन्विष्यति] न मृगयते ग्रहीतारम् इति शेषः किन्तु [तद्रत्नं मृग्यते] ग्रहीतृभिः इति शेषः । न हि वरार्थं त्वया तपसि वर्त्तितव्यम् किन्तु तेनैव त्वदर्थमिति भावः ॥ ४५ ॥

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशयमाह,—

निवेदितमिति । [सोष्मणा निःश्वसितेन] निःश्वासवायुना [निवेदितम्] चिन्तानुभावेन उष्णोच्छ्वासेन ते वरार्थित्वं

न दृश्यते प्रार्थयितव्य एव ते
भविष्यति प्रार्थितदुर्लभः कथम्? ॥ ४६ ॥
अहो स्थिरः कोऽपि तवेप्सितो युवा
चिराय कर्णोत्पलशून्यतां गते।
उपेक्षते यः श्लथलम्बिनीर्जटाः
कपोलदेशे कलमाग्रपिङ्गलाः ॥ ४७ ॥
मुनिव्रतैस्त्वामतिमात्रकर्शितां
दिवाकराप्लुष्टविभूषणास्पदाम्।

सूचितमित्यर्थः। तर्हि किं प्रश्नव्यसनेन इत्याह मन इति। [मनस्तु] तथापि [मे संशयमेव गाहते] प्राप्नोति। कुतः? [ते] तव कृत्यानां, कर्त्तरि वा (२, ३, ७१) इति षष्ठी। प्रार्थयितव्यः] प्रार्थयितुमर्हः [एव] [न दृश्यते प्रार्थितदुर्लभः] प्रार्थितो दुर्लभः सः [कथम्] भविष्यति] नास्त्येव इत्यर्थः॥४६॥

अथ पतिप्रार्थनामेव सिद्धवत् कृत्वा आह,—

अहो इति। [अहो] चित्रं [तव ईप्सितः] आप्तुमिष्टः [युवा कोऽपि स्थिरः] कठिनः वर्त्तते इति शेषः। कुतः? [यः] युवा [चिराय] चिरात्प्रभृति [कर्णोत्पलशून्यतां गते] प्राप्ते [कपोलदेशे] गण्डस्थले श्लथाः शिथिलबन्धनाः अत एव लम्बिन्यः ताः [श्लथलम्बिनीः] [कलमाः] शालिविशेषाः तेषाम् [अग्राणि] तद्वत् [पिङ्गलाः] [जटाः उपेक्षते] यः त्वाम् ईदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः॥ ४७॥

मुनिव्रतैरिति। [मुनिव्रतैः] चान्द्रायणादिभिः [अतिमात्रम्] अत्यर्थं [कर्शिताम्] कृशीकृतां [दिवाकरेण] सूर्य्येण [आप्लुष्टानि] दग्धानि बालातपसंस्पर्शासहत्वाच्च श्यामीकृतानि

शशाङ्करेखामिव पश्यतो दिवा
सचेतसः कस्य मनो न दूयते ? ॥४८॥
अवैमि सौभाग्यमदेन वञ्चितं
तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो
न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९ ॥
कियच्चिरं श्राम्यसि गौरि ! विद्यते
ममापि पूर्वाश्रमसञ्चितं तपः ।

[विभूषणास्पदानि] भूषणस्थानानि यस्यास्तां तथोक्ताम् अत एव [दिवा] अहनि [शशाङ्करेखामिव] स्थितां तां [पश्यतः सचेतसः] जीवतः [कस्य] पुंसः [मनः न दूयते ?] न परितप्यते अपि तु सर्वस्य एवेत्यर्थः ॥ ४८ ॥

अवैमीति। [तव प्रियम्] वल्लभं [सौभाग्यमदेन] सौन्दर्य्यगर्वेण कर्त्रा [वञ्चितम्] विप्रलब्धम् [अवैमि] वेद्मि। [यः] प्रियः चतुरं मधुरम् अवलोकत इति [चतुरावलोकिनः] [अरालपक्ष्मणः] कुटिलरोम्णः "अरालं वृजिनं जिह्मम्" इत्यमरः। [अस्य] त्वदीयस्य [चक्षुषः] [आत्मीयं वक्त्रम्] मुखम् [चिरम् लक्ष्यम्] विषयं [न करोति] दृष्टिपथं न गच्छतीत्यर्थः। तदयं गर्वेण हतः निष्फलात्मलाभो जात इति भावः ॥ ४९ ॥

कियदिति। हे [गौरि !] [कियत्] किम्प्रमाणकं किमवधिकमित्यर्थः [चिरं श्राम्यसि] तपस्यसि अत्यन्तसंयोगे (२, ३, ५ पा० सू०) द्वितीया। [ममापि] [पूर्वाश्रमः] प्रथमाश्रमः ब्रह्मचर्य्याश्रमः तत्र [सञ्चितम्] सम्पादितं [तपः

तदर्द्धभागेन लभस्व काङ्क्षितं
वरं तमिच्छामि च साधु वेदितुम् ॥ ५० ॥
इति प्रविश्याभिहिता द्विजन्मना
मनोगतं सा न शशाक शंसितुम्।
अथो वयस्यां परिपार्श्ववर्त्तिनीं
विवर्त्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥
सखी तदीया तमुवाच वर्णिनं
निबोध साधो ! तव चेत् कुतूहलम्।

विद्यते] अर्द्धश्चासौ भागश्च तेन [तस्य] तपसः [अर्द्धभागेन] एकदेशेन [काङ्क्षितम्] इष्टं [वरम्] उपयन्तारं [लभस्व] [तं वरं साधु] सम्यक् [वेदितुम्] ज्ञातुम् [इच्छामि] यद्यसौ योग्यो भवति तदा ममापि सम्मतिरिति भावः ॥ ५० ]

इतीति। [इति] इत्थं [द्विजन्मना] द्विजेन [प्रविश्य] अन्तर्गत्वा आप्तवत् रहस्यम् उद्घाट्य इत्यर्थः। [अभिहिता] उक्ता सा पार्वती [मनोगतम्] हृदिस्थं वरं [शंसितुम्] वक्तुं [न शशाक] समर्था न अभूत् लज्जयेति शेषः। [अथो] अनन्तरं परिपार्श्ववर्त्तिनीं [वयस्याम्] सखीं [विवर्त्तितम्] विचालितम् [अनञ्जनम्] व्रतवशात् वर्जितकज्जलं [नेत्रम्] यस्मिन् कर्मणि तत् तथा [ऐक्षत] नेत्रसंज्ञया एव प्रत्युत्तरं वाचयाञ्चकार इत्यर्थः ॥ ५१ ॥

सखीति। तस्याः पार्वत्याः इयं [तदीया सखी] वयस्या [तम्] वर्णिं प्रशस्तिरिति क्षीरस्वामी। सोऽस्यास्तीति [वर्णिनम्] ब्रह्मचारिणं वर्णाद्ब्रह्मचारिणीति (५, २, १३४ पा०)

यदर्थमम्भोजमिवोष्णवारणं
कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥
इयं महेन्द्रप्रभृतीनधिश्रियः
चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्य्यं मदनस्य निग्रहात्
पिनाकपाणिं पतिमाप्तुमिच्छति ॥५३॥

इनिप्रत्ययः। [उवाच] ब्रूते स्म। किमिति ? हे [साधो !] विद्वन् ! [तव कुतूहलञ्चेत्] श्रोतुम् अस्तीति शेषः तर्हि [निबोध] अवगच्छ आकर्णय इत्यर्थः। बुध अवगमन इति धातोर्भौवादिकात् लोट् श्रोतव्यं किं तदाह,—यस्मै लाभाय इदं [यदर्थम्] अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यमिति ( २, १, ३६ पा० स्० ) वार्त्तिकनियमात् क्रियाविशेषणम् [एतया] पार्वत्या [अम्भोजम्] पद्मम् [उष्णवारणम्] आतपत्रमिव [वपुः] शरीरं [तपः साधनम् कृतम् ] तपः प्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥ ५२ ॥

"इयमनः सङ्गसङ्कल्पो जागरः कृशताऽरतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश" इति। तत्र अस्याः काश्चिदशाः क्रममनादृत्य इयमित्यादिभिः षड्भिः श्लोकैः आह, इयमिति। [ मानिनी ] इन्द्राणीप्रभृतीरतिशय्य वर्त्तितव्यम् इति अभिमानवती [इयम्] पार्वती [अधिश्रियः] अधिकैश्वर्य्यान् [महेन्द्रप्रभृतीन्] इन्द्रादीन् [चतसृणां दिशामीशान्] इन्द्रवरुणयमकुवेरान्। तद्धितार्थेत्यादिना (२, १, ५१ पा०] उत्तरपदसमासः। [ अवमत्य] अपधूय [ मदनस्य निग्रहात्] निवर्हणात्शेतीः अकामुकत्वात् इत्यर्थः। रूपेण सौन्दर्य्येण

असह्यहुङ्कारनिवर्त्तितः पुरा
पुरारिमप्राप्तमुखः शिलीमुखः।
इमां हृदि व्यायतपातमक्षिणोत्
विशीर्णमूर्त्तेरपि पुष्पधन्वनः ॥ ५४ ॥
तदा प्रभृत्युन्मदना पितुर्गृहे
ललाटिकाचन्दनधूसरालका।

हार्य्यो वशीकरणीयो न भवतीति [अरूपहार्य्यम्] पिनाकः पाणौ यस्य तं [पिनाकपाणिम्] हरम्। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति (२,२,३७ पा० वा०) साधु। [पतिम् आप्तुमिच्छति] एतेन सङ्कल्पावस्था सूचिता ॥ ५३ ॥

असह्येति। [पुरा] पूर्वम् [असह्येन] सोढुमशक्येन [हुङ्कारेण] रौद्रेण [निवर्त्तितः] अतएव [पुरारिम्] हरम् [अप्राप्तमुखः] अप्राप्तफलः [विशीर्णमूर्त्तेः] नष्टशरीरस्य [अपि] पुष्पधन्वनः] कामस्य [शिलीमुखः] बाणः [इमाम्] पार्वतीं [हृदि] [व्यायतः] सुदूरावगाढः इति यावत् तादृक् [पातः] प्रहारो यस्मिन् कर्मणि तत्तथा [अक्षिणोत्] अकर्षत् दग्धदेहस्यापि मार्गणो लब्धः, "मृदुः सर्वत्र बाध्यत" इति भावः। अनेन विवृण्वती शैलसुतापि भावमित्यनेन (३ स० ६८ श्लो०) चक्षुःप्रीतिमनःसङ्गाख्यम् अवस्थाद्वयमनन्तरावस्थोपयोगितया अनूद्य कार्श्यावस्था सूचिता ॥ ५४ ॥

तदेति। तदेति छेदः [तदा प्रभृति] तत आरभ्य इत्यर्थः सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणा प्रभृतियोगे पञ्चमीनियमात्। [पितुर्गृहे उन्मदना]। उत्कटमन्मथा, ललाटस्य अलङ्कारः [ललाटिका] तिलकः। कर्णललाटात् कन् अलङ्कारे

न जातु बाला लभते स्म निर्वृतिं
तुषारसङ्घातशिलातलेष्वपि ॥ ५५ ॥
उपात्तवर्णे चरिते पिनाकिनः
सवाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका
वनान्तसङ्गीतसखीररोदयत् ॥ ५६ ॥

(४, ३, ६५ पा०) इति कन्प्रत्ययः। तस्याः [चन्दनेन धूसराः] धूसरवर्णा [अलकाः] चूर्णकुन्तलाः यस्याः सा तथोक्ता [बाला] पार्वती [जातु] कदाचिदपि [तुषारसङ्घाताः] तुषारघनास्त एव [शिलाः] तासां [तलेषु] उपरिभागेषु अपि [ निर्वृतिम् ] सुखं [ न लभते स्म ]। एतेन अरत्यपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापत्ते संज्वरस्य व्यज्यते ॥ ५५ ॥

उपात्तेति। [पिनाकिनः] शम्भोः [ चरिते ] त्रिपुरविजयादिचेष्टिते [उपात्तवर्णे प्रारब्धगीतक्रमे। "गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते" इति हलायुधः। [सवाष्पे] गद्गदे [कण्ठे स्खलितैः] विशीर्णैः [पदैः] सुप्तिङन्तरूपैः करणैः [वनान्ते सङ्गीतेन] निमित्तेन [सखीः] वयस्याः [किन्नरराजकन्यकाः] [अनेकशः] बहुशः [अरोदयत्] अश्रुमोचनमकारयत्। हरचरितगानजनितमदनवेदनाम् एनां वीक्ष्य किन्नर्योऽपि रुरुदुरिति भावः। अत्र वर्णस्खलनलक्षणकार्य्योक्त्या पुनः पुनः तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यते अन्यथा सखीरोदनानुपपत्तेरिति। द्वादशावस्थापत्ते तु प्रलापावस्था च व्यज्यते। "प्रलापो गुणकीर्त्तनम्" इति आलङ्कारिकाः ॥५६॥

त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवाक्
असत्यकण्ठार्पितबाहुबन्धना ॥ ५७ ॥
यदा बुधैः सर्वगतस्त्वमुच्यसे
न वेत्सि भावस्थमिमं कथं जनम्? ।

त्रिभागेति। शिष्यते इति शेषः कर्मणि घञ्। [त्रिभ्यो भागेभ्यः शेषासु] अवशिष्टासु। यद्वा रात्रेः त्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागः त्रिभागः संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते यथा शतांशः सहस्रांश इति [त्रिभागः शेषः] यासां तासु [निशासु क्षणम्] क्षणमात्रं [नेत्रे निमील्य] मीलयित्वा [सहसा] सद्यः हे [नीलकण्ठ! क्व? व्रजसि] कुत्र? गच्छसीति [अलक्ष्या] निर्विषया वाग् वचनं यस्याः सा तथोक्ता तथा [असत्ये] मिथ्याभूते [कण्ठेऽर्पितं बाहुबन्धनम्] यस्याः सा तथा सती [व्यबुध्यत] विबुद्धवती। एतेन जागरोन्मादौ सूचितौ ॥ ५७ ॥

स्वप्नसाहश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः तत्र स्वप्नसन्दर्शनमुक्त्वा प्रतिकृतिदर्शनमाह, यदेति। [यदा] यत इत्यर्थः। यदेति हेतौ इत्युक्ता गणव्याख्याने अस्य उदाहृतत्वात्। [त्वं बुधैः] मनीषिभिः [सर्वगतः] सर्वव्यापीति [उच्यसे]। तत इति अध्याहारः। भावे रत्याख्ये तिष्ठतीति। [भावस्थम्] त्वयि अनुरागिणमित्यर्थः [इमं जनम्] इममित्यात्मनिर्देशः। [कथं न वेत्सि?] न जाना-

इति स्वहस्तोल्लिखितश्च मुग्धया
रहस्युपालभ्यत चन्द्रशेखरः ॥ ५८ ॥

यदा च तस्याधिगमे जगत्पतेः
अपश्यदन्यं न विधिं विचन्वती ।
तदा सहास्माभिरनुज्ञया गुरोः
इयं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

द्रुमेषु सख्या कृतजन्मसु स्वयं
फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते
मनोरथोऽस्याः शशिमौलिसंश्रयः ॥ ६० ॥

सोति [मुग्धया] मूढ़या अकिञ्चित्करश्चिन्तगतोपालम्भ इत्यजानानयेत्यर्थः। तया [स्वहस्तेन] उल्लिखितः चित्रे [लिखितः] [चन्द्रशेखरः रहसि] एकान्ते सखीमात्रसमक्षमित्यर्थः। [उपालभ्यत] साधिक्षेपमुक्तश्च। उक्तसमुच्चयार्थश्चकारः। यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणात् लज्जात्यागो व्यज्यत एव ॥ ५८ ॥

यदेति। [जगत्पतेः तस्य] ईश्वरस्य [अधिगमे] प्राप्तौ, [अन्यं विधिम्] उपायं [विचिन्वती] मृगयमाणा [यदा न अपश्यत् तदा इयम्] पार्वती [गुरोः] पितुः [अनुज्ञया अस्माभिः सह तपसे] तपश्चरितुं [तपोवनं प्रपन्ना] प्राप्ता ॥ ५९ ॥

द्रुमेष्विति। [सख्या] पार्वत्या [स्वयं कृतं जन्म] येषां तेषु स्वयं रोपितेषु इत्यर्थः [तपसः साक्षिषु] साक्षाद् द्रष्टृषु [एषु द्रुमेषु अपि] [फलं दृष्टम्] लब्धं जनितमित्यर्थः। [अस्याः]

न वेद्मि स प्रार्थितदुर्लभः कदा
सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं
वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥

अगूढसद्भावमितीङ्गितज्ञया
निवेदितो नैष्ठिकसुन्दरस्तया ।

पार्वत्याः [शशिमौलिसंश्रयः] चन्द्रशेखरविषयः [मनोरथस्तु प्ररोहाभिमुखः] अङ्कुरोन्मुखोऽपि [ न दृश्यते] "प्ररोहस्त्वङ्कुर" इति वैजयन्ती। स्वयं रोपितवृक्षफलकालेऽपि अस्याः मनोरथस्य न अङ्कुरोदयोऽपि अस्ति फलाशा तु दूरापास्तेत्यर्थः ॥ ६० ॥

न वेद्मीति। प्रार्थितः सन् दुर्लभः [प्रार्थितदुर्लभः] [ स ] देवः [तपःकृशाम्] तपसा कृशां क्षीणाम् अतएव [सखीभिः अस्रोत्तरम्] अश्रुप्रधानं यथा भवति तथा [ईक्षिताम् इमाम्] [नः सखीम्] [तस्य] इन्द्रस्य [अवग्रहेण] अनावृष्ट्या [क्षताम्] पीड़िताम्। "वृष्टिवर्षे तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः। अवग्रहो वर्षप्रतिबन्ध इत्यर्थः। [सीताम्] कृष्टभुवम्। "सीता लाङ्गलपद्धतिः" इत्यमरः। [वृषा] वासवः [इव] "वासवो वृत्रहा वृषा" इत्यमरः। [कदा अभ्युपपत्स्यते] अनुग्रहीष्यति [न वेद्मि] अत्र वाक्यार्थः कर्म। तदवग्रहक्षतामित्यत्र अवग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेः तदिति भिन्नं पदं वेद्मीत्यस्य कर्म इति युक्तमुत्पश्यामः ॥६१॥

अगूढेति। [इङ्गितज्ञया] पार्वतीहृदयाभिज्ञया "इङ्गितं हृद्गतो भावः" इति सज्जनः। [तया] गौरीसख्या [इति] एवम्

अयीदमेवं परिहास इत्युमाम्
अपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥

अथाग्रहस्ते मुकुलीकृताङ्गुलौ
समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथञ्चिदद्रेस्तनया मिताक्षरं
चिरव्यवस्थापितवागभाषत ॥ ६३ ॥

[अगूढ़सद्भावम्] प्रकाशितसदभिप्रायं यथा तथा [निवेदितः] ज्ञापितः निष्ठा मरणम् अवधिर्यस्य स [नैष्ठिकः] यावज्जीवब्रह्मचारी [सुन्दरः] विलासी नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः द्वयोः अन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः। किन्तु नैष्ठिकत्वविशेषणेन कामित्वविरोधः अथवा देवस्य अलौकिकमहिमत्वात् उभयं तात्त्विकमिति न विरोधः। [अव्यञ्जितं हर्षलक्षणम्] मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् [अयि] गौरि! अयीति कोमलामन्त्रणे [इदम्] त्वत्सखीभाषितम् [एवम्] सत्यं किमित्यर्थः। [परिहासः] केलिर्वा। "द्रवकेलिपरिहासाः" इत्यमरः [ इत्येवमुमाम् अपृच्छत् ] पृष्टवान् ॥ ६२ ॥

अथेति। [अथ] अनन्तरम् [अद्रेस्तनया] पार्वती [मुकुलीकृताङ्गुलौ] सम्पुटीकृताङ्गुली अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः। हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदादिति वामनः। तस्मिन् [अग्रहस्ते] [स्फटिकानामक्षमालिकाम्] जपमालिकाम् [समर्पयन्ती] आमुञ्चन्ती] [कथञ्चित्] महता कष्टेन [चिरव्यवस्थापितवाक्] चिरेण स्वीकृतवाक् एतेन लज्जोपरोधो व्यज्यते। [मिताक्षरम्] परिमितवर्णं यथा तथा [अभाषत] बभाषे॥ ६३ ॥

यथा श्रुतं वेदविदांवर ! त्वया
जनोऽयमुच्चैःपदलङ्घनोत्सुकः।
तपः किलेदं तदवाप्तिसाधनं
मनोरथानामगतिर्न विद्यते ॥ ६४ ॥

अथाह वर्णी विदितो महेश्वरः
तदर्थिनी त्वं पुनरेव वर्त्तसे।
अमङ्गलाभ्यासरतिं विचिन्त्य तं
तवानुवृत्तिं न च कर्त्तुमुत्सहे ॥ ६५ ॥

किमुवाचेत्याह,—

यथेति। हे [वेदविदां वर !] वैदिकश्रेष्ठ ! [त्वया यथा श्रुतम्] सम्यक् श्रुतम्। श्रुतार्थमेवाह [अयं जनः] स्वयमित्यर्थः: [उच्चैःपदस्य] शिवलाभरूपोन्नतस्थानस्य [लङ्घने] आक्रमणे [उत्सुकः]। किमत्रायुक्तमित्यत्राह [इदं तपः] तदवाप्तेः तस्य उच्चैः पदस्य [अवाप्तेः] प्राप्तेः [साधनं किल]। किलेत्यलीके। अतितुच्छत्वात् असाधकमेवेत्यर्थः। तर्हि त्यज्यतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेन आह [मनोरथानाम्] कामानाम् [अगतिः] अविषयः [ न विद्यते ] न हि स्वशक्तिपर्य्यालोचनया कामाः प्रवर्त्तन्त इति भावः ॥ ६४ ॥

अथेति। अथ वर्णी] ब्रह्मचारी। "वर्णिनो ब्रह्मचारिणः" इत्यमरः। [आह] उवाच इत्यर्थः। आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूल इत्याह वामनः। किमित्याह [महेश्वरः] महादेवः [विदितः] त्वया ज्ञायत इत्यर्थः वुद्ध्यर्थत्वात् वर्त्तमाने क्तप्रत्ययः। येन त्वं प्राक् भग्नमनोरथा वर्त्ततेति भावः।

अवस्तुनिर्बन्धपरे ! कथं नु ते
करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना
सहिष्यते तत्प्रथमावलम्बनम् ? ॥ ६६ ॥
त्वमेव तावत् परिचिन्तय स्वयं
कदाचिदेते यदि योगमर्हतः ।

[पुनरेव त्वम्] तमीश्वरम् अर्थयते [तदर्थिन्येव] तत्कामैव प्रवर्त्तसे तत्प्रभावम् अनुभूयापीति भावः । अनुसरणे को दोषः तत्राह [अमङ्गलाभ्यासे] अमङ्गलाचारे रतिर्यस्य [तम्] तथोक्तम् ईश्वरम् [विचिन्त्य] विचार्य्य [तव] [अनुवृत्तिम्] अनुसरणं [कर्त्तुं न उत्सहे] न अनुमन्तुं शक्नोमि इत्यर्थः ॥ ६५ ॥

अवस्त्विति । अवस्तुनि तुच्छवस्तुनि निर्बन्धः अभिनिवेशः परं प्रधानं यस्याः तस्याः सम्बुद्धिः [अवस्तुनिर्बन्धपरे !] पार्वति ! [आमुक्तम्] आसञ्जितं [विवाहे] यत् [कौतुकम्] हस्तसूत्रं तद्यस्य सः [ते अयं करः] । कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । [वलयीकृताहिना] भूषणीकृतसर्पेण [शम्भोः] महादेवस्य [करेण] करणभूतेन तत् एव प्रथमं [तत्प्रथमम्] अपरिचितत्वात् अतिभयङ्करमिति भावः । तच्च तत् [अवलम्बनम्] ग्रहणञ्चेति [कथं नु सहिष्यते ?] न कथञ्चिदपि सहिष्यत इत्यर्थः । अन्यतो यत्नापि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥ ६६ ॥

त्वमेवेति । हे गौरि ! [त्वमेव स्वयम्] आत्मना [तावत्] इति मानार्थे । यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः । इदमेव उदाहृतञ्च मयव्याख्याने । [परिचिन्तय] पर्य्यालोचय ।

वधूदुकूलं कलहंसलक्षणं
गजाजिनं शोणितविन्दुवर्षि च ॥ ६७ ॥

चतुष्कपुष्पप्रकरावकीर्णयोः
परोऽपि को नाम तवानुमन्यते ।
अलक्तकाङ्कानि पदानि पादयोः
विकीर्णकेशासु परेतभूमिषु ॥ ६८ ॥

किमिति ? [कलहंसलक्षणम्] कलहंसचिह्नम्। "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः। वध्वाः नवोढ़ायाः दुकूलं [वधूदुकूलम्] "वधूः स्नुषा नवोढ़ा स्त्री" इति विश्वः। तथा [शोणितविन्दून् वर्षति] इति तथोक्तम् आर्द्रमित्यर्थः [गजाजिनञ्च] कृत्तिवासश्च तत् पिनाकिन इत्याशयः। [एते कदाचित्] जातु अपि [योगम्] सङ्गतिम् [अर्हतो यदि ?] अर्हतः किम् ? एतत् त्वमेव चिन्तयेति पूर्वेणान्वयः। पाणिग्रहणकाले वधूवरयोः वस्त्रान्तग्रन्थिः क्रियते कृत्तिवाससा पाणिपीड़ने तु दुकूलधारिण्याः तव कथं सङ्घटिष्यत इति भावः ॥ ६७ ॥

चतुष्केति। [चतुष्के] गृहविशेषे [पुष्पप्रकरः] तत्र [अवकीर्णयोः] न्यस्तयोः कुसुमास्तृतदिव्यभवनभूसञ्चारोचितयोः इत्यर्थः। [तव पादयोः अलक्तकाङ्कानि] लाक्षारञ्जितानि [पदानि] पादाकाराणि पादन्यासचिह्नानि। "पदं शब्दे च वाक्ये च व्यवसायापदेशयोः पादतच्चिह्नयोः" इति विश्वः। [विकीर्णा] विक्षिप्ताः [केशाः] शवशिरोरुहाः यासु तासु [विकीर्णकेशासु] अतत्स्थं तत्र दृष्टञ्चेति (१) वचनात् स्वाङ्ग-

(१) अतत्स्थमप्राणिनामपि तत्र प्राणिनि यथा दृष्टं स्वाङ्गं तथा चेत् तदपि स्वाङ्गम् इत्यनेन न अस्य स्वाङ्गत्वेऽपि विकल्पान्न ङीप्।

अयुक्तरूपं किमतःपरं वद
त्रिनेत्रवक्षःसुलभं तवापि यत्।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे
पदं चिताभस्मरजः करिष्यति ॥ ६९ ॥
द्वयञ्च तेऽन्या पुरतो विडम्बना
यदूढया वारणराजहार्य्यया।

स्वोपसर्जनात् असंयोगोपधात् (४, १, ५४ पा०) इति विकल्पात् न ङीप्। [परेतभूमिषु] प्रेतभूमिषु श्मशानेषु इत्यर्थः। [परोऽपि] शत्रुरपि [को नाम अनुमन्यते ?] न कोऽपीत्यर्थः। नामेति कुत्सायाम्। पिनाकपाणिपाणिग्रहणे तस्य परेतभूसञ्चारित्वेन साहचर्य्यात् तवापि तत्र सञ्चारोऽवश्यम्भावीति भावः ॥ ६८ ॥

अयुक्तेति। [त्रिनेत्रवक्षः] त्र्यम्बकालिङ्गनमित्यर्थः। [तव] तत्सम्बन्धितया [सुलभमपि] सुप्रापञ्च भवतीति शेषः। तवेति शेषे षष्ठी। न लोकाव्ययेत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात् (१)। [अतःपरम्] अस्मात् त्रिनेत्रवक्षोलाभात् अन्यत् [अयुक्तरूपम्] अत्यन्तायुक्तम् [किं ? वद] न किञ्चिदित्यर्थः। प्रशंसायां रूपबिति (५, ३, ६६ पा०) रूपप्प्रत्ययः। कुतः ? [यत्] यस्मात्कारणात् [हरिचन्दनास्पदे] हरिचन्दनस्य आस्पदे स्थानभूते [अस्मिन् स्तनद्वये] [चिताभस्म] श्मशानभस्म तदेव [रजः] चूर्णं कर्तृ [पदं करिष्यति] पदं निधास्यति भर्त्तुः भवस्य भस्माङ्गरागादिति भावः ॥ ६९ ॥

इयमिति। [द्वयञ्च ते तव [पुरतः] आदौ एव [अन्या

(१) अत्र सूत्रे खलु, अयोगे षष्ठीनिषेधात्।

विलोक्य वृद्धोक्षमधिष्ठितं त्वया
महाजनः स्मेरमुखो भविष्यति ॥ ७० ॥
इयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी ॥ ७१ ॥

विडम्बना] परिहास इत्यर्थः। का सेत्यत्राह,—[ जढ़या ] परिणीतया। वहेः कर्मणि क्तः। [वारणराजहार्य्यया] गजेन्द्र-वाह्यया त्वया अधिष्ठितम्] आरूढ़ं वृद्धमुक्षाणम् [ वृद्धोक्षम् ] अचतुरेत्यादिना ( ५, ४, ७७ पा० ) निपातः। [ विलोक्य ] [ महाजनः ] साधुजनः [ स्मेरमुखः] स्मितमुखः [ भविष्यति ] उपहसिष्यति यत्,इयमिति पूर्वेण सम्बन्धः। स्मेरेति नमि-कम्पिस्म्यजसेत्यादिना (३, २, १६७ पा०) रप्रत्ययः ॥७०॥

इयमिति। [पिनाकिनः] ईश्वरस्य [ समागमप्रार्थनया ] प्राप्तिकामनया क्रियमाणया इति शेषः। [सम्प्रति इयं शोच-नीयताम्] शोच्यत्वं [गतम्]। किं तदाह,—[सा] प्रागेव हरशि-रोगता। अत्र सा इति अतिप्रसिद्धार्थत्वात् न यच्छब्दापेक्षा, तदुक्तं काव्यप्रकाशे। "प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते" इति। [कान्तिमती] नित्ययोगे मतुप्। [कलावतः] चन्द्रस्य [कला] षोड़शो भागश्च [ अस्य लोकस्य नेत्रकौमुदी ] नेत्रानन्दिनीत्यर्थः [ त्वञ्च ]। कान्तिमतीत्वनेत्र-कौमुदीत्वविशेषणयोः उभयत्रापि अन्वयः। प्रागेका एव शोच्या सम्प्रति तु त्वमप्यपरेति इयं शोच्यमिति पिण्डितार्थः। शोच्यत्वञ्च निकृष्टाश्रयणात् इति भावः ॥ ७१ ॥

वपुर्विरूपाक्षमलक्ष्यजन्मता
दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि ! मृग्यते
तदस्ति किं व्यस्तमपि त्रिलोचने ? ॥ ७२ ॥
निवर्त्तयास्मादसदीप्सितात् मनः
क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ? ।

"कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः" इति लोकानामाभाषणम्। तत्र किञ्चिदपि नास्तीत्याह,—

वपुरिति। [वपुः] तावदस्य विरूपाणि विकृतरूपाणि अक्षीणि नेत्राणि यस्य तत् [विरूपाक्षम्]। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् (५, ४, ११३ पा०) इति षच्प्रत्ययः। वैरूप्यञ्च त्रिनेत्रत्वादिति क्षीरस्वामी। अतो न सौन्दर्य्यवार्त्तापीत्यर्थः। [अलक्ष्यम्] अज्ञातं [जन्म] यस्य तस्य भावस्तत्ता कुलमपि न ज्ञायते इत्यर्थः। अलक्षिता जनिरिति पाठे जनिः उत्पत्तिः अलक्षिता न ज्ञाता। "जनिरुत्पत्तिरुद्भव" इत्यमरः। [वसु] वित्तं [दिगम्बरत्वेनैव निवेदितम्] नास्तीति ज्ञापितम् इत्यर्थः। यदि वित्तं भवति तदा कथं दिगम्बरो भवति अतो ज्ञेयं निर्धनोऽयमिति। किं बहुना, हे [बालमृगाक्षि !] पार्वति ! [वरेषु] वोढृषु। "वरो जामातृवोढारौ" इति विश्वः। [यत्] रूपवित्तादिकं [मृग्यते] कन्यातद्बन्धुभिः अन्विष्यते [तत् त्रिलोचने] त्र्यम्बके [व्यस्तम्] एकमपि समस्तं मा भूदिति भावः [अस्ति किम् ?] नास्ति एवेत्यर्थः ॥ ७२ ॥

निवर्त्तयेति। [अस्मात् असदीप्सितात्] अनिष्टमनोरथात्

अपेक्ष्यते साधुजनेन वैदिकी
श्मशानशूलस्य न यूपसत्क्रिया ॥ ७३ ॥
इति द्विजातौ प्रतिकूलवादिनि
प्रवेपमानाधरलक्ष्यकोपया।
विकुञ्चितभ्रूलतमाहिते तया
विलोचने तिर्य्यगुपान्तलोहिते ॥ ७४ ॥

[मनः निवर्त्तय] निवारय [सा] पूर्वोक्ता [विधा] प्रकारो यस्य तथोक्तः अमङ्गलशील इत्यर्थः [क्व ?] महदन्तरमित्यर्थः [पुण्य-लक्षणा] प्रशस्तभाग्यचिह्ना [त्वञ्च क्व ?] अतो न तव अयमर्ह इत्यर्थः। तथाहि [साधुजनेन] "साधुर्वार्द्धुषिके चारौ सज्जने चाभिधेयवत्" इति विश्वः। [श्मशानशूलस्य] श्मशानभूमि-निखातस्य वध्यशङ्कोः [वैदिकी] वेदोक्ता यूपो नाम पशुबन्धन-साधनभूतः संस्कृतदारुविशेषः। तस्य [सत्क्रिया] प्रोक्षणाभ्यु-क्षणादिसंस्कारः [यूपसत्क्रिया] [न अपेक्ष्यते] नेष्यते। यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटसे इति तात्पर्य्यार्थः॥ ७३ ॥

इतीति। [इति] एवंप्रकारेण [द्विजातौ] द्विजे [प्रतिकूल-वादिनि] सति [प्रवेपमानेन] चञ्चलेन [अधरेण] अधरोष्ठेन [लक्ष्यः] अनुमेयः [कोपः] क्रोधः यस्याः तथोक्तया [तया] पार्वत्या [उपान्तलोहिते] प्रान्तरक्ते [विलोचने] [विकुञ्चिते] कुटिलिते [भ्रूलते] यस्मिन् तत् तथा सभ्रूभङ्गमित्यर्थः। [तिर्य्यक्] साचि [आहिते] निहिते अनादरात् तिर्य्यक् ऐक्षत इत्यर्थः॥ ७४ ॥

उवाच चैनं परमार्थतो हरं
न वेत्सि नूनं यत एवमात्थ माम्।
अलोकसामान्यमचिन्त्यहेतुकं
द्विषन्ति मन्दाश्चरितं महात्मनाम्॥ ७५॥
विपत्प्रतीकारपरेण मङ्गलं
निषेव्यते भूतिसमुत्सुकेन वा।
जगच्छरण्यस्य निराशिषः सतः
किमेभिराशोपहतात्मवृत्तिभिः॥ ७६॥

उवाचेति। अथ [एनम्] ब्रह्मचारिणम् [उवाच च]। किमिति? [परमार्थतः] तत्त्वतः [हरं न वेत्सि] न जानासि [नूनम्]। कुतः? [यतः माम् एवम्] उक्तया रीत्या [आत्थ] ब्रवीषि। ब्रुवः पञ्चानामादितः (३, ४, ८४ पा०) इति रूपसिद्धिः। अज्ञानात् एवायं शिवद्वेषः तव इत्याशयेनाह,—[मन्दाः] मूढाः। "मूढाल्पापटुनिर्भाग्या मन्दाः" इत्यमरः। लोकसामान्यम् इतरजनसाधारणं न भवतीति [अलोकसामान्यम्] [अचिन्त्यहेतुकम्] दुर्बोधकारणकं [महात्मनां चरितम्] [द्विषन्ति] हेतुपरिज्ञानात् दूषयन्ति। विद्वांसस्तु कोऽपि अत्र हेतुः अस्तीति बहु मन्यन्ते इत्यर्थः॥ ७५॥

सम्प्रति अमङ्गलाभ्यासरतिम् इत्याद्युक्तं (६५ श्लोकादिषु) दूषणजातं विपदित्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते,—

विपदिति। [विपत्प्रतीकारपरेण] अनर्थपरिहारार्थिना इत्यर्थः। उपसर्गस्य घञ्यमनुष्येषु बहुलमिति(६, ३, १२२पा०) दीर्घः। [भूतिसमुत्सुकेन] ऐश्वर्यकामेन [वा मङ्गलम्] गन्ध-

अकिञ्चनः सन् प्रभवः स सम्पदां
त्रिलोकनाथः पितृसद्मगोचरः।
स भीमरूपः शिव इत्युदीर्य्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥

माल्यादिकं [निषेव्यते]। शरणे रक्षणे साधुः शरण्यः। तत्र साधुरिति (४, ४, ९८ पा०) यत्प्रत्ययः। "शरणं गृहरक्षित्रोः" इत्यमरः। जगतः शरण्यः तस्य [जगच्छरण्यस्य निराशिषः] निरभिलाषस्य [सतः] शिवस्य। "आशीरुरगदंष्ट्रायां विप्रवाक्याभिलाषयो" इति शाश्वतः। [आशया] तृष्णया [उपहता] दूषिता [आत्मवृत्तिः] अन्तःकरणवृत्तिः येषां तैः [एभिः] मङ्गलैः [किम् ?] वृथा इत्यर्थः। पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वात् एभिरिति बहुवचनेन परामर्शो न विरुध्यते। इष्टावाप्त्यनिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्धः तदुभयासंस्पृष्टस्य तु यथा कथञ्चित् आस्तां को दोष इत्यर्थः। एतेन अमङ्गलाभ्यासरतिमित्युक्तं (६५ श्लो०) प्रत्युक्तम् ॥ ७६ ॥

अकिञ्चन इति। [सः] हरः न विद्यते किञ्चन द्रव्यं यस्य सः [अकिञ्चनः] दरिद्रः [सन्] [सम्पदाम्] प्रभवति अस्मादिति [प्रभवः] कारणं [पितृसद्मगोचरः] श्मशानाश्रयः सन् [त्रयाणां लोकानां नाथः] तद्धितार्थेत्यादिना (२, १, ५१ पा०) उत्तरपदसमासः। [सः] देवः [भीमरूपः] भयङ्कराकारः सन् [शिवः] सौम्यरूपः [इति उदीर्य्यते] उच्यते। अतः [पिनाकिनः] हरस्य यथाभूतोऽर्थः यथार्थः तस्य भावः [याथार्थ्यम्] तत्त्वं तस्य [विदः न सन्ति]। लोकोत्तरमहिम्नो निर्लेपस्य यथा कथञ्चित्

विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथ वेन्दुशेखरं
न विश्वमूर्त्तेरवधार्य्यते वपुः ॥ ७८ ॥
तदङ्गसंसर्गमवाप्य कल्पते
ध्रुवं चिताभस्मरजो विशुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं
विलिप्यते मौलिभिरम्बरौकसाम् ॥ ७९ ॥

अवस्थानं न दोषायेति भावः । एतेन अवस्तुनिर्बन्धपरे इति (६६) श्लोकोक्तं परिहृतं वेदितव्यम् ॥ ७७ ॥

देवस्य लौकिकमलौकिकञ्च प्रसाधनं नास्तीत्याशयेनाह,—

विभूषणेति । विश्वं मूर्त्तिः यस्येति [ विश्वमूर्त्तेः ] अष्टमूर्त्तेः शिवस्य [वपुः] शरीरं भूषणैः उद्भासत इति [भूषणोद्भासि स्यात्] पिनद्धभोगि आमुक्तभुजङ्गमम् [वा स्यात्] । पिनद्धेति नह्यते-रपिपूर्वात्कर्मणि क्तः "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति अकारलोपः । [गजाजिनालम्बि] स्यात् अथ वा [दुकूल-धारि स्यात्] । कपालमस्यास्तीति [कपालि] ब्रह्मशिरःकपाल-शेखरं [वा स्यात्] [ इन्दुशेखरं वा स्यात् ] [ न अवधार्य्यते ] न निश्चीयते सर्वं सम्भवतीत्यर्थः । एतेन त्वमेव तावदिति (६७) श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥ ७८ ॥

अयुक्तरूपं किमतः परं वदेति ६९ श्लोकोक्तं प्रत्याह,—

तदङ्गेति । [तस्य] शिवस्य [अङ्गम्] तस्य [ संसर्गम् अवाप्य ] आसाद्य [चिता भस्मैव रजः विशुद्धये] [कल्पते] फलं पर्य्याप्नोति

असम्पदस्तस्य वृषेण गच्छतः
प्रभिन्नदिग्वारणवाहनो वृषा।
करोति पादावुपगम्य मौलिना
विनिद्रमन्दाररजोऽरुणाङ्गुली ॥ ८० ॥
विवक्षता दोषमपि च्युतात्मना
त्वयैकमीशं प्रति साधु भाषितम्।

इत्यर्थः। अलमर्थयोगान्नमःस्वस्तिस्वाहेत्यादिना (२, ३, १६ पा०) चतुर्थी। [ध्रुवम्] शोधकत्वं प्रमाणसिद्धमित्यर्थः। प्रमाणमेवाह,—[तथा हि] प्रसिद्धमेवेत्यर्थः। [नृत्ये] ताण्डवे यः [अभिनयः] अर्थव्यञ्जकचेष्टाविशेषः स एव [क्रिया] तया निमित्तेन [च्युतम्] पतितं चिताभस्मरज इति शेषः [अम्बरौकसाम्] देवानाम् [मौलिभिः विलिप्यते] ध्रियते। अशुद्धं चेत् कथमिन्द्रादिभिः ध्रियत इत्यर्थापत्तिः अनुमानं वा प्रमाणमित्यर्थः ॥ ७९ ॥

यदुक्तं दिगम्बरत्वेन निवेदितं वसु, ( ७२ श्लो० ) इत्यस्य तेऽन्या पुरतो विडम्बनेत्यादि (७० श्लो०) च तत्रोत्तरमाह,—

असम्पद इति। [प्रभिन्नः] मदस्रावी [दिग्वारणः] दिग्गजः [वाहनम्] यस्य सः ऐरावतेन ऊढ इत्यर्थः। [वृषा] देवेन्द्रः [असम्पदः] दरिद्रस्य [वृषेण गच्छतः] वृषभारूढस्य [तस्य] ईश्वरस्य [पादौ मौलिना] मुकुटेन [उपगम्य] प्रणम्य इत्यर्थः। [विनिद्राणाम्] विकसितानाम् [मन्दाराणाम्] कल्पतरुकुसुमानाम् [रजोभिः] परागैः [अरुणाः अङ्गुलयः] ययोः तौ तथोक्तौ [करोति]। दिग्गजारोहिणाम् इन्द्रादीनामपि वन्द्यस्य इन्दुमौलेः किम् सम्पदा? वृषारोहणे वा को दोषः? इत्यर्थः ॥८०॥

यमामनन्त्यात्मभुवोऽपि कारणं
कथं स लक्ष्यप्रभवो भविष्यति ॥ ८१ ॥
अलं विवादेन यथा श्रुतस्त्वया
तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं
न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥

यदुक्तम् अलक्ष्यजन्मतेति (७२ श्लो०) तत्रोत्तरमाह,—

विवक्षतेति। [च्युतात्मना] नष्टस्वभावेन अत एव [दोषम्] दूषणं [विवक्षता] वक्तुमिच्छतापि [त्वया ईशं प्रति एकम्] अलक्ष्यजन्मतेति एतदेकं वच इत्यर्थः। [साधु भाषितम्] सम्यगुक्तं कुतः ? [यम्] ईश्वरम् [आत्मभुवोऽपि] ब्रह्मणोऽपि। "ब्रह्मात्मभूः सुरज्येष्ठ" इत्यमरः। [कारणमामनन्ति] उदाहरन्ति विद्वांस इति शेषः। पाघ्राध्मास्थाम्नादाणित्यादिना (७, ३, ७८ पा०) मनादेशः। [सः] ईश्वरः [कथम् लक्ष्यप्रभवः] ? लक्ष्यजन्मा [भविष्यति]। अनादिनिधनस्य भगवतः कारणशङ्काकलङ्कस्य न अभिष्यते इत्यर्थः ॥८१॥

अलमिति। अथ वा [विवादेन] कलहेन [अलं त्वया यथा] येन प्रकारेण [सः] ईश्वरः [श्रुतः] [अशेषम्] कार्त्स्न्येन [तथाविधः] तावत्प्रकार एव [अस्तु]। [मम मनः] तु [अत्र] ईश्वरे [भावः] शृङ्गारः [एकः] अद्वितीयः [रसः] आस्वाद्यो यस्य तत् [तथास्थितम्]। तथाहि [कामवृत्तिः] स्वेच्छाव्यवहारी [वचनीयम्] अस्थानसङ्गापवादम् [नेक्षते] न विचारयति। न हि स्वेच्छासञ्चारिणो लोकापवादात् बिभ्यतीति भावः ॥ ८२ ॥

निवार्य्यतामालि ! किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः।
न केवलं यो महतोऽपभाषते
शृणोति तस्मादपि यः स पापभाक् ॥ ८३ ॥

इतो गमिष्याम्यथवेति वादिनी
चचाल बाला स्तनभिन्नवल्कला।
स्वरूपमास्थाय च तां कृतस्मितः
समाललम्बे वृषराजकेतनः ॥ ८४ ॥

निवार्य्यतामिति। हे [आलि !] सखि !। "आलिः सखी वयस्या च" इत्यमरः। [स्फुरितोत्तराधरः] स्फुरणभूयिष्ठोष्ठः [अयं वटुः] माणवकः [पुनः] [किमपि विवक्षुः] वक्तुमिच्छुः। ब्रुवः सनन्तादुप्रत्ययः। [निवार्य्यताम्]। तर्हि वक्तुमेव कथं न ददासीत्याह,—तथाहि [यो महतः] पूज्यान् [अपभाषते] अपवदति [न केवलम्] [स पापभाग्] भवतीति शेषः। अत्र स्मृतिः। "गुरोः प्राप्तः परीवादो न श्रोतव्यः कथञ्चन। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः" इति। किन्तु [तस्मात्] महतामपवादकात् [यः शृणोति] महदपवादकवाक्यमिति शेषः [सः अपि] पापभाक् इत्यनुषज्यते ॥ ८३ ॥

सम्प्रति गन्तव्यपक्षमाश्रयते,—

इत इति। [अथ वा इतः] अस्मात् [गमिष्यामीति वादिनी] वदन्ती [स्तनाभ्यां भिन्नवल्कला] रयवशात् कुचस्रस्तचीरा [बाला] पार्वती [चचाल]। [वृषराजकेतनः] वृषभध्वजः

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः
निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥८५॥

अद्य प्रभृत्यवनताङ्गि ! तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।

[स्वरूपमास्थाय] निजरूपमाश्रित्य [स्मितस्मितः] सन् [ताम्] पार्वतीं [समाललम्बे] जग्राह ॥ ८४ ॥

तमिति। [तम्] देवं [वीक्ष्य वेपथुमती] कम्पवती [सरसाङ्गयष्टिः] खिन्नगात्री महादेवदर्शनेन देव्याः सात्त्विकभावोदय उक्तः। [निक्षेपणाय] अन्यत्र विन्यासाय [उद्धृतम्] उत्क्षिप्तं [पदम्] अङ्घ्रिम् [उद्वहन्ती] [शैलाधिराजतनया] पार्वती [मार्गे अचलः] तस्य [व्यतिकरेण] संमाहत्या अवरोधनेन इति यावत्। [आकुलिता] सम्भ्रमिता [सिन्धुः] नदी [इव]। "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः। [न ययौ न तस्थौ] लज्जयेति भावः। वसन्ततिलकवृत्तमेतत् ॥ ८५ ॥

अद्येति। [चन्द्रमौलौ] शिवे हे [अवनताङ्गि !] पार्वति ! [अद्य प्रभृति] अद्यादिनादारभ्येत्यर्थः। प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते। [तव] [तपोभिः] [क्रीतः]। दासृङ् दाने दासते आत्मानं ददातीति [दासः अस्मि] [इति] [वादिनि] वदति सति। [सा] देवी [अञ्जाय] सपदि। "झटित्यञ्जसाह्नाय द्राग्मङ्क्षु सपदि द्रुतम्" इत्यमरः। [नियमजम्] तपोजन्यं [क्लमम्] क्लेशम् [उत्ससर्ज] फलप्राप्त्या

अज्ञाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥८६॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
तपःफलोदयो नाम पञ्चमः सर्गः ॥ ५ ॥ X

---

## षष्ठः सर्गः।

---

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम्।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥१॥

क्लेशं विसस्मार इत्यर्थः। तथा [हि क्लेशः फलेन] फलसिद्ध्या [पुनर्नवतां विधत्ते] पूर्ववदेव अक्लिष्टताम् आपादयति इत्यर्थः। सफलः क्लेशो न क्लेश इति भावः ॥ ८६ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरि-
विरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनी-
समाख्यायां पञ्चमः सर्गः ॥ ५ ॥

---

अथेति। [अथ] देवदेवानुग्रहानन्तरं [गौरी] पार्वती विश्वम् आत्मा स्वरूपं यस्येति विश्वस्य आत्मेति वा [विश्वात्मने] शिवाय [मिथः] रहसि। "मिथोऽन्योन्यं रहस्यपि" इत्यमरः। [सखीं सन्दिदेश] अतिससर्ज। क्रियामात्रप्रयोगे-

तया व्याहृतसन्देशा सा बभौ निभृता प्रिये।
चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥ २ ॥

ऽपि (१) सम्प्रदानत्वात् चतुर्थी। किमिति [भूभृतां नाथः] हिमवान् [मे] मम [दाता] सन् [प्रमाणीक्रियतामिति] दातृत्वेन प्रमाणीक्रियतामित्यर्थः। प्रार्थनायां लोट्। पित्रा दीयमानायाः परिग्रहो मम महान् अनुग्रह इति भावः॥ १ ॥

तयेति। [तया] सख्या सखीमुखेन इत्यर्थः [व्याहृतसन्देशा] उक्तवाचिका [प्रिये] हरे विषये [निभृता] निश्चला परमासक्ता इत्यर्थः [सा] गौरी [मधौ] वसन्ते निभृता स्थिरा परभृतया कोकिलया उन्मुखी मुखरा [परभृतोन्मुखी]। मुखशब्देन अभिभाषणव्यापारो लक्ष्यते। तथा च परभृतामुखेन व्याहरन्ति इत्यर्थः। परभृतेति क्रियाशब्दविवक्षायां जातेरस्त्रीति (४, १, ६३ पा०) ङीप्प्रत्ययो न भवति। तयेत्युपमेयस्य व्यस्तत्वात् उपमानवाचि परभृताशब्दस्य समासः सोढव्यः। अथ वा भृञ्भरणे (३, ३,१०८ पा० वा०) सम्पदादित्वात् क्विप्। परैर्भृत् यस्याः तया परभृता इति व्यासेन व्याख्येयम्। पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह। [चूतयष्टिः] चूतशाखेव [अभ्यासे] अन्तिके [बभौ]। "सदेशाभ्याससविधसमर्य्यादसवेशवत्। उपकण्ठान्तिकाभ्यर्णाभ्यग्राप्यभितोऽव्ययम्" इत्यमरः॥ २ ॥

---

(१) कर्मणा यमभिप्रैतीति (१, ४, ३२ पा०) सूत्रे कर्मशब्देन क्रियाया अपि ग्रहणात् क्रियया यमभिप्रैतीति तत्सूत्रस्थवार्त्तिके क्रियाशब्दस्य साक्षादग्रहणाच्च सम्प्रदानसंज्ञा।

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम्।
ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥३॥
ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥४॥
आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु।
व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥५॥

स इति। [स] प्रकृतः। शास्तीति शासनः। (१) बहुलग्रहणात् कर्त्तरि ल्युट्। [स्मरस्य शासनः] ईश्वरः [तथेति प्रतिज्ञाय] तथा करिष्यामीत्युक्त्वा इत्यर्थः। [उमां कथमपि] कृच्छ्रेण [विसृज्य] तत्र गाढ़ानुरागत्वादिति भावः। [ज्योतिर्मयान्] तेजोरूपान् [सप्तर्षीन्] अङ्गिरःप्रभृतीन् [सस्मार] स्मृतवान् ॥ ३ ॥

त इति। [ते] तप एव धनं येषां ते [तपोधनाः] सप्तर्षयः [प्रभामण्डलैः] तेजःपुञ्जैः [व्योम] आकाशं [द्योतयन्तः] प्रकाशयन्तः अरुन्धत्या सह वर्त्तन्त इति [सारुन्धतीकाः] सन्तः। नद्यृतश्चेति (५, ४, १५३ पा०) कप्। [सपदि प्रभोः] ईश्वरस्य [पुरः] पुरोभागे [प्रादुरासन्] प्रत्यक्षा बभूवुः ॥ ४ ॥

इतः परं षड्भिः श्लोकैः तान् एव मुनीन् वर्णयति,—आप्लुता इत्यादिभिः। उत्किरन्ति विक्षिपन्ति इति उत्किराः इगुपधेत्यादिना (३, १, १३५ पा०) कप्रत्ययः। [तीरे] ये [मन्दाराः] कल्पवृक्षाः तेषां [कुसुमानाम् उत्किराः वीचयः] तरङ्गाः येषां तेषु [दिङ्नागानाम्] दिग्गजानां [मदगन्धः]

(१) कृत्यल्युटो बहुलम् (३, ३, ११३ पा०) इति सूत्रे इति शेषः।

मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥६॥
अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना साक्षात् सप्रणाममुदीक्षिताः ॥७॥
आसक्तबाहुलतया सार्द्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८ ॥

अस्ति येषु इति तथोक्तेषु [व्योमगङ्गाप्रवाहेषु] आकाशगङ्गास्रोतःसु [आप्लुताः] स्नाताः ॥ ५ ॥

मुक्तेति। [मुक्तानाम्] मौक्तिकानां [यज्ञोपवीतानि] मुक्तामयानि तानि इत्यर्थः [बिभ्रतः] दधानाः हेममयानि वल्कलानि येषां ते [हैमवल्कलाः]। रत्नमयानि अक्षसूत्राणि येषां ते [रत्नाक्षसूत्राः]। [प्रव्रज्याम्] प्रव्रजनम्। व्रजयजोर्भावे क्यप् इति (३, ३, ९८ पा०) क्यप्। [आश्रिताः कल्पवृक्षा इव] स्थिताः। अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते "जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विन" इति (६ स० ३४ श्लोके) सपत्नीकत्वाभिधानात् "सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन्" इति वानप्रस्थस्य उभयथा स्मरणात् ॥ ६ ॥

अध इति। [अधः प्रस्थापिताश्वेन] सूर्यमण्डलोपरिवर्त्तित्वात् सप्तर्षिमण्डलस्येति भावः। [समावर्जितकेतुना] तन्मण्डलाघातशङ्कया नामितध्वजेन [सहस्ररश्मिना] सूर्येण [साक्षात्] स्वयमेव [सप्रणामम् उदीक्षिताः] गमनाभ्यनुज्ञादानपर्यन्तमित्यर्थः। भगवतः सूर्यस्याप्युपास्या इति भावः ॥७॥

आसक्तेति। पुनः किंविधाः [प्रलयापदि] कल्पान्तसङ्कटे

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम्।
पुरातनाः पुराविद्भिर्धातार इति कीर्त्तिताः ॥९॥
प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम्।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥१०॥
कुलकम् ॥
तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥

[आसक्तबाहुलतया] दंष्ट्रायामिति शेषः। [उद्धृतया] दंष्ट्रया इति शेषः। [भुवा सार्द्धम्] धरण्या सह [महावराहदंष्ट्रायां विश्रान्ताः]। महाप्रलयेऽपि अविनाशिन इत्यर्थः ॥ ८ ॥

सर्गशेषेति। [विश्वयोनेः] ब्रह्मणः [अनन्तरम्] सर्गशेषस्य प्रणयनात् ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः [पुराविद्भिः] पुराणवेदिभिः व्यासादिभिः [पुरातनाः धातार इति कीर्त्तिताः]। विश्वयोनेरिति सम्बन्धमात्रे षष्ठी तस्यानन्तरमिति भाष्ये दर्शनात्। अपादानत्वविवक्षायां तु पञ्चमी। अयमदः शब्दो यथाशब्दाद्वृत्तादनन्तरस्येति शावरभाष्ये दर्शनात्। "तथा अथातो धर्मजिज्ञासा वेदाध्ययनादनन्तरम्" इत्याचार्य्याः। कविश्च "पुराणपत्रापगमादनन्तरम्" इति। एवम् अन्यत्रापि द्रष्टव्यम् ॥ ९ ॥

प्राक्तनानामिति। [प्राक्तनानाम्] जन्मान्तरभवानां [विशुद्धानाम्] निर्मलानाम् [परिपाकम्] फलदानोन्मुखत्वम् [उपेयुषाम्] गतानां [तपसां फलानि उपभुञ्जाना अपि] [तपस्विनः] तपोनिष्ठाः। प्रारब्धभोगिनो निस्पृहाश्चेति भावः। कुलकम् ॥१०॥

तेषामिति। [तेषाम्] ऋषीणां [मध्यगता साध्वी] पति-

तामगौरवभेदेन मुनीश्चापश्यदीश्वरः ।
स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥१२॥
तद्दर्शनादभूत् शम्भोर्भूयान् दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्॥१३॥
धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥१४॥

अता अतएव [पत्युः] वशिष्ठस्य [पादयोः अर्पितेक्षणा] निविष्टदृष्टिः [अरुन्धती] [साक्षात्] प्रत्यक्षा [तपःसिद्धिरिव] तेषामेव इति शेषः। तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा। [बहु] भूयिष्ठं [बभासे] भाति स्म ॥ ११ ॥

तामिति। [ईश्वरः] भगवान् [ताम्] अरुन्धतीम् [मुनींश्च] [अगौरवभेदेन] समानप्रतिपत्त्या [अपश्यत्] दृष्टवान् न च अयमविवेक इत्याह,—[हि] यस्मात् [स्त्री पुमांश्चेत्येषा] [अनास्था] स्त्रीपुंसभेदो न विवक्षितः किन्तु [सताम्] साधूनां [वृत्तम्] चरित्रमेव [महितम्] पूज्यम्। "गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः" इति भावः ॥ १२ ॥

तदिति। [तद्दर्शनात्] अरुन्धतीदर्शनात् [शम्भोः दारार्थम्] दारपरिग्रहार्थम् [आदरो भूयान्] बहुतरः [अभूत्] ननु दाराः कुत्र उपयुज्यन्त इत्यत आह,—[धर्म्याणाम्] धर्मादनपेतानाम्। धर्मपथ्यर्थन्यायादनपेते (४,४,९२ पा०) इति यत्प्रत्ययः। [क्रियाणाम्] इज्यादीनां सत्यः पतिव्रताः पत्न्यः [सत्पत्न्यः] पत्युर्नो यज्ञसंयोगे (४, १, ३३ पा०) इति ङीप् नकारश्च। [मूलकारणं खलु] ॥ १३ ॥

धर्मेणेति। [ धर्मेण ] दारसंजिघृक्षालक्षणेनापि कर्त्रा

अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम्।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥
यद्ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम्।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ॥ १६ ॥

[शर्वे] ईश्वरे [पार्वतीम्] [प्रति] [पदं कारिते] सति। हृक्रो-रन्यतरस्यामिति (१, ४, ५३ पा०) शर्वस्याणिकर्त्तुः कर्मत्वम्। [पूर्वापराधभीतस्य कामस्य] [मनः उच्छ्वसितम्] पुनरुज्जीवना-वकाशो भवतीति सप्रत्याशम् अभूदित्यर्थः ॥ १४ ॥

अथेति। [अथ] [अनूचानाः] साङ्गवेदप्रवक्तारः। "अनू-चानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" इत्यमरः। उपेयिवान-नाश्वाननूचानश्चेति (३, २, १०९ पा०) निपातः। [प्रीत्या कण्टकिताः] पुलकिताः [त्वचः] येषां ते तथोक्ताः। [ते सर्वे] मुनयः [जगद्गुरुम्] हरं [मानयित्वा] पूजयित्वा [इदम्] वक्ष्य-माणम् [ऊचुः] ॥ १५ ॥

यदिति। [ब्रह्म] वेदः। "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः। [सम्यक्] नियमपूर्वकम् [आम्नातम्] अधीतमिति [यत्] [अग्नौ विधिना हुतम्] इति [यत्], [तपः] चान्द्रायणादिकम् [तप्तम्] इति च [यत्], [तस्य] अध्ययनेज्यातपोरूपस्य आश्र-मत्रयसाध्यस्य कृत्स्नस्यापि कर्मण इत्यर्थः। समुदायाभि-प्रायकमेकवचनम् अन्यथा आवृत्त्यान्वयप्रसङ्गात्। न च नपुंसकैकवद्भावः अनपुंसकेनेति नियमात् (१)। [फलम्]

(१) नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम् (१, २, ६९ पा०) इति सूत्रे अनपुंसकेनैव सहोक्तौ नपुंसकं शिष्यते विभाषया एकवचनञ्चेत्यर्थके अनपुंसकेनेत्युक्तेः इह तु ब्रह्मादीनां सर्वेषां नपुंसकत्वान्नैकवत्त्वसम्भवः।

यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याविषयं मनोविषयमात्मनः ॥ १७ ॥
यस्य चेतसि वर्त्तेथाः स तावत् कृतिनां वरः ।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्त्तते ॥ १८ ॥
सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात्तव ॥ १९ ॥

कार्य्यम् [अद्य] [नः] अस्माकम् [विपक्कम्] सुनिष्पन्नमित्यर्थः । कर्मणि क्तः पचोव (८, २, ५२ पा०) इति निष्ठा तस्य वत्वम् ॥ १६ ॥

तदेव फलमाह,—

यदिति । [यत्] यस्मात्कारणात् [जगतामध्यक्षेण] अधिपेन [त्वया वयम्] [मनोरथस्य] अभिलाषस्य [अविषयम्] अगोचरम् [आत्मनः] स्वस्य [मनोविषयम्] मनोदेशम् [आरोपिताः] प्रापिताः । तस्मात् विपक्कं फलमिति पूर्वेण सम्बन्धः । सकलजगदन्वेष्टव्यस्य भगवतोऽपि वयमन्वेष्या भवाम इति परमोत्कृष्टा वयमिति भावः ॥ १७ ॥

तदेव उपपादयति,—

यस्येति । [यस्य] जनस्य [चेतसि वर्त्तेथाः] येन स्मर्य्यसे इत्यर्थः । [स तावत्] स एव [कृतिनां वरः] श्रेष्ठः । [ब्रह्मणः] वेदस्य वेधसो वा [योनेः] कारणस्य यद्वा वेदप्रमाणकस्य [तव चेतसि यो वर्त्तते] त्वया स्मर्य्यत इत्यर्थः; [किम्पुनः] स कृतिनां वर इति किमु वक्तव्यमित्यर्थः ॥ १८ ॥

सत्यमिति । [अर्कात्] सूर्य्यात् [सोमात्] चन्द्राच्च [परम्] ऊर्द्ध्वं [पदम्] स्थानम् [अध्यास्महे] तिष्ठामः वयमिति शेषः

त्वत्सम्भावितमात्मानं बहु मन्यामहे वयम्।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः॥ २०॥
या नः प्रीतिर्विरूपाक्ष! त्वदनुध्यानसम्भवा।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम्॥२१॥

[सत्यम्]। अधिशीङ्स्थासां कर्मेति (१, ४, ४६ पा०) कर्मत्वम्। [अद्य तु] [तव] कर्त्तुः [स्मरणम्] एव [अनुग्रहः] प्रसादः तस्माद्धेतोः [ताभ्याम्] अर्केन्दुभ्याम्. [उच्चैस्तरम्] अत्युच्चं पदम् अध्यास्महे इति सम्बन्धः। उच्चैस्तरमिति (१) द्रव्य प्रकर्षत्वात् न अमुप्रत्ययः॥ १९॥

त्वदिति। [वयम्] त्वया सम्भावितं सत्कृतं [त्वत्सम्भावितम्] [आत्मानम्] आत्मस्वरूपं [बहु] अधिकं यथा तथा मन्यामहे]। तथाहि [उत्तमादरः] सत्पुरुषकर्तृकः सत्कारः [स्वगुणेषु] विषये [प्रायेण] भूम्ना [प्रत्ययम्] विश्वासम् [आधत्ते] जनयति। सर्वस्यापि महाजनपरिग्रह एव पूज्यता हेतुरित्यर्थः॥ २०॥

येति। हे [विरूपाक्ष!] [त्वदनुध्यानसम्भवा] त्वत्कर्तृक स्मरणजन्या [नः] अस्माकं [या प्रीतिः] [सा] प्रीतिः [तुभ्यं किम्?] आवेद्यते किमर्थं? निवेद्यते तथाहि, [देहिनाम्] प्राणिनाम् [अन्तरात्मा] अन्तर्यामी [असि]। सर्वसाक्षिणा त्वया मत्प्रीतिः अनावेदिताऽपि ज्ञायत एव यतः, ततो न बुद्धबोधनं सम्भवतीति भावः॥ २१॥

(१) किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (५, ४, ११ पा०) किमादिभ्यः घसंज्ञकप्रत्ययाच्चामुः स्यान्न तु द्रव्यप्रकर्षे इति द्रव्यप्रकर्षे तन्निषेधात् नामुः।

**साक्षाद्दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।**
**प्रसीद कथयात्मानं न धियां पथि वर्त्तसे ॥२२॥**
**किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।**
**अथ विश्वस्य संहर्त्ता भागः कतम एष ते ? ॥२३॥**
**अथवा सुमहत्येषा प्रार्थना देव ! तिष्ठतु ।**
**चिन्तितोपस्थितास्तावत्शाधि नः करवाम किम्२४**

साक्षादिति । हे देव ! [साक्षात्] प्रत्यक्षेण [दृष्टोऽसि] [अञ्जसा पुनः] तत्त्वतस्तु [त्वां वयं न विद्मः] । दृश्यमानस्य रूपस्य अतात्त्विकत्वादिति भावः । अतः [प्रसीद] अनुगृहाण [आत्मानम्] निजस्वरूपं [कथय] । न च अकथितं तत्सुबोधम् इत्याह, [धियाम्] बुद्धीनां [पथि न वर्त्तसे] अतः त्वयैव त्वद्रूपं कथनीयम् इत्यर्थः ॥२२॥

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह,—

किमिति । हे देव ! [एषः] दृश्यमानः [ते भागः] मूर्त्तिः [किम्] [येन] भागेन [व्यक्तम्] प्रपञ्चं [सृजसि] सः ? । यत्-तदोर्नित्यसम्बन्धात् सर्वत्र तच्छब्दोऽध्याहार्य्यः । [उत येन] भागेन [तत्] व्यक्तं [बिभर्षि] पालयसि स वा ? । [अथ] यः [भागः] तस्य [विश्वस्य संहर्त्ता] स वा ? । किमादयः सन्देहे । [कतमः ?] ब्रह्मविष्णुमहेश्वरेषु अयं कतमः भागः ? तत् उच्यतामित्यर्थः ॥ २३ ॥

ननु हर इत्येवं निश्चयात् कथमयं संशयस्तत्राह,—

अथवेति । [अथवा] हे [देव !] सुमहती गुरुतमत्वात् अतिदुर्लभेत्यर्थः । [एषा] [प्रार्थना] निजरूपनिरूपणप्रार्थना

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः ॥२५॥
विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः ।
ननु मूर्त्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः॥२६॥
सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।

[तिष्ठतु] । किन्तु चिन्तितेन चिन्तिता वा उपस्थिताः [चिन्तितोपस्थिताः] तान् [नः] अस्मान् [तावत् शाधि] आज्ञापय [किं करवाम ?] । प्रार्थनायां लोट् । अलम् अप्रस्तुतेन, प्रस्तुते तावत् नियुङ्क्ष्वेत्यर्थः ॥२४॥

अथेति । [अथ] [परमेश्वरः] [मौलिगतस्य इन्दोः] [तन्वीम्] अल्पां कलामात्रत्वादिति भावः । [प्रभाम्] कान्तिं [विशदैः] शुभ्रैः [दशनांशुभिः] [उपचिन्वन्] वर्द्धयन् [प्रत्याह] प्रत्युवाच इत्यर्थः ॥ २५ ॥

विदितमिति । हे मुनयः ! [काश्चित्] अपि [मे प्रवृत्तयः] व्यापाराः [स्वार्था न] भवन्ति [यथा] तथा [वः] युष्माकम् [विदितम्] वाक्यार्थः कर्म बुद्ध्यर्थत्वात् वर्त्तमाने क्तः तद्योगात् षष्ठी (१) । प्रवृत्तिपारार्थ्ये प्रमाणमाह, [अष्टाभिः मूर्त्तिभिः] [इत्थम्भूतः] इमं प्रकारं परार्थवृत्तिरूपं प्राप्तः । भू प्राप्तौ इति धातोः कर्त्तरि क्तः । [सूचितः] ज्ञापितः [अस्मि] । मत्स्वमूर्त्तिचेष्टया पारार्थ्यम् अनुमेयमित्यर्थः ॥२६॥

स इति । [सः] परार्थप्रवृत्तिः [अहम्] [तृष्णातुरैः चातकैः]

---

(१) मतिबुद्धिपूजार्थेभ्यश्च (३, २, १८८ पा०) इति वर्त्तमाने क्तः क्तस्य च वर्त्तमाने (२, ३, ६७ पा०) वर्त्तमानार्थक्तयोगे कर्त्तरि षष्ठी ।

अरिविप्रकृतैर्देवैः प्रसूतिं प्रतियाचितः ॥ २७ ॥
अत आहर्त्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥
तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः॥ २९॥

[वृष्टिं विद्युत्वान्] मेघः [इव] [अरिविप्रकृतैः] शत्रुपीड़ितैः [देवैः] [प्रसूतिम्] पुत्रोत्पादनं [प्रतियाचितः] याचतेर्दुहादित्वात् अप्रधाने (१) कर्मणि क्तः ॥ २७ ॥

अत इति। [अतः] सुरप्रार्थितत्वाद्धेतोः [आत्मजन्मने] पुत्राय पुत्रम् उत्पादयितुम् इत्यर्थः। क्रियार्थोपपदस्य इत्यादिना (२,३,१४ पा०) चतुर्थी। [पार्वतीं यजमानः] यष्टा पूङ्यजोःशानन् (३, २, १२८ पा०) इति शानन्प्रत्ययः। [हविर्भोक्तुः] अग्नेः [उत्पत्तये] [अरणिम्] अग्निमन्थनदारुविशेषम् [इव] "निर्मन्थ्यदारुणि त्वरणिर्द्वयोः" इत्यमरः। [आहर्त्तुम्] संग्रहीतुम् [इच्छामि] ॥ २८ ॥

तामिति। [अस्मदर्थे] अस्मत्प्रयोजने निमित्ते सति [युष्माभिः] [ताम्] पार्वतीं [हिमालयः] हिमवान् [याचितव्यः]। याचेर्दुहादित्वात् अप्रधाने कर्मणि (२) तव्यप्रत्ययः। आवश्यकञ्च एतदित्याह, [सद्भिः] सत्पुरुषैः [अनुष्ठिताः] सङ्घटिताः [सम्बन्धाः] यौनादयः [विक्रियायै] वैकल्योत्पादनाय

---

(१) "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष् वहाम्" इति भाष्यवचनादिति शेषः।

(२) प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्। अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्मण इति भाष्यवचनादिति शेषः।

उन्नतेन स्थितिमता धुरमुद्वहता भुवः।
तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥३०॥
एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥३१॥
आर्य्याप्यरुन्धती तत्र व्यापारं कर्त्तुमर्हति।
प्रायेणैवंविधे कार्य्ये पुरन्ध्रीणां प्रगल्भता ॥३२॥

[न कल्पन्ते] न पर्य्याप्नुवन्ति न समर्था इत्यर्थः। (२, ३, १६ पा०) अलमर्थयोगाच्चतुर्थी ॥ २८ ॥

न च अहं लौल्यात् स्त्रियमिच्छामि किन्तु देवोपकाराय यदि एवं निखिलदेवेषु विद्यमानेषु हिमगिरेः शिलाभूतस्य परिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसम्बन्धोऽत्रभवान् हिमवानित्याह,—

उन्नतेनेति। [उन्नतेन] प्रांशुना प्रसिद्धेन च [स्थितिमता] प्रतिष्ठावता [भुवः धुरम्] भारम् [उद्वहता] निर्वाहकेण इत्यर्थः। [तेन] हिमवता [योजितः] सङ्घटितः [सम्बन्धः] यौनसम्बन्धो-यस्य तं [मामप्यवञ्चितम्] अव्यामोहितं [वित्त] जानीत। विद ज्ञाने इति धातोर्लोट् ॥ ३० ॥

तर्हि स किं वाच्य इत्याशङ्क्याह,—

एवमिति। [कन्यार्थं] कन्याप्रदानाय [सः] हिमवान् [एवं वाच्य इति वः] युष्मभ्यं [नोपदिश्यते]। कुतः [हि] यस्मात् [साधवः] विद्वांसः [भवद्भिः प्रणीतम्] स्मृतिरूपेण निबद्धम् [आचारम्] आमनन्ति उपदिशन्ति। न हि स्वयम् उपदेष्टारः परोपदेशम् अपेक्षन्ते इत्यर्थः ॥ ३१ ॥

आर्य्येति। [आर्य्या] पूज्या [अरुन्धत्यपि तत्र] विवाह-

तत् प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥३३॥
तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥३४॥

कृत्ये [व्यापारम्] साहाय्यं [कर्तुम् अर्हति] तथाहि [प्रायेण] प्राचुर्य्येण [एवंविधे कार्य्ये] विवाहादिकार्य्ये दुर्घटे इत्यर्थः। [पुरन्ध्रीणाम्] कुटुम्बिनीनाम्। "स्यात्तु कुटुम्बिनी पुरन्ध्रिः" इत्यमरः। [प्रगल्भता] चातुर्य्यम्। स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥ ३२ ॥

तदिति। [तत्] तस्मात्कारणात् [ओषधिप्रस्थम्] नाम [हिमवत्पुरम्] हिमवन्नगरं [सिद्धये] कार्य्यसिद्ध्यर्थं [प्रयात] गच्छत। [अस्मिन्] पुरोवर्त्तिनि [महाकोशी] नाम तत्रत्या काचिन्नदी तस्याः [प्रपाते] भृगौ एव सा नदी यत्र पतति तस्मिन्नित्यर्थः। "प्रपातस्त्वतटोभृगुः" इत्यमरः। [नः] अस्माकं [पुनः सङ्गमः] अस्त्विति शेषः। भवत्समागमम्प्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥ ३३ ॥

तस्मिन्निति। [संयमिनाम्] [आद्ये तस्मिन्] ईश्वरे [परिणयोन्मुखे] विवाहोत्सुके [जाते] सति प्रजापतेरिमे [प्राजापत्याः] ब्रह्मपुत्रा इत्यर्थः [तपस्विनः] मुनयः [परिग्रहैः] पत्नीभिः [व्रीडाम्] गार्हस्थ्यनिमित्तामित्यर्थः। "पत्नीपरिजनादानमूलशापाः परिग्रहाः" इत्यमरः। [जहुः] तत्यजुः। जहातेर्लिटि रूपम्। न हि समानगुणदोषेषु व्रीडागमोऽस्तीति भावः ॥ ३४ ॥

ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि सम्प्राप्तः प्रथमोद्दिष्टमास्पदम् ॥३५॥
ते चाकाशमसिश्यामामुत्पत्य परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६ ॥
अलकामतिवाह्येव वसतिं वसुसम्पदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥३७॥

तत इति । [ततः] अनन्तरम् [मुनिमण्डलम्] मुनिसमूहः [परममित्युक्त्वा] ओम् इत्युक्त्वा अनुमन्येत्यर्थः । अव्ययमेतत् । "ओमेवं परमं मतम्" इत्यमरः । [प्रतस्थे] । [भगवान्] ईश्वरः [अपि] [प्रथमोद्दिष्टम्] पूर्वसङ्केतितम् [आस्पदम्] स्थानं महाकोशीप्रपातम् [सम्प्राप्तः] ॥ ३५ ॥

त इति । [मनसा समरंहसः] मनस्तुल्यवेगाः [ते परमर्षयश्च] । पूर्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः । [असिवच्छ्यामम्] नीलम् [आकाशम्] खं प्रति [उत्पत्य ओषधिप्रस्थम्] हिमवत्पुरम् [आसेदुः] सद्यः प्रापुः इत्यर्थः ॥ ३६ ॥

इतः परं दशभिः श्लोकैः ओषधिप्रस्थमेव वर्णयति,—

अलकामिति । [वसुसम्पदाम्] धनसमृद्धीनां [वसतिम्] स्थानम् [अलकाम्] कुबेरनगरीम् [अतिवाह्य] परिच्छिद्य इति यावत् [उपनिवेशितम् इव] स्थितम् । तथा [स्वर्गस्य अभिष्यन्दः] अतिरेकः अतिरिक्तजन इति यावत् । तस्य [वमनम्] निःसारणम् [कृत्वा उपनिवेशितम् इव] स्थितम् । उभयत्रापि कौटिल्यः, भूतपूर्वम् अभूतपूर्वं वा जनपदं परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् इति । अलकामरावत्यतिशयितसमृद्धिकामित्यर्थः ॥ ३७ ॥

गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि।
बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥३८॥
जितसिंहभया नागा यत्राश्वा विलयोनयः।
यक्षाः किम्पुरुषाः पौरा योषितो वनदेवताः॥३९॥

गङ्गेति। [गङ्गायाः स्रोतोभिः] प्रवाहैः [परिक्षिप्तम्] परिवेष्टितं तैः एव सपरिखमित्यर्थः। [वप्रः] चयः प्राकारचैत्यम् इति यावत्। "स्याच्चयो वप्रमस्त्रियाम्" इत्यमरः। तस्य [अन्तः] मध्ये [ज्वलिताः] प्रकाशमानाः [ओषधयः] यस्य तत् तथोक्तम्। ज्वलितौषधित्वात् रात्रिषु सञ्चारिणां दीपनिरपेक्षमित्यर्थः। [बृहत्] विपुलः [मणिशिलानाम्] माणिक्यानां [सालः] प्राकारो यस्य तत् तथोक्तम्। "प्राकारो वरणः सालः" इत्यमरः। अतएव [गुप्तावपि] संवरणेऽपि [मनोहरम्] अकृत्रिमदुर्गसंवरणमिति भावः॥ ३८॥

जितेति। [यत्र] पुरे [नागाः] गजाः [जितं सिंहेभ्यो भयम्] यैः ते तथोक्ताः सिंहाधिकबला इत्यर्थः। नाथस्तु पदं तुषारस्रुति धौतरक्तम् (१ स० ६ श्लो०) इति एतद्विरोधभयात् वीतवीतभया इति पपाठ। तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात् अत्र तु ओषधिप्रस्थगजानां हिमवत्महिम्ना सिंहातिरेकसम्भवेन अविरोधादिति। वीतवीतेति पाठे वीतं विगतं वीतात् पादाङ्कुशकर्मभ्यां भयं येषां ते तथोक्ताः स्वभावविनीता इत्यर्थः। "पादकर्म युतं प्रोक्तं यातमङ्कुशवारणम्। उभयं वीतमाख्यातम्" इति यादवः। [अश्वाः विलयोनयः] विलसम्भवाः। अन्यत्र तु न तथेति वैचित्र्यम्। उक्तञ्च। "अमृताद्वाष्पतोऽर्कात् वेदेभ्योऽण्डाच्च गर्भतः। साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्त्तिता" इति। [यक्षाः] [किम्पु-

शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम्।
अनुगर्जितसन्दिग्धाः करणैर्मुरजस्वनाः॥ ४०॥
यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता॥ ४१॥
यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम्॥४२॥

रुषाः] किन्नराश्च [पौराः] पुरजनाः। [वनदेवता एव योषितः] न तु मानुष्य इत्यर्थः॥ ३९॥

शिखरेति। [यत्र] पुरे [शिखरेषु आसक्ताः मेघाः] येषां तेषां [वेश्मनाम्] सम्बन्धिनः, [अनुगर्जितानि] प्रतिगर्जितानि तैः [सन्दिग्धाः मुरजस्वनाः करणैः] पाठाक्षरव्यवस्थापितैः ताड़नविशेषैः। तदुक्तं राजकन्दर्पेण,—"नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम्। संस्थानं ताड़नं रोधः करणानि प्रचक्षते॥" इति। [व्यज्यन्ते] स्फुटीक्रियन्ते॥ ४०॥

यत्रेति। [यत्र] नगरे [विलोलानि] चञ्चलानि [विटपेषु] [अंशुकानि] येषां तैः [कल्पद्रुमैरेव] [अपौरादरेण] पौरादरं विनैव [निर्मिता] अयत्नसिद्धेत्यर्थः। [गृहेषु] यानि [यन्त्राणि] आधारदारूणि तेषु [पताकाः] तासाम् [श्रीः] सम्भवतीति शेषः। तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति सम्भाव्यन्त इत्यर्थः॥ ४१॥

यत्रेति। [यत्र] पुरे [नक्तम्] रात्रौ [स्फटिकहर्म्येषु आपानभूमिषु] पानगोष्ठीप्रदेशेषु [ज्योतिषाम्] नक्षत्राणाम् [प्रतिबिम्बानि उपहारताम्] पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा [प्राप्नुवन्ति]॥ ४२॥

यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥४३॥
यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात् ।
रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्य्ययः ॥ ४४ ॥
भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।

यत्रेति । [यत्र] पुरे [दुर्दिनेषु] मेघाच्छन्नदिवसेषु [नक्तमोषधीनाम्]तृणज्योतिषाम् [प्रकाशेन]सञ्चरन्ते एभिरिति सञ्चराः पन्थानः । गोचरसञ्चरेत्यादिना (३, ३, ११९ पा०) घप्रत्ययान्तो निपातः । [दर्शितसञ्चराः] प्रकाशितमार्गाः [अभिसारिकाः] कान्तार्थिन्यः । "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमरः । [तमिस्राणाम्] तमसाम् । अयोगात् कर्मणि (१) षष्ठी । [अनभिज्ञाः] तमांसि न अभिजानन्तीत्यर्थः ॥४३॥

यौवनेति । [यस्मिन्] पुरे [वयः यौवनान्तम्] यौवनावधिकं सर्वेऽपि अजरा इत्यर्थः । तथा [कुसुमायुधात्] कामात् अन्यः इति शेषः । [अन्तकः] मृत्युः न अस्तीति शेषः । विरहिणां तादृग्दुःखोत्पादकत्वात् अन्तकत्वोपचारः । कामं विना मृत्युर्नास्ति इत्यर्थः । अत एव तत्कार्य्यभूतमरणाभाव इत्याशयेनाह, रतीति [रतिखेदसमुत्पन्ना निद्रा] सुप्तिरेव [संज्ञाविपर्य्ययः] चेतनापगमः, न तु दीर्घनिद्रारूप इत्यर्थः । अतत्याः सर्वे अजरामरा इति श्लोकतात्पर्य्यार्थः । अन्तयति अन्तं करोतीत्यन्तकः । अन्तयतेस्तत्करोतीति णिजन्तात् ण्वुल्प्रत्ययः ॥ ४४ ॥

भ्रूभेदिभिरिति । [यत्र] पुरे [प्रियाः] युवानः [भ्रूभेदिभिः]

(१) कर्तृकर्मणोः कृति (२,३, ६५ पा०) इति सूत्रेणेति शेषः ।

यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः॥४५

सन्तानकतरुच्छायासुप्तविद्याधराध्वगम् ।

यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम् ॥ ४६ ॥

कुलकम् ।

अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।

भ्रूभङ्गवद्भिः [सकम्पा ओष्ठाः] येषु तैः [ललितानि अङ्गुलितर्ज्जनानि] येषु तैः [स्त्रीणां कोपैः] मानाख्यैः [आप्रसादार्थिनः] आप्रसादं प्रसादपर्य्यन्तम् अर्थिनः याचकाः कृताः न तु प्रभुकोपैरिति भावः ॥ ४५ ॥

सन्तानकेति । किञ्चेति चार्थः । [सन्तानकतरोः छायासु] [सुप्ता विद्याधराः] देवताविशेषाः त एव [अध्वगाः] यस्मिन् तत् तथोक्तं [गन्धवत्] गन्धाढ्यं [गन्धमादनम्] नाम गिरिः, यस्य पुरस्य बहिर्भवं [बाह्यम्] [उपवनम्] आरामः । अत्र [गन्धवद्गन्धमादनम्] इति आगन्तुकः पाठः । प्राचीनपाठस्तु सुगन्धिर्गन्धमादन इति पुंलिङ्गान्तः । अत एव क्षीरस्वामिना गन्धमादनमन्ये चेत्यत्र गन्धेन मादयतीति गन्धमादन इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्तं सुगन्धिर्गन्धमादन इति कालिदास इति । सन्तानकतरुच्छायेत्यत्र पूर्वपदार्थबाहुल्यसम्भवेऽपि सुलभच्छायम् इक्षुच्छायमितिवत् समर्थच्छायानिष्पत्तेः तदपेक्षाभावात् (१) छाया बाहुल्ये (२, ४, २२ पा०) इति नपुंसकत्वं नास्ति इत्यनुसन्धेयम् ॥ ४६ ॥

अथेति । [अथ ते] दिविभवाः [दिव्याः मुनयः] हिम-

---

(१) तदपेक्षायाः बाहुल्यापेक्षाया अभावात् एकेनापि सन्तानवृक्षेण समर्थच्छायानिष्पत्तेरित्याशयेनाबाहुल्यात् न नपुंसकता ।

स्वर्गाभिसन्धिसुकृतं वञ्चनामिव मेनिरे ॥ ४७॥

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥ ४८ ॥

गगनादवतीर्णा सा यथावृद्धपुरःसरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥४९॥

वत इदं [हैमवतं पुरं प्रेक्ष्य] स्वर्गाभिसन्धिनां स्वर्गोद्देशेन यत् सुकृतम् ज्योतिष्टोमाद्यनुष्ठानं तत् [स्वर्गाभिसन्धिसुकृतम्] [वञ्चनाम्] प्रतारणाम् [इव मेनिरे]। हिमवन्नगरम् अवेक्ष्य स्वर्गस्य पुण्यफलत्वं वदता वेदेन वयं विप्रलब्धा इत्यर्थः। स्वर्गात् अतिरमणीयमिति भावः ॥ ४७ ॥

त इति। [लिखितानलनिश्चलैः] चित्रगतज्वलननिष्पन्दैः इति वेगप्रकर्षोक्तिः। [जटाभारैः] उपलक्षिताः [ते] मुनयः द्वारि तिष्ठन्तीति [द्वाःस्थाः] द्वारपालकाः। "प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः" इत्यमरः। [उन्मुखैः] ऊर्द्ध्वमुखैः [द्वाःस्थैः वीक्षिताः] सन्तः न तु विनिवारिता इत्यर्थः। [गिरेः] हिमवतः [सद्मनि] [वेगादवतेरुः] अवतीर्णवन्तः ॥४८॥

गगनादिति। [गगनात् अवतीर्णा] अवरूढा [यथावृद्धम्] वृद्धानुक्रमेण स्थिताः [पुरःसराः] अग्रेसराः यस्यां सा तथोक्ता। अनुपसर्जनाधिकारात् (१) न ङीप्। [सा] [मुनिपरम्परा] मुनिपङ्क्तिः [तोयान्तः] तोयाभ्यन्तरे [भास्करालौ] प्रतिविम्बितार्कपङ्क्तिः [इव] [रेजे]। एतेन मुनीनां तेजस्वित्वेऽपि सुखसन्दर्शनं सूचयति। भास्कराणां भूयिष्ठत्वसम्भावनार्थं तोयान्तः इत्युक्तम्। अत एव बहुत्वसिद्धिश्च ॥४९॥

(१) अग्रेसरशब्दस्य टिदन्तत्वेन ङीपः प्राप्तावपि तस्य गौणतया नेह ङीप् इत्याह अनुपसर्जनाधिकारादिति।

तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः।
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥५०॥
धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥५१॥
विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः।
स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः ॥५२॥

तानिति। [गिरिः] हिमवान् [अर्घ्यम्] अर्घार्थं जलम् [आदाय] [सारगुरुभिः] अन्तःसारदुर्भरैः [पादन्यासैः वसुन्धरां नमयन्] अधः प्रापयन्। अर्घमर्हन्ति इति अर्घ्यान् (५, १, ६६ पा०) पूज्यान् दण्डादित्वाद्यप्रत्ययः। [तान्] मुनीन् [दूरात्प्रत्युद्ययौ] ॥ ५० ॥

सम्प्रति हिमवन्तमेव जङ्गमस्थावररूपद्वयसाधारणैः विशेषणैः विशिनष्टि,—

धात्विति। [धातुवत्ताम्रोऽधरः] यस्य स तथोक्तः। अन्यत्र धातुरेव ताम्रोऽधरो यस्य। [प्रांशुः] उन्नतः उभयत्रापि समानम्। [देवदारुवद्बृहन्तौ भुजौ] यस्य स तथोक्तः देवदारव एव बृहन्तौ भुजौ यस्य इति अन्यत्र। [प्रकृत्या] स्वभावेन एव शिलावदुरो यस्य स [शिलोरस्कः] शिलैव इति अन्यत्र। उरः-प्रभृतिभ्यः कप् (५, ४, १५१ पा०] इति कप्। अतः [हिमवानिति सुव्यक्तः] वर्त्तमाने क्तः। सत्यं स एवायं हिमवानिति तद्धर्मप्रत्यभिज्ञानात् अवधारित इत्यर्थः॥ ५१ ॥

विधीति। [स] हिमवान् [विधिना] शास्त्रेण [प्रयुक्तसत्कारैः] कृतार्चनैः [शुद्धकर्मभिः] अदुष्टचरितैः शुद्धान्तप्रवेशार्हैः इत्यर्थः। [तैः] मुनिभिः [स्वयं मार्गस्य] दर्शयतीति

तत्र वेत्रासनासीनान् कृतासनपरिग्रहः ।
इत्युवाचेश्वरान् वाचं प्राञ्जलिर्भूधरेश्वरः ॥५३॥
अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४ ॥
मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम् ।

[दर्शकः] दर्शयिता सन् । पश्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः । [शुद्धान्तम्] अन्तःपुरम् [आक्रमयामास] प्रवेशयामास इत्यर्थः । अत्र क्रमेः अगत्यर्थत्वात् गतिबुद्धीत्यादिना (१) तैः इत्यस्य न कर्मत्वम् ॥ ५२ ॥

तत्रेति । [तत्र] शुद्धान्ते [वेत्रासनासीनान्] [वेत्रम्] लताविशेषः । वेत्रमयविष्टरोपविष्टान् [ईश्वरान्] प्रभून् मुनीन् [भूधरेश्वरः] हिमवान् [कृतासनपरिग्रहः] उपविष्टः सन् इत्यर्थः । [प्राञ्जलिः] कृताञ्जलिः सन् [इति] एवं [वाचम् उवाच] ॥ ५३ ॥

अपेति । [अतर्कितोपपन्नम्] अविचारितमेवोपगतम् अत्यन्तासम्भावितमित्यर्थः । [वः] युष्माकं [दर्शनम्] [अपमेघोदयं वर्षम्] अनभ्रा वृष्टिः तथा [अदृष्टं कुसुमम्] यस्य तत् तथोक्तं [फलञ्च] सत् [मे प्रतिभाति] अतिदुर्लभलाभः संवृत्त इत्यर्थः । अत्र मेघोदयकुसुमरूपकारणयोः अभावेऽपि वर्षफलरूपकार्य्ययोः उदयाभिधानात् विभावना । मुनिदर्शनस्य विशिष्टहेतुत्वेन च रूपणात् रूपकालङ्कारस्य इत्युभयोः संसृष्टिः ॥५४॥

मूढमिति । [भवदनुग्रहादात्मानम्] मां [मूढम्]

(१) गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता स णौ (१, ४, ५२,) सूत्रेणेति शेषः ।

भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥
अद्य प्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ५६ ॥
अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ! ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ ५७ ॥
जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।

बुद्धिं विनाकृतं [बुद्धम्] मूढोभूत्वा यो बुद्धवान् तम् [इव] कर्त्तरि क्तः । [आयसम्] अयोविकारं [हैमोभूतम्] आयसत्वं विहाय सौवर्णत्वं प्राप्तमिव इत्यर्थः । [भूमेः] भूलोकात् [दिवम्] स्वर्गम् [आरूढमिव मन्ये] । ज्ञानरूपस्थानानि अद्य मे परमुत्कृष्यन्त इति भावः ॥ ५५ ॥

अद्येति । [अद्य प्रभृति] इत आरभ्य [भूतानाम्] प्राणिनां [शुद्धये अधिगम्योऽस्मि] शुद्ध्यर्थिनां तीर्थभूतोऽस्मि इत्यर्थः । भवदागमनात् इति शेषः । [हि] यस्मात् [यत् अर्हद्भिः] सद्भिः [अध्यासितम्] अधिष्ठितं जुष्टमिति यावत् । [तत्तीर्थं प्रचक्षते] "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः ॥५६॥

अवैमीति । हे [द्विजोत्तमाः !] [आत्मानम्] मां [द्वयेनैव पूतम्] शुद्धम् [अवैमि] अवगच्छामि । केन द्वयेन ? [मूर्ध्नि गङ्गाप्रपातेन] मन्दाकिनीपातेन, [वः] युष्माकं [धौतयोः] क्षालितयोः [पादयोरम्भसा च ] । अत्र गङ्गाजलवत् पादाम्भसः पावनत्वमिति औपम्यं गम्यते, तच्च प्रस्तुताप्रस्तुतयोरिति दीपकालङ्कारः । 'प्रेयः प्रियतराख्यानम्' इति लक्षणात् प्रेयोऽलङ्कार इति केचित् ॥ ५७ ॥

जङ्गममिति । हे मुनयः [द्विरूपम्] जङ्गमस्थावरात्मक-

विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ॥५८॥

भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे॥५९॥

न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥६०॥

त्वात् द्विप्रकारकम् [अपि मे वपुः विभक्तानुग्रहम्] विभज्य कृतप्रसादं [मन्ये]। कुतः ? [जङ्गमं वपुः वः] युष्माकं [प्रैष्यभावे] कैङ्कर्य्ये स्थितमिति शेषः। प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्येति (६, १, ८९ पा० वा०) वृद्धिः। "नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः" इत्यमरः। [स्थावरम्] वपुः [चरणाङ्कितम्]। अयमेव हि महान् अनुग्रहो दासजनस्य यत्कर्मसु नियोजनं मूर्द्धनि पादन्यासश्चेति तात्पर्य्यार्थः ॥ ५८ ॥

भवदिति। व्याप्ता दिगन्ता यैः तानि [व्याप्तदिगन्तानि] महान्त्यपीत्यर्थः। [मे] मम [अङ्गानि भवत्सम्भावनोत्थाय] युष्मदनुग्रहजन्याय [मूर्च्छते] व्याप्नुवते [परितोषाय न प्रभवन्ति] न पर्य्याप्नुवन्ति। अलमर्थयोगात् (२, ३, १६ पा०) चतुर्थी। यथा महत्सु अपि मह्यङ्गेषु न माति तथा मे हर्षो वर्द्धत इत्यर्थः ॥ ५९ ॥

नेति। [भास्वताम्] तेजस्विनां विवस्वताञ्च [वः] युष्माकं [दर्शनेन केवलं दरीसंस्थम्] गुहागतं [तमः] ध्वान्तरूपमेव [न अपास्तम्] किन्तु [मे अन्तर्गतम्] अन्तरात्मगतं [रजसः] रजोगुणात् [परम्] अनन्तरं [तमः] अज्ञानरूपम् [अपि अपास्तम्]। रजस्तु पादन्यासैः एव अपास्तमिति भावः।

कर्त्तव्यं वो न पश्यामि स्याच्चेत् किं नोपपद्यते।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१ ॥
तथापि तावत् कस्मिंश्चिदाज्ञां मे दातुमर्हथ।
विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ॥६२॥
एते वयममी दाराः कन्येयं कुलजीवितम्।
ब्रूत येनात्र वः कार्य्यमनास्था बाह्यवस्तुषु ॥६३॥

प्रसिद्धैः भास्वद्भिः बाह्यं तमोऽपास्यते एभिस्तु आन्तरमपि इति व्यतिरेको व्यज्यते ॥ ६० ॥

कर्त्तव्यमिति। [कर्त्तव्यम्] कार्य्यं [वः] युष्माकं [न पश्यामि] निस्पृहत्वादिति भावः। अथ [स्याच्चेत्] विद्येत यदि? [किं नोपपद्यते] किं नाम न सम्भवति? सर्वं सुलभमेव इत्यर्थः। अथ वा किमत्र प्रयोजनचिन्तया इत्याह, [मत्पावनाय] मच्छोधनाय [एव] [भवतामिह] विषये [प्रस्थानम्] इमं देशमुद्दिश्य इदं प्रयाणम् इत्यर्थः [मन्ये] तर्कयामि ॥६१॥

तथापीति। [तथापि] भवतां निस्पृहत्वेऽपि [कस्मिंश्चित्] कर्मणि इति शेषः। [आज्ञाम्] इदं कुर्विति आदेशं [तावत्] इदानीं [मे] मह्यं [दातुम् अर्हथ] मदनुग्रहबुद्ध्येति भावः। [हि] यस्मात् [किङ्कराः] भृत्याः प्रभवन्तीति [प्रभविष्णुषु] प्रभुषु विषये। भुवश्च (३, २, १३८ पा०) इति इष्णुच् प्रत्ययः। विशेषेण नियोगः [विनियोगः] प्रेषणमेव [प्रसादः] अनुग्रहः येषां ते तथोक्ताः। अन्यथा स्वस्वामिभावो निष्फल इति भावः ॥६२॥

एत इति। किं बहुना? [एते वयम्, अमी दाराः, इयं कुलस्य जीवितम्] प्राणभूता परमप्रेमास्पदमित्यर्थः [कन्या] अत्र] एषां मध्ये [येन] जनेन [वः कार्य्यम्] प्रयोजनं [ब्रूत]

इत्यूचिवांस्तमेवार्थं गुहामुखविसर्पिणा ।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः ॥ ६४ ॥
अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥६५॥
उपपन्नमिदं सर्वमतःपरमपि त्वयि ।
मनसः शिखराणाञ्च सदृशी ते समुन्नतिः ॥६६॥

तमिति शेषः। येन सोऽपि दीयन इति भावः। रत्नहिरण्यादिकन्तु न मे गण्यमित्याह, [वाह्यवस्तुषु] कनकरत्नादिषु [अनास्था] अनादरः। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। अदेयं न किञ्चित् अस्तीति भावः ॥६३॥

इतीति। [इत्यूचिवान्] उक्तवान्। वचेः क्वसुप्रत्ययः। [हिमालयः] हिमवान् [गुहानां मुखेषु] विवरेषु [विसर्पतीति] तथोक्तेन प्रतिशब्देन [तमेव] पूर्वोक्तमेव [अर्थम्] [द्विः] द्विवारम्। द्वित्रिचतुर्भ्यः सुजिति (५, ४, १८ पा०) सुच्प्रत्ययः। [व्याजहार] बभाषे ॥ ६४ ॥

अथेति। [अथ] अनन्तरम् [ऋषयः] [उदाहरणानि] कथाप्रसङ्गाः तएव [वस्तूनि] अर्थाः तेषु अग्रं नयतीति अग्रणीः तम् [अग्रण्यम्] प्रगल्भम्। सत्सूद्विषेत्यादिना (३, २, ६१ पा० ) क्विप्। अग्रग्रामाभ्यां नयतेरिति (१) वक्तव्यमितिणत्वम्। [अङ्गिरसम्] नाम ऋषिम् [नोदयामासुः] प्रतिवक्तुं प्रेरयामासुः। [सः] अङ्गिराः [भूधरम्] हिमवन्तम् [प्रत्युवाच] ॥ ६५ ॥

उपपन्नमिति। [इदम्] एते वयम्, अमी दारा, इत्याद्युक्तम्

(१) स एवां ग्रामणीरिति(५,३,७८पा०)सूत्रनिर्देशज्ञापकात्।

स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथा हि ते।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥६७॥

गामध्यास्यत् कथं नागो मृणालमृदुभिः फणैः।
आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत्? ॥६८॥

[सर्वम्] [अतः परमपि] अतोऽधिकमपि [त्वयि उपपन्नं] युज्यते। तथाहि [ते] [मनसः] [शिखराणाञ्च] [समुन्नतिः] [सदृशी] शिखराणीव मनो महोन्नतमित्यर्थः। किन्नाम दुष्करमुन्नतचित्तानामिति भावः। प्रस्तुताप्रस्तुतयोर्मनःशिखरयोः औपम्यस्य गम्यत्वाद्दीपकालङ्कारः ॥ ६६ ॥

स्थान इति। [त्वाम्] [स्थावरात्मानम्] स्थावररूपिणम् [विष्णुमाहुः] स्थावराणां हिमालय इति (१० अ० २५ श्लो०) गीतावचनात्। [स्थाने] युक्तम्। युक्तार्थे अव्ययमेतत्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। [तथाहि] [ते] तव [कुक्षिः] [चराचराणाम्] जङ्गमस्थावररूपिणां [भूतानाम्] पृथिव्यादीनाम् [आधारतां गतः] तव इव विष्णोः कुक्षिरेवंभूत इति भावः ॥ ६७ ॥

गामिति। [नागः] शेषाहिः [मृणालमृदुभिः] बिसकोमलैः [फणैः] [गाम्] भुवं [कथम् अध्यास्यत्?] धारयेत् [त्वम्] [आरसातलमूलात्] पातालपर्यन्तम्। विभाषाद-समासः। [नावालम्बिष्यथाश्चेत्] पादैर्नावलम्बेथा यदि। त्वदवलम्बनात् एव भुजगराजोऽपि भुवं बिभर्त्तीत्यर्थः। अत्र क्रियातिपत्त्यभावात् (१) लृङ्प्रयोगश्चिन्त्यः ॥ ६८ ॥

(१) लिङ्निमित्ते लृङ् क्रियातिपत्तौ (३,३,१३९ पा०) क्रियाया अतिपत्तिः अनिष्पत्तिः अवलम्बनक्रियाया अनिष्पत्तौ धारणाभावः तस्य प्रशंसायै विवक्षित इति तु लृङ् प्रयोगः समर्थनीयः।

अच्छिन्नामलसन्ताना: समुद्रोर्म्यनिवारिता: ।
पुनन्ति लोकान् पुण्यत्वात् कीर्त्तय:सरितश्च ते॥६९

यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिन: ।
प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७०॥

तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापको महिमा हरे: ।
त्रिविक्रमोद्यतस्यासीत् स तु स्वाभाविकस्तव॥७१॥

अच्छिन्नेति। [अच्छिन्ना:] अविच्छिन्ना: [अमलाश्च सन्ताना:] प्रबन्धा: प्रवाहाश्च यासां ता: तथोक्ता: [समुद्रोर्मिभि: अनिवारिता:] पारगमनादन्त:प्रवेशाच्चेति भाव:। [ते] तव [कीर्त्तय:] [सरितश्च] गङ्गादय: [पुण्यत्वात्] पवित्रत्वात् [लोकान् पुनन्ति] पावयन्ति। लोकपावना: खलु पुण्यश्लोका इति भाव:। केवलप्रकृतविषयस्तुल्ययोगितालङ्कार: ॥६९॥

यथेति। [गङ्गा] भागीरथी प्रभवत्यस्मादिति [प्रभव:] तेन कारणेन परमे तिष्ठतीति [परमेष्ठिन:] विष्णो:। परमे कित् (४, १० उ०) प्रत्यय:। (१) तत्पुरुषे कृतिबहुलमिति (६, ३, १४ पा०) अलुक्। परमेवहिर्दिव्यग्निभ्य: स्थ: इति (८, ३, ८७ पा०) (२) षत्वम्। [पादेन] चरणेन [यथैव श्लाघ्यते] प्रशस्यते [तथैव] [द्वितीयेन प्रभवेण] [उच्छिरसा] [त्वया] श्लाघ्यते। हरिचरणवत् तीर्थस्यापि तीर्थभूतस्त्वमिति भाव: ॥ ७० ॥

तिर्य्यगिति। [तिर्य्यगूर्द्ध्वमधस्ताच्च व्यापक:] सर्वव्यापी-

---

(१) परमे उपपदे तिष्ठतेरिनि: स्यात् स च कित् तेनालोप:।
(२) अम्बाम्बेत्यादिसूत्रशेषभूतम् परमे इत्यादि प्रतीकम्।
परम इत्यादिभ्य: परस्य स्था इत्यस्य सस्य षत्वं स्यात्।

यज्ञभागभुजां मध्ये पदमातस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥
काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।
इदन्तु ते भक्तिनम्रं सतामाराधनं वपुः ॥ ७३ ॥
तदागमनकार्य्यं नः शृणु कार्य्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमत्रांशभागिनः ॥ ७४ ॥

त्यर्थः । [महिमा] महत्त्वं [हरेः] विष्णोः । त्रिषु विक्रमेषु उद्यतस्य सतः [आसीत्] । [त्रिविक्रमोद्यतस्यापि] कदाचित् एव, न तु सर्वदा इत्यर्थः । [तव तु] व्यापको महिमा [स्वाभाविकः] नित्यसिद्ध इत्यर्थः ॥ ७१ ॥

यज्ञेति । [यज्ञभागभुजाम्] इन्द्रादीनां [मध्ये] [पदम् आतस्थुषा] निहितवता [त्वया] [उच्चैः] उन्नतं हिरण्यस्य विकारः [हिरण्मयम्] दाण्डिनायनहास्तिनायनेत्यादिना (६, ४, १७४ पा०) निपातनात्साधु । [सुमेरोः शृङ्गम्] शिखरं प्राधान्यञ्च ध्वन्यते । "शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः । [वितथीकृतम्] व्यर्थीकृतं तस्य यज्ञभागाभावादिति भावः । अस्य तु तत्सद्भावे प्रमाणं "हिमवतो हस्ती" इति श्रुतिः ॥ ७२ ॥

काठिन्यमिति । [भवता] [सर्वम्] [काठिन्यम्] घनत्वम् इत्यर्थः । [स्थावरे] स्थिरे [काये] शिलामय इत्यर्थः । [अर्पितम्] न्यस्तम् । [सताम्] अर्हताम् [आराधनम्] पूजासाधनं [ते इदं वपुस्तु] जङ्गममित्यर्थः [भक्तिनम्रम्] काठिन्यलेशोऽपि अत्र नास्ति अन्यथा नम्रत्वासम्भवात् इत्यर्थः । तथाच असाधारण्यं ध्वन्यते ॥ ७३ ॥

तदिति । [तत्] तस्मात् [नः] अस्माकम् [आगमनस्य

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्द्धचन्द्रं बिभर्त्ति यः ॥७५॥
कलितान्योऽन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
येनेदं ध्रियते विश्वं धुर्य्यैर्यानमिवाध्वनि ॥ ७६ ॥

कार्य्यम्] प्रयोजनं [शृणु] [तत्कार्य्यञ्च तवैव] न तु अस्माक-मित्यवधारणार्थं एवकारः। [वयन्तु श्रेयसाम् उपदेशात्] [अत्र] कार्य्ये [अंशभागिनः]। त्वमेव अत्र फलभाक्, वयम उपदेष्टार इति भावः ॥ ७४ ॥

कार्य्यमेवाह अणिमेत्यादिना—

अणिमेति। [यः] शम्भुः [अणिमादिगुणोपेतम्] अणिमा-दिभिः अष्टभिः गुणैः वाच्यभूतैः उपेतम् अष्टैश्वर्य्यवाचकम् (१) इत्यर्थः। अतएव [अस्पृष्टं पुरुषान्तरम्] येन तं तथोक्तं पुरुषा-न्तरस्यानभिधायकं तस्यैव एवंगुणत्वादित्यर्थः। [उच्चैः] पर-मम् [ईश्वर इति शब्दम्] निरुपपदेश्वरशब्दमित्यर्थः। [सार्द्ध-चन्द्रम्] अर्द्धचन्द्रयुक्तम् अर्द्धचन्द्रञ्च इत्यर्थः [बिभर्त्ति] ॥ ७५ ॥

कलितेति। [येन] शम्भुना [कलितम्] धृतिसंग्रहादि-स्वस्वगुणसम्पादितम् [अन्योऽन्यसामर्थ्यम्] परस्परसहकार-रूपं यैः तथोक्तैः। स्वस्वरूपसामर्थ्यम् अन्योऽन्याधेयमेवेति भावः। [पृथिव्यादिभिः आत्मभिः] अष्टाभिः मूर्त्तिभिः इत्यर्थः। [इदम्] व्यक्तं [विश्वम्] धुरं वहन्तीति [धुर्य्यैः] अश्वैः। धुरो यड्ढकाविति ( ४, ४, ७७ पा० ) यत्प्रत्ययः। [अध्वनि यानम्] रथ इव [ध्रियते] ॥ ७६ ॥

(१) अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्त्तिनम्।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥ ७७ ॥
स ते दुहितरं साक्षात् साक्षी विश्वस्य कर्मणाम्।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः ॥ ७८ ॥
तमर्थमिव भारत्या सुतया योक्तुमर्हसि।
अशोच्या हि पितुः कन्या सद्भर्त्तृप्रतिपादिता॥७९॥

योगिन इति। [योगिनः] अध्यात्मवेदिनः [क्षेत्राभ्यन्तरवर्त्तिनम्] शरीरान्तश्चरं सर्वभूतान्तर्यामिनं परमात्मस्वरूपिणम् इत्यर्थः। "क्षेत्रं पत्नीशरीरयोः" इत्यमरः। [यम्] शम्भुं [विचिन्वन्ति] मृगयन्ते। [मनीषिणः] विद्वांसः [यस्य] शम्भोः [पदम्] स्थानम् अविद्यमानम् [आवृत्तेः] पुनः संसारापत्तेः [भयम्] यत्र तत् तथाभूतम् [आहुः] ॥७७॥

स इति। [विश्वस्य] जगतः [कर्मणां साक्षी] द्रष्टा। साक्षाद् द्रष्टरि संज्ञायामिति (५, २, ९१ पा० ) इनिप्रत्ययः। वरान् इष्टान् ददातीति [वरदः।] आतोऽनुपसर्गे कः (३, २, ३पा०) इति कप्रत्ययः। [सः] पूर्वोक्तः [शम्भुः] [अस्मत्संक्रामितैः पदैः]अस्मासु निवेशितैर्वाक्यैः [ते दुहितरम्] [साक्षात्] [वृणुते] अस्मन्मुखेन स्वयमेव याचत इत्यर्थः ॥ ७८ ॥

तमिति। [तम्] शम्भुं [भारत्या] वाचा [अर्थम्] अभिधेयम् [इव] [सुतया] दुहित्रा [योक्तुम्] सङ्घटयितुम् [अर्हसि]। अत्र वागर्थयोः उपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इत्युक्तम् वागर्थाविव सम्पृक्तावित्यत्रापि। तथाहि [सद्भर्त्रे प्रतिपादिता] दत्ता [कन्या पितुः अशोच्या] ॥ ७९ ॥

यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥८०॥
प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ८१ ॥
उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥८२॥
अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३ ॥

गुणान्तरमप्याह,—

यावन्तीति । [स्थावराणि चराणि च यावन्त्येतानि] [भूतानि] सन्तीति शेषः । सर्वाणि भूतानि इत्यर्थः [एनाम्] ते दुहितरम् [मातरं कल्पयन्तु] । [हि] यस्मात् [ईशः जगतः पिता] । पितृदारेषु मातृभावो न्याय्य इति भावः ॥ ८० ॥

प्रणम्येति । [विबुधाः] देवाः [शितिकण्ठाय] शिवाय [प्रणम्य तदनन्तरम्] नीलकण्ठप्रणामानन्तरम् [अस्याः चरणौ] [चूडामणिमरीचिभिः रञ्जयन्तु] ईश्वरपरिग्रहात् अखिलदेवतावन्द्या भवतु इत्यर्थः ॥ ८१ ॥

उमेति । [उमा वधूः] [भवान् दाता] [इमे वयम्] [याचितारः] प्रार्थकाः [शम्भुः वरः] वोढा [एषः विधिः] एषा सामग्री [त्वत्कुलस्य उद्भूतये] उच्छ्रयाय [अलम्] पर्य्याप्तं । [हि] नमःस्वस्तिस्वाहास्वधेत्यादिना (२, ३, १६ पा०) चतुर्थी ॥८२॥

अस्तोतुरिति । स्वयमन्यस्तोता न भवतीति [अस्तोतुः] किन्तु [स्तूयमानस्य] सर्वैस्तुतस्य [वन्द्यस्य] जगद्वन्द्यस्य स्वयमन्यं न वन्दत इति [अनन्यवन्दिनः] [विश्वगुरोः] देवस्य

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥
शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥८५॥
मेने मेनापि तत्सर्वं पत्युः कार्य्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्त्तुरिष्टे पतिव्रताः ॥ ८६ ॥

[सुतासम्बन्धविधिना] यौनसम्बन्धाचरणेन [गुरुर्भव]। यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्ता इत्यर्थः ॥ ८३ ॥

एवमिति। [देवर्षौ] अङ्गिरसि [एवं वादिनि] सति [पार्वती पितुः पार्श्वे अधोमुखी] सती लज्जयेति शेषः। [लीलाकमलपत्राणि गणयामास] सङ्ख्यौ। लज्जावशात्कमलदलगणनाव्याजेन हर्षं जुगोप इत्यर्थः। अनेन अवहित्याख्यः सञ्चारी भाव उक्तः। तदुक्तम्,—"अवहित्या तु लज्जादेर्हर्षाद्याकारगोपनम्" इति ॥ ८४ ॥

शैल इति। [शैलः] हिमवान् [सम्पूर्णकामोऽपि] दातुं कृतनिश्चयोऽपि इत्यर्थः। [मेनामुखम्] [उदैक्षत] उचितोत्तरजिज्ञासया इति भावः। तथा हि [प्रायेण] [कुटुम्बिनः] गृहस्थाः [कन्यार्थेषु] कन्याप्रयोजनेषु [गृहिण्येव] [नेत्रम्] कार्य्यज्ञानकारणं येषां ते तथोक्ताः कलत्रप्रधानवृत्तय इत्यर्थः ॥ ८५ ॥

मेने इति। [मेनापि] [पत्युः] हिमालयस्य [तत्सर्वम् अभीप्सितम्] [कार्य्यं मेने] अङ्गीचकार। तथा हि [पतिः] एव [व्रतम्] यासां ताः [भर्त्तुः इष्टे] अभीप्सिते न विद्यते व्यभि-

इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालङ्कृतां सुताम् ॥ ८७ ॥

एहि विश्वात्मने वत्से ! भिक्षासि परिकल्पिता ।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥ ८८ ॥

एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वान् त्रिलोचनवधूरिति ॥ ८९ ॥

चारो यासां ता [अव्यभिचारिण्यो भवन्ति] भर्तृचित्ताभिप्रायज्ञा भवन्तीति भावः ॥ ८६ ॥

इदमिति। [सः] हिमवान् [वचसामन्ते] मुनिवाक्यावसाने [अत्र] मुनिवाक्ये [इदम्] उत्तरश्लोके वक्ष्यमाणं दानमेव [न्याय्यम्] न्यायात् अनपेतम् [उत्तरमिति] [बुद्ध्या] चित्तेन [विमृश्य] विचिन्त्य मङ्गलं यथा तथा अलङ्कृतां [मङ्गलालङ्कृताम्] [सुताम्] [आददे] हस्ताभ्यां जग्राह ॥ ८७ ॥

एहीति। हे [वत्से !] पुत्रि ! [एहि] आगच्छ, त्वम् [विश्वात्मने] शिवाय [भिक्षा] [परिकल्पितासि] निश्चितासि। "रत्नादिस्तम्बपर्य्यन्तं सर्वं भिक्षा तपस्विनः" इति वचनादिति भावः। [अर्थिनः] याचितारः [मुनयः] [मया] [गृहमेधिनः] गृहस्थस्य [फलम्] [प्राप्तम्]। इह परत्र च तारकत्वात् पात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः ॥ ८८ ॥

एतावदिति। [महीधरः] हिमवान् [तनयाम्] [एतावत्] पूर्वोक्तम् [उक्त्वा] [ऋषीनाह], किमिति ? [इयम्] [त्रिलोचनवधूः] त्र्यम्बकपत्नी [वः सर्वान्] [नमतीति]। त्रिलोचनवधूः इति सिद्धवदभिधानेन अविप्रतिपन्नं दानमिति सूचयति ॥८९॥

ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम्॥ ९०॥

तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम्।
अङ्कमारोपयामास लज्जमानामरुन्धती॥ ९१॥

तन्मातरश्चाश्रुमुखीं दुहितृस्नेहविक्लवाम्।
वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः॥ ९२॥

ईप्सितेति। [ते] मुनयः [ईप्सितार्थक्रियया] इष्टार्थकरणेन [उदारम्] महत्। "उदारो दातृमहतोः" इत्यमरः। [गिरेः] हिमवतः [वचः] वचनम् [अभिनन्द्य] साध्विति संस्तुत्य [अम्बिकाम्] अम्बाम् पच्यत इति पाकः फलं [पुरःपाकाभिः] पुरस्कृतफलाभिः [आशीर्भिः] आशीर्वादैः [एधयामासुः] संवर्धयामासुः॥ ९०॥

तामिति। [प्रणामादरेण] नमस्कारासक्त्या [स्रस्ते जाम्बूनदे] सुवर्णविकारे [वतंसके] कनककुण्डले यस्याः ताम् [लज्जमानाम्] [ताम्] अम्बिकाम् [अरुन्धती] [अङ्कम्] [आरोपयामास]। रुहः पोऽन्यतरस्यामिति (७, ३, ४३ पा०) पकारः॥ ९१॥

तदिति। [दुहितृस्नेहेन] पुत्रिकाप्रेम्णा [विक्लवाम्] वियोक्ष्यत इति भीताम्। अत एव अश्रूणि मुखे यस्याः ताम् [अश्रुमुखीम्] तस्याः अम्बिकायाः मातरम् [तन्मातरम्] मेनाञ्च अन्या पूर्वं यस्यास्ति सोऽन्यपूर्वः। सर्वनाम्नो वृत्तिविषये पुंवद्भाव इति पूर्वपदस्य पुंवद्भावः। स न भवतीति [अनन्यपूर्वः] तस्य अनन्यपूर्वस्य सापत्न्यदुःखम् अकुर्वत इत्यर्थः। [वरस्य] वोढुः [गुणैः]मृत्युञ्जयत्वादिभिः [विशोकाम्]निर्दुःखाम्[अकरोत्] ९२

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना।
ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ ९३ ॥
ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम्।
सिद्धं तस्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४ ॥
पशुपतिरपि तान्यहानि कृच्छ्रात्
अगमयदद्रिसुतासमागमोत्कः।

वैवाहिकीमिति। [चीरपरिग्रहाः] वल्कलमात्रवसनाः [ते] तपस्विनः [तत्क्षणम्] तस्मिन्नेव क्षणे [हरबन्धुना] हिमवता [वैवाहिकीम्] विवाहयोग्यां [तिथिम्] [पृष्टाः] केत्यनुयुक्ताः सन्तः त्रयाणाम् अह्नां समाहारस्त्र्यहः। तद्धितार्थोत्तरपदसमाहारे चेति (२, १, ५१ पा०) समासः। राजाहःसखिभ्यष्टजिति (५, ४, ९१ पा०) टच्प्रत्ययः। द्विगुत्वादेकवचनम्। रात्राह्नाहाः पुंसीति (२, ४, २९ पा०) पुंलिङ्गता। तस्मात् [त्र्यहादूर्ध्वम्] उपरि [आख्याय] चतुर्थेऽहनि विवाह इत्युक्त्वा [चेरुः] चलिताः ॥ ९३ ॥

त इति। [ते] मुनयः [हिमालयम्] [आमन्त्र्य] साधु याम इत्यापृच्छ्य [पुनः शूलिनम्] हरं सङ्केतस्थानस्थम् [प्राप्य] [सिद्धम्] निष्पन्नम् [अर्थम्] प्रयोजनम् [तस्मै] [निवेद्य च] ज्ञापयित्वा च [तद्विसृष्टाः] तेन शूलिना विसृष्टाः [खम्] आकाशं प्रति [उद्ययुः] उत्पेतुः। अत्र सङ्क्षिप्तार्थाभिधानात् सङ्क्षेपो नाम गुण उक्तः। तदुक्तं,—"सङ्क्षिप्तार्थाभिधानं यत् सङ्क्षेपः परिकीर्त्तितः" इति ॥ ९४ ॥

भगवान् पशुपतिः अहर्मात्रविलम्बमपि सोढुं न शशाक। तदौत्सुक्यादित्याह,—

कमपरमवशं न विप्रकुर्य्युः
विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९५ ॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये उमाप्रदानो नाम षष्ठः सर्गः ॥

पशुपतिरिति। उत्कं मनो यस्य सः उत्कः। उत्क उन्मना इति (५, २, ८० पा०) निपातः। [ अद्रिसुतासमागमोत्कः ] पार्वतीपरिणयोत्सुकः [ पशुपतिरपि ] [ तानि ] त्रीणोति शेषः [ अहानि ] [ कृच्छ्रादगमयत् ] अयापयत्। कविराह [ अमी भावाः ] औत्सुक्यादयः सञ्चारिणः [अवशम्] इन्द्रियपरतन्त्रम् [अपरम्] पृथग्जनं [ कम् ] [ न विप्रकुर्य्युः ] न विकारं नयेयुः। [यत्] यस्मात् [विभुम्] समर्थं जितेन्द्रियम् इति यावत् [तम्] स्मरहरम् [ अपि ] [ स्पृशन्ति ] विकुर्वन्ति इत्यर्थः। अत्र विभुविकारसमर्थनात् अर्थात् इतरजनविकारः कैमुतिकन्यायादापतति इत्यर्थापत्तिरलङ्कारः। तथा च सूत्रं,— "दण्डापूपिकयार्थान्तरपतनमर्थापत्तिरिति"। अर्थान्तरन्यास इति केचित्, तदुपेक्षणीयं, युक्तिस्तु विस्तरभयान्नोच्यते। पुष्पिताग्रावृत्तम्। "अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति" लक्षणात् ॥ ९५ ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां षष्ठः सर्गः ॥

---

## सप्तमः सर्गः।

अथौषधीनामधिपस्य वृद्धौ
तिथौ च जामित्रगुणान्वितायाम्।
समेतबन्धुर्हिमवान् सुताया
विवाहदीक्षा विधिमन्वतिष्ठत्॥ १॥

वैवाहिकैः कौतुकसंविधानैः
गृहे गृहे व्यग्रपुरन्ध्रिवर्गम्।
आसीत् पुरं सानुमतोऽनुरागात्
अन्तःपुरस्यैककुलोपमेयम्॥ २॥

अथेति। [अथ] तदनन्तरं [हिमवान्] [ओषधीनामधिपस्य] चन्द्रस्य [वृद्धौ] शुक्लपक्ष इत्यर्थः। शुभकर्मस्वापूर्य्यमाणपक्षस्य प्राशस्त्यात्। [तिथौ च] [जामित्रम्] लग्नात्सप्तमं स्थानं तस्य [गुणः] शुद्धिः सा च ग्रहराहित्यं तेन [अन्वितायाम्] सत्याम्। यद्यपि जामित्रशुद्धिः लग्नधर्मः तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः। [समेतबन्धुः] युक्तबन्धुः सन् [सुतायाः] दुहितुः [विवाहदीक्षा] विवाहसंस्कारः सैव [विधिः] कर्म तम् [अन्वतिष्ठत्] कृतवान्॥ १॥

वैवाहिकैरिति। [अनुरागात्] प्रीतिवशात् [गृहे गृहे] प्रतिगृहम्। वीप्सायां (८, १, ४ पा०) द्विर्भावः। विवाहः प्रयोजनमेषामिति[वैवाहिकानि] तैः। तदस्य प्रयोजनमिति (५, १, १०९ पा०) ठक्। [कौतुकसंविधानैः] मङ्गलार्थसम्पादनैः [व्यग्रः] व्याकुलः [पुरन्ध्रिवर्गः] कुटुम्बिनीसङ्घो यस्मिन् तत्

सन्तानकाकीर्णमहापथं तत्
चीनांशुकैः कल्पितकेतुमालम्।
भासोज्ज्वलत्काञ्चनतोरणानां
स्थानान्तरं स्वर्ग इवाबभासे ॥ ३ ॥

एकैव सत्यामपि पुत्रपङ्क्तौ
चिरस्य दृष्टेव मृतोत्थितेव।
आसन्नपाणिग्रहणेति पित्रोः
उमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥

तथोक्तं [सानुमतः] अद्रेः [पुरं] वाह्यम् ओषधिप्रस्थम् [अन्तःपुरञ्च] अवरोधनञ्च [एककुलेन] एकगृहेण एकगोत्रेण वा [उपमेयम् आसीत्]। "सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम्" इति विश्वः।० सर्वेषामपि स्वगृह एव इदं शोभनं वर्त्तत इत्यभिमानोऽभूत् इत्यर्थः। एतेन हिमाद्रेः प्रजारागः उक्तः। अत्र सर्वं सम्पन्नमेव इत्यर्थः ॥ २ ॥

सन्तानेति। [सन्तानकैः] मन्दारकुसुमैः [आकीर्णाः] आस्तृताः [महापथाः] राजकीयपथाः यस्मिन् तत् तथोक्तं [चीनांशुकैः] पट्टवस्त्रैः [कल्पिताः] विरचिताः [केतुमालाः] ध्वजपङ्क्तयो यस्य तत् तथोक्तं [काञ्चनतोरणानां] [भासा] प्रभया [उज्ज्वलत्] दीप्यमानं [तत्] पुरं [स्थानान्तरम्] स्वर्गादन्यत्र स्थितः [स्वर्ग इव] [आबभासे] उत्प्रेक्षालङ्कारः ॥ ३ ॥

एकैवेति। पुत्राश्च दुहितरश्च [पुत्राः]। भ्रातृपुत्रौ स्वसृदुहितृभ्याम् (१, २, ६८ पा०) इत्येकशेषः। "पुत्रौ पुत्रश्च दुहिता च" इत्यमरः। तेषां [पङ्क्तौ] सङ्घे [सत्यामपि] [उमा एकैव] [चिरस्य दृष्टेव] चिरात् नष्टलब्धेव [मृतोत्थितेव] मृत्वा

अङ्काद्ययावङ्कमुदीरिताशीः
सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य
स्नेहस्तदेकायतनं जगाम ॥ ५ ॥

मैत्रे मुहूर्त्ते शशलाञ्छनेन
योगं गतासूत्तरफल्गुनीषु ।

पुनरुत्पन्नेव [आसन्नपाणिग्रहणा] आसन्नविवाहेति भर्तृ-ग्रहं गमिष्यतीति हेतोरित्यर्थः। [पित्रोः] मातापित्रोः। पिता मात्रा (१, २, ७० पा०) इत्येकशेषः। [विशेषेण उच्छ्वसितम्] प्राणभूता [बभूव]। पुमपत्यादपि अधिकप्रेमास्पदम् अभूत् इत्यर्थः ॥ ४ ॥

अङ्कादिति। [सा] पार्वती [उदीरिताशीः] प्रत्युक्ताशीर्वादा सती [अङ्कात्] [अङ्कम्] उत्सङ्गं [ययौ] [मण्डनात्] मण्डनानन्तरम् अन्यत् [मण्डनम्][अन्वभुङ्क्त]तदा सर्वैः बन्धव प्रत्येकमेव ताम् अङ्कम् आरोप्य मण्डनं प्रायच्छन् इत्यर्थः। तच्च स्नेहनिबन्धनमेवेत्याह, [सम्बन्धिभिः]स्वपुत्रादिभिः [भिन्नोऽपि] विभक्तोऽपि [गिरेः] [कुलस्य] वंशस्य [स्नेहः] [तदेकायतनं] स एव एकम् आयतनं स्थानं तत् [जगाम]। तदिति छेदेऽपि अयमेवार्थः विधेयप्राधान्यात् नपुंसकत्वमिति। सर्वे बन्धवः स्वापत्येभ्योऽपि तस्याम् अधिकं स्निह्यन्तीति तात्पर्य्यार्थः ॥५॥

मैत्र इति। अथ [मैत्रे] मित्रदैवत्ये [मुहूर्त्ते] उदयमुहूर्त्तात् तृतीयमुहूर्त्त इत्यर्थः। "आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव चेति" बृहस्पतिस्मरणात्। [उत्तरफल्गुनीषु] फल्गुनीनक्षत्रे। "फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे" (१, २, ६०

तस्याः शरीरे प्रतिकर्म चक्रुः
बन्धुस्त्रियो याः पतिपुत्त्रवत्यः ॥ ६ ॥
सा गौरसिद्धार्थनिवेशवद्भिः
दूर्वाप्रवालैः प्रतिभिन्नशोभम्।
निर्नाभिकौशेयमुपात्तवाणम्
अभ्यङ्गनेपथ्यमलञ्चकार ॥ ७ ॥
बभौ च सम्पर्कमुपेत्य बाला
नवेन दीक्षाविधिसायकेन।

पा० ) इत्येकस्मिन्नपि बहुवचनम्। [शशलाञ्छनेन] चन्द्रेण [योगम्] [गतासु] सतीषु [तस्याः] पार्वत्याः [शरीरे] [बन्धुस्त्रियः] [प्रतिकर्म] प्रसाधनम्। "प्रतिकर्म प्रसाधनम्" इत्यमरः। [चक्रुः]। कीदृश्यः ? [याः] [पतिपुत्रवत्यः] जीवद्भर्तृका जीवदपत्याश्चेत्यर्थः ॥ ६ ॥

प्रतिकर्मप्रकारमेव प्रपञ्चयति,—

सेति। [सा] गौरी [गौरसिद्धार्थनिवेशवद्भिः] श्वेतसर्षपप्रक्षेपवद्भिः [दूर्वाप्रवालैः] दूर्वाङ्कुरैः [प्रतिभिन्नशोभम्] विशेषितशोभं [निर्नाभि] अतिक्रान्तनाभि [कौशेयम्] वस्त्रविशेषो यस्मिन् तत् तथोक्तम्। "कौशेयं क्रिमिकोशोत्थम्" इत्यमरः। [उपात्तवाणम्] गृहीतशरम्। "शरः क्षत्रियया ग्राह्य" इति (३ अ० ४४श्लो०) मनुस्मरणात्। [अभ्यङ्गनेपथ्यम्] अभ्यङ्गवेशम् [अलञ्चकार]। अलङ्कारमपि अलञ्चकार इत्यर्थः ॥७॥

बभाविति। किञ्चेति चार्थः। [बाला] [नवेन] [दीक्षाविधौ] विवाहकाले यः [सायकः] तेन [सम्पर्कमुपेत्य] [बहुला-

करेण भानोर्बहुलावसाने
सन्धुक्ष्यमाणेव शशाङ्करेखा ॥ ८ ॥

तां लोध्रकल्केन हृताङ्गतैलाम्
आश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं
नार्य्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥

विन्यस्तवैदूर्य्यशिलातलेऽस्मिन्
आबद्धमुक्ताफलभक्तिचित्रे ।
आवर्जिताष्टापदकुम्भतोयैः
सतूर्य्यमेनां स्नपयाम्बभूवुः ॥ १० ॥

वसाने] कृष्णपक्षात्यये शुक्लपक्षादौ इत्यर्थः। [भानोः] [करेण] किरणेन [सन्धुक्ष्यमाणा] उपचीयमाना। "सलिलमये शशिनि रवेर्दीधितयोमूर्च्छितास्तमो नैशं क्षपयन्ति" इत्यादिवचनात्। [शशाङ्करेखेव बभौ] ॥ ८ ॥

तामिति। [लोध्रकल्केन] लोध्रचूर्णेन [हृतमङ्गतैलम्] यस्यास्तां कृतोद्वर्त्तनामित्यर्थः। [आश्यानम्] ईषच्छुष्कं तेन [कालेयेन] गन्धद्रव्येण [कृताङ्गरागाम्] कृतसुगन्धामित्यर्थः। "अथ जायकं कालेयकञ्च कालानुसार्य्यम्" चेत्यमरः। [अभिषेकयोग्यम्] [वासः] वस्त्रं [वसानां] स्नानशाटीम् आच्छादयन्तीं [ताम्] पार्वतीं [नार्य्यः]। [चतुष्कम्] चतुस्तम्भगृहम् तत् [अभिमुखम्] [व्यनैषुः]। स्नानगृहं निन्युः इत्यर्थः ॥ ९ ॥

विन्यस्तेति। [विन्यस्तं वैदूर्य्यशिलातलम्] मरकतशिलाप्रदेशो यस्मिन् तस्मिन् [आबद्धानां मुक्ताफलानां] [भक्तिभिः]

सा मङ्गलस्नानविशुद्धगात्री
गृहीतपत्युद्गमनीयवस्त्रा।
निर्वृत्तपर्जन्यजलाभिषेका
प्रफुल्लकाशा वसुधेव रेजे॥ ११॥
तस्मात् प्रदेशाच्च वितानवन्तं
युक्तं मणिस्तम्भचतुष्टयेन।

रचनाभिः [चित्रे] [अस्मिन्] चतुष्के [एनाम्] पार्वतीम् [आवर्जितानाम्] आनमितानाम् [अष्टापदकुम्भानां] कनककलसानां [तोयैः] [सतूर्य्यं] मङ्गलवाद्ययुक्तं यथा तथा [स्नपयाम्बभूवुः]। अष्टसु लोहेषु पदं प्रतिष्ठा यस्येति अष्टापदम्। अष्टनः संज्ञायामिति (६, ३, १२५ पा०) दीर्घः। "अष्टापदं स्यात् कनकमिति" विश्वः॥ १०॥

सेति। [मङ्गलार्थं स्नानेन विशुद्धगात्री] निर्मलाङ्गी [पत्युः] वरस्य[उद्गमनीयवस्त्रं] धौतवस्त्रम्।"धौतमुद्गमनीयं स्यात्"इति हलायुधः। "तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्" इत्यमरः। युगग्रहणात्तु प्रायिकाभिप्रायम्। अत एव अत्र क्षीरस्वामी युगं प्रायशः यद्दृश्यं तदेव इति व्याख्याय गृहीतपत्युद्गमनीयवस्त्रेति एतदेव उदाहृतवान्। [गृहीतं पतिम्] प्रति [उद्गमनीयवस्त्रम्] यया सा धौतवस्त्रमाच्छादितवतीत्यर्थः। [सा] पार्वती [निर्वृत्तः] निष्पन्नः [पर्जन्यस्य जलेनाभिषेकः] यस्याः सा तथोक्ता। प्रफुल्लतीति [प्रफुल्लम्] [काशम्] काशपुष्पं यस्याः सा तथोक्ता [वसुधेव] [रेजे] शुशुभे॥११॥

तस्मादिति। चश्चेति चार्थः। [तस्मात् प्रदेशात्] स्नानप्रदेशात् [वितानवन्तम्] उल्लोचयुतम्। "अस्त्री वितान-

पतिव्रताभिः परिगृह्य निन्ये
क्ऌप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥
तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त पुरो निषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्य्यः ॥ १३ ॥
धूपोष्मणा त्याजितमार्द्रभावं
केशान्तमन्तःकुसुमं तदीयम् ।

मुमोच" इत्यमरः । [मणिस्तम्भचतुष्टयेन] [युक्तम्] [क्ऌप्तम्] सज्जमानम् [आसनम्] यस्मिन् तं [कौतुकवेदिमध्यम्] [पतिव्रताभिः] [परिगृह्य] दोर्भिः आलिङ्ग्य [निन्ये] नीता प्रसाधनार्थमित्यर्थः ॥ १२ ॥

तामिति । [नार्य्यः] प्रसाधिकाः [तां तन्वीम्] पार्वतीम् [तत्र] वेदिमध्ये [प्राङ्मुखीम्] [निवेश्य] उपवेश्य [पुरो निषण्णाः] अग्रे: स्थिताः प्रसाध्यते अनेनेति [प्रसाधने] अलङ्कारसाधनवर्गे [सन्निहितेऽपि] [भूतार्था] सत्यरूपा स्वाभाविकीति यावत् या [शोभा] रामणीयकं तया [ह्रियमाणानि] आकृष्यमाणानि [नेत्राणि] यासां ताः तथोक्ताः [क्षणम्] [व्यलम्बन्त] । स्वभावसुन्दर्य्याः किमस्याः प्रसाधनेन इति तूष्णीं तस्थुः इत्यर्थः॥१३

धूपेति । [काचित्] प्रसाधिका [धूपोष्मणा] करणेन [आर्द्रभावम्] आर्द्रत्वं [त्याजितम्] पचादिषु पाठाद्द्विकर्मकत्वम् । त्यजतेर्ण्यन्तादप्रधाने कर्मणि क्तः । [अन्तःकुसुमम्] अन्तर्निहितकुसुमं तस्या इमं [तदीयम्] [केशान्तम्] केशपाशं [दूर्वावता]

पर्य्याक्षिपत् काचिदुदारबन्धं
दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥

विन्यस्तशुक्लागुरु चक्रुरङ्गं
गोरोचनापत्त्रविभक्तमस्याः ।
सा चक्रवाकाङ्कितसैकतायाः
त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥ १५ ॥

लग्नद्विरेफं परिभूय पद्मं
समेघलेखं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैः
चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

मध्ये मध्ये ग्रथितदूर्वेण [पाण्डुमधूकदाम्ना] हरितमधुद्रुमकुसुममाल्येन। "मधूके तु गुड़पुष्पमधुद्रुमौ" इत्यमरः। [उदारबन्धम्] रम्यबन्धं यथा तथा [पर्य्याक्षिपत्] बबन्ध ॥ १४ ॥

विन्यस्तेति। [अस्याः] गौर्य्याः [अङ्गम्] गात्रं [विन्यस्तम्] विरचितं [शुक्लागुरु] यस्मिन् तत् [गोरोचनायाः पत्त्रैः] पत्त्ररचनाभिः [विभक्तम्] विशेषितञ्च [चक्रुः]। [सा] तथाभूता गौरी [चक्रवाकैरङ्कितं सैकतम्] यस्यास्तस्याः [त्रिस्रोतसः] गङ्गायाः [कान्तिम्] शोभाम् [अतीत्य] अतिक्रम्य [तस्थौ]। अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रोतसो धावल्यन्तु प्रसिद्धत्वात् न स्वपदेन उपात्तम् ॥ १५ ॥

लग्नेति। [प्रसिद्धैः] भूषितैः। "प्रसिद्धौ ख्यातभूषितौ" इत्यमरः। [अलकैः] उपलक्षिता [तत्] तस्याः गौर्य्याः [आननश्रीः] [लग्नद्विरेफम्] [पद्मम्] [समेघलेखम्] मेघरेखायुक्तं [शशिनो

कर्णार्पितो लोध्रकषायरूक्षे
गोरोचनाक्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभात्
बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥
रेखाविभक्तः सुविभक्तगात्र्याः
किञ्चिन्मधूच्छिष्टविमृष्टरागः ।

विसृज्य] [परिभूय] तिरस्कृत्य [सादृश्यम्] उपमा तस्य [ कथा ] उक्तिः तस्याः [प्रसङ्गम्] प्रसक्तिम्, सादृश्यं वाक्यात्प्रसक्तमपि [चिच्छेद] अभिनत् । प्रसक्तयोः पद्मचन्द्रयोः परिभूतत्वादन्यत्र च अप्रसङ्गादित्यर्थः । अत्र पूर्वार्द्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेन उपन्यासात्काव्यलिङ्गमलङ्कारः । लक्षणन्तु उक्तम् (१, स० ४८ श्लो० टी०) ॥ १६ ॥

कर्णेति । [तस्याः] गौर्य्याः [कर्णे अर्पितः] निक्षिप्तः [यवप्ररोहः] यवाङ्कुरः [लोध्रस्य] वृक्षविशेषस्य [कषायेण] विलेपनेन [रूक्षे] विशदे उद्वर्त्तिते इत्यर्थः । "कषायो रसभेदे स्यात् अङ्गरागे विलेपने" इति विश्वः । [गोरोचनायाः क्षेपेण] विन्यासेन [नितान्तगौरे] अत्यन्तारुणे । "गौरः श्वेतेऽरुणे पीते" इति विश्वः । [कपोले] गण्डस्थले [परभागलाभात्] वर्णोत्कर्षप्राप्तेः [चक्षूंषि] द्रष्टॄणामिति शेषः [बबन्ध] जहार आचकर्ष इत्यर्थः । गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसन्निधानाल्लब्धवर्णोत्कर्षः सन् चक्षुराकर्षकोऽभूत् इति भावः ॥ १७ ॥

रेखेति । [सुविभक्तगात्र्याः] सुसंश्लिष्टावयवायाः पार्वत्याः [रेखया] मध्यगतया [ विभक्तः ] सुश्लिष्टः [ किञ्चित् ] ईषत् [ मधूच्छिष्टेन ] सिक्थकेन [ विमृष्टः ] विशेषेण निर्मलीकृतः

कामप्यभिख्यां स्फुरितैरपुष्यत्
आसन्नलावण्यफलोऽधरोष्ठः ॥ १८ ॥

पत्युः शिरश्चन्द्रकलामनेन
स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीः
माल्येन तां निर्वचनं जघान ॥ १९ ॥

[रागः] यस्य सः तथोक्तः। "मधूच्छिष्टन्तु सिक्थकमिति" "निर्णिक्तं शोधितं मृष्टम्" इति च अमरः। अन्यत्रोक्तं "लौहित्यापगमायाधरेषु सिक्थकलेपः क्रियते"। [आसन्नम्] सन्निहितं [लावण्यफलं] सौन्दर्य्यप्रयोजनं मुखचुम्बनादिरूपं यस्य स तथोक्तः [अधरोष्ठः] स्फुरितैः] भाविशुभशंसिभिः स्पन्दैः [काम्] अनिर्वाच्याम् [अपि अभिख्यां] शोभाम् [अपुष्यत्] पुपोष। "अभिख्या नामशोभयोः" इत्यमरः ॥ १८ ॥

पत्युरिति। [सख्या] कर्त्र्या [चरणौ रञ्जयित्वा] लाक्षारसाक्तौ कृत्वा कृताशीरिति करोतिना समानकर्तृकत्वम्। [अनेन] चरणेन। रञ्जने द्वयोरपि नियमाच्चरणौ इत्युक्तापि औचित्यात्ताड़नविधौ एकतरपरामर्श इत्याहुः। [पत्युः] ईश्वरस्य [शिरश्चन्द्रकलाम्] सुरतविशेषे इति शेषः। [स्पृश] ताड़य [इति] [परिहासपूर्वम्] [कृताशीः] प्रयुक्ताशीर्वादा [सा] पार्वती [ताम्] सखीं [माल्येन] मालया। "माल्यं मालास्रजौ" इत्यमरः। [निर्वचनम्] यथा तथा तूष्णीमित्यर्थः [जघान] ताड़यामास। निर्वचनमित्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः। तदुक्तं,—"प्राप्तकालन्तु यद्ब्रूयात् कुर्य्याद्वा विहृतं हि तत्" इति ॥ १९ ॥

तस्याः सुजातोत्पलपत्रकान्ते
प्रसाधिकाभिर्नयने निरीक्ष्य ।
न चक्षुषोः कान्तिविशेषबुद्ध्या
कालाञ्जनं मङ्गलमित्युपात्तम् ॥ २० ॥

सा सम्भवद्भिः कुसुमैर्लतेव
ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानैः
आमुच्यमानाभरणा चकाशे ॥ २१ ॥

तस्या इति। [प्रसाधिकाभिः] अलङ्कर्त्रीभिः [सुजाते] सम्यगुत्पन्ने [उत्पलपत्रे] इव [कान्ते] रम्ये [तस्याः नयने निरीक्ष्य] [कालाञ्जनम्] अञ्जनविशेषः [चक्षुषोः कान्तिविशेषबुद्ध्या] शोभातिशयो भविष्यतीति बुद्धेरित्यर्थः [न उपात्तम्] न गृहीतं, किन्तु [मङ्गलम्] शुभम् [इति] हेतोः उपात्तम्। निसर्गसुभगस्य किमाहार्य्यकाड़म्बरेणेति भावः ॥ २० ॥

सेति। [आमुच्यमानाभरणा] निबध्यमानाभरणा [सा] गौरी [सम्भवद्भिः] उत्पद्यमानैः [कुसुमैर्लतेव] अनेन पद्मरागेन्द्रनीलादीनि आभरणानि सूचितानि लताकुसुमानां नानावर्णत्वात्। [उद्यद्भिः] उदयं गच्छद्भिः [ज्योतिर्भिः] उडुभिः [त्रियामा] रात्रिः [इव] अनेन मौक्तिकानि कथितानि। [लीयमानैः] आश्रयद्भिः निषीदद्भिः इत्यर्थः। [विहङ्गैः] चक्रवाकैः [सरिदिव] अनेन सुवर्णाभरणानि सूचितानि विहङ्गाश्च तत्सूचनाय चक्रवाकाः अभिमताः]। [चकाशे] रेजे। अत्र लताकुसुमादीनां सहजसम्बन्धिनामुपमानत्वेन उपादानात् आहार्य्यकमपि तस्याः सहजमिव अशोभत इति भावः ॥ २१ ॥

आत्मानमालोक्य च शोभमानम्
आदर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव
स्त्रीणां प्रियालोकफलो हि वेशः ॥ २२ ॥
अथाङ्गुलिभ्यां हरितालमार्द्रं
माङ्गल्यमादाय मनःशिलाञ्च ।
कर्णावसक्तामलदन्तपत्र
माता तदीयं मुखमुन्नमय्य ॥ २३ ॥

आत्मानमिति। किञ्चेति चार्थः। गौरी [शोभमानम् आत्मानम्] निजशरीरम् [आदर्शबिम्बे] दर्पणमण्डले। "दर्पणे मुकुरादर्शौ" इत्यमरः। [स्तिमितायताक्षी] आदरात् निश्चलायतलोचना सती [आलोक्य] [हरोपयाने] हरप्राप्तौ [त्वरिता] व्यग्रा [बभूव]। [स्त्रीणां वेशः] नेपथ्यम् [प्रियस्य] भर्त्तुः [आलोकः]दर्शनं [फलम्] प्रयोजनं यस्य स तथोक्तः [हि]। अन्यथा अरण्यचन्द्रिका स्यादिति भावः। अनेन कालाक्षमत्वलक्षणमत्यौत्सुक्यमुक्तमित्यनुसन्धेयम् ॥ २२ ॥

अथेति। [अथ] प्रसाधनानन्तरम् [माता] मेनका [माङ्गल्यम्] मङ्गलार्थम् [आर्द्रम्] द्रवं [हरितालम्] वर्णद्रव्यविशेषं [मनःशिलाम्] धातुविशेषं [च] [अङ्गुलिभ्याम्] तर्ज्जनीमध्यमाभ्याम् [आदाय] [कर्णयोरवसक्ते] लग्ने [अमले दन्तपत्रे] यस्य तत् तथोक्तं तस्याः पार्वत्याः इदं [तदीयं मुखम् उन्नमय्य]। विवाहदीक्षातिलकं 'चकार इति उत्तरश्लोकेन अन्वयः ॥ २३ ॥

उमास्तनोद्भेदमनुप्रवृद्धो
मनोरथो यः प्रथमं बभूव ।
तमेव मेना दुहितुः कथञ्चित्
विवाहदीक्षातिलकञ्चकार ॥युग्मकम् ॥२४॥

बबन्ध चास्राकुलदृष्टिरस्याः
स्थानान्तरे कल्पितसन्निवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्य्यमाणम्
ऊर्णामयं कौतुकहस्तसूत्रम् ॥ २५ ॥

उमेति । [उमायाः स्तनोद्भेदम् अनु] स्तनोदयम् आरभ्य इत्यर्थः [प्रवृद्धः] वृद्धिं गतः प्रागेवोत्पन्न इति भावः । [यो मनोरथः] वाञ्छा । "वाञ्छा लिप्सा मनोरथः" इत्यमरः । [प्रथमम्] मनोरथान्तरात् प्राक् अयमेव प्रथमो मनोरथ इत्यर्थः । [बभूव] । [मेना दुहितुस्तमेव] मनोरथभूतमेव तद्विषये तत्त्वोपचारः । [विवाहदीक्षायाम्] विवाहकृत्ये [तिलकं कथञ्चित्] कृच्छ्रेण [चकार] आनन्दवाष्पान्धतयेति शेषः । विवाहानन्तरभावित्वादन्येषाम् अयमेव प्रथमो मनोरथ इति भावः । युग्मकम् ॥ २४ ॥

बबन्धेति । [अस्याः] पार्वत्याः [अस्रैः] आनन्दवाष्पैः [आकुलदृष्टिः] अत एव [स्थानान्तरे कल्पितः सन्निवेशः] निक्षेपो यस्य तत् स्वस्थानादन्यत्र स्थापितमित्यर्थः । अत एव [धात्र्याः] उपमातुः । [अङ्गुलीभिः] [प्रतिसार्य्यमाणम्] स्वस्थानं प्राप्यमाणम् [ऊर्णामयम्] मेषादिलोमनिर्मितम् । "ऊर्णा मेषादिलोम्नि स्यात्" इत्यमरः । [कौतुकहस्तसूत्रम्] मङ्गलहस्तसूत्रम् । "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहल" इति

क्षीरोदवेलेव सफेनपुञ्जा
पर्य्याप्तचन्द्रेव शरत्त्रियामा।
नवं नवक्षौमनिवासिनी सा
भूयो बभौ दर्पणमादधाना ॥ २६ ॥

तामर्चिताभ्यः कुलदेवताभ्यः
कुलप्रतिष्ठां प्रणमय्य माता।
अकारयत् कारयितव्यदक्षा
क्रमेण पादग्रहणं सतीनाम् ॥ २७ ॥

शाश्वतः। [बबन्ध च] मेनेति शेषः। पूर्वोक्ततिलकक्रिया-समुच्चयार्थश्चकारः ॥ २५ ॥

क्षीरोदेति। नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयति इति [नवक्षौमनिवासिनी]। वस्तेराच्छादनार्थात्त्विनिः। तथा [नवम्] [दर्पणमादधाना] बिभ्रती [सा] गौरी [सफेन-पुञ्जा] सडिण्डीरपङ्क्तिः। क्षीरमुदकं यस्य सः [क्षीरोदः] क्षीरसमुद्रः। उदकस्योदः संज्ञायाम् (६, ३, ५७ पा०) इत्यु-दादेशः। तस्य [वेला] तीरभूमिः [इव]। "वेला काले च जल-धेस्तीरे तीरविकारयोः" इति विश्वः। [पर्य्याप्तचन्द्रा] पूर्णचन्द्रा [शरत्त्रियामा] शरद्रात्रिः [इव] [भूयः] भूयिष्ठम् [बभौ] चकाशे ॥ २६ ॥

तामिति। [कारयितव्येषु दक्षा] कारयित्री कर्मोप-देशकुशला इत्यर्थः। [माता] मेना, प्रतितिष्ठति अस्यामिति प्रतिष्ठा। आतश्चोपसर्गे (३, १, १३६ पा०) इति कः। स्त्रियां टाप्। [कुलस्य प्रतिष्ठाम्] कुलालम्बनभूतां स्थितिकारिणी-

अखण्डितं प्रेम लभस्व पत्युः
इत्युच्यते ताभिरुमा स्म नम्रा।
तया तु तस्यार्द्धशरीरभाजा
पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥२८॥
इच्छाविभूत्योरनुरूपमद्रिः
तस्याः कृती कृत्यमशेषयित्वा।

मित्यर्थः। [ताम्] गौरीम्। [अर्चिताभ्यः] पूजिताभ्यः [कुलदेवताभ्यः] गृहदेवताभ्यः [प्रणमय्य] प्रणामं कारयित्वा। ल्यपि लघुपूर्वात् (६,४,५६ पा०) इति णेरयादेशः। [सतीनां] पतिव्रतानां [पादग्रहणम्] पादाभिवन्दनं [क्रमेण अकारयत्] कारयामास। हृक्रोरन्यतरस्यामिति (१, ४, ५३ पा०) अन्यत्र च (१) नमेरकर्मकत्वात् गतिबुद्धीत्यादिना (१, ४, ५२ पा०) अणिकर्त्तुः कर्मत्वम् ॥ २७ ॥

अखण्डितमिति। [नम्रा] प्रणता [उमा ताभिः] सतीभिः [पत्युः] शिवस्य [अखण्डितम्] अक्षतं [प्रेम लभस्व] प्राप्नुहि [इत्युच्यते स्म] अभिहिता। लट्स्मे (३,२,११८पा०) इति भूतार्थे लट्। [तस्य] हरस्य, अर्द्धं शरीरस्य, अर्द्धशरीरम्। अर्द्धं नपुंसकमिति (२, १, २, पा०) समासः। तद्भजतीति [अर्द्धशरीरभाजा तया] गौर्य्या [तु स्निग्धजनाशिषः] बन्धुजनाशीर्वादाः [अपि पश्चात्कृताः] अधरीकृताः ततोऽपि अधिकफललाभादिति भावः ॥ २८ ॥

इच्छाविभूत्योरिति। [कृती] कुशलः सभायां साधुः

(१) अन्यत्र प्रणमय्येत्यत्र नमेरकर्मकत्वात् अकर्मकत्वेन विवक्षणात् तामित्यत्र इत्यर्थः।

सभ्यः सभायां सुहृदास्थितायां
तस्थौ वृषाङ्कागमनप्रतीक्षः ॥ २९ ॥
तावद्भवस्यापि कुवेरशैले
तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिः
न्यस्तं पुरस्तात् पुरशासनस्य ॥ ३० ॥

[सभ्यः]। सभायां यः (४, ४, १०५ पा० ) इति यप्रत्ययः। [अद्रिः] हिमवान् [इच्छाविभूत्योः] उत्साहैश्वर्ययोः [अनुरूपं] सदृशं यथा तथा [तस्याः] पार्वत्याः [कृत्यम्] कर्त्तव्यम् [अशेषयित्वा] अशेषं निःशेषं कृत्वा समाप्य इत्यर्थः। अशेषशब्दात्तत्करोतीति (३, १, २६ पा० वा) इत्यस्मात् क्त्वाप्रत्ययः। [सुहृदास्थितायां] बन्धुजनाक्रान्तायाम् [सभायाम्] संसदि [वृषाङ्कस्य] हरस्य [आगमनं प्रतीक्षत] इति तथोक्तः सन्। कर्मण्यण् (३, २, १ पा० ) इति अण्। [तस्थौ] स्थितः ॥ २९ ॥

तावदिति। [तावत्] यावद्गौरीप्रसाधनं क्रियते तत्काले एव इत्यर्थः। [कुवेरशैले] कैलासे तदेव पूर्वम् [तत्पूर्वम्] तच्च तत् [पाणिग्रहणम्] तस्य [अनुरूपं प्रसाधनम्] अलङ्कारसामग्री [आदृताभिः] सादराभिः। कर्त्तरि क्तः। [मातृभिः] ब्राह्मीप्रभृतिभिः सप्तमातृकाभिः (१) पुरम् शास्तीति पुरशासनः तस्य [ पुरशासनस्य ]। कर्त्तरि ल्युट्। [भवस्यापि] [पुरस्तात्] अग्रे [न्यस्तम्] निक्षिप्तम् ॥ ३० ॥

---

(१) ब्राह्मी च वैष्णवी चैन्द्री रौद्री वाराहिकी तथा।
कौवेरी चैव कौमारी मातरः सप्त कीर्त्तिताः ॥

तद्गौरवान्मङ्गलमण्डनश्रीः
सा पस्पृशे केवलमीश्वरेण ।
स एव वेशः परिणेतुरिष्टं
भावान्तरं तस्य विभोः प्रपेदे ॥ ३१

बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को
गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

शङ्खान्तरद्योति विलोचनं यत्
अन्तर्निविष्टामलपिङ्गतारम् ।

तदिति। [ईश्वरेण] शिवेन [सा मङ्गलमण्डनश्रीः], शुभ-प्रसाधनसम्पत् [तद्गौरवात्] तासु मातृषु आदरात् [केवलम् पस्पृशे] स्पृष्टैव न तु दध्रे इत्यवधारणार्थः केवलशब्दः। "केवल-श्चावधारणे" इति शाश्वतः। किन्तु [तस्य विभोः] देवस्य [स एव वेशः] स्वाभाविको भस्मकपालादिवेश एव [परिणेतुः] लोके उद्वोढुः [इष्टम्] अपेक्षितम् [भावान्तरम्] रूपान्तरम् [प्रपेदे] अङ्गरागादिरूपतां प्राप इत्यर्थः ॥ ३१ ॥

भावान्तरापत्तिमेवाह,—

बभूवेति। [भस्मैव सिताङ्गरागः] शुभ्रगन्धानुलेपनं [बभूव]। [कपालमेव अमलं] [शेखरम्] शिरोभूषणं तस्य [श्रीः] शोभा [बभूव]। [गजाजिनस्यैव उपान्तभागेषु] अञ्चलप्रदेशेषु [रोचनै-वाङ्कः] हंसादिचिह्नं यस्य सः तथोक्तः[दुकूलभावश्च]पट्टांशुकत्वञ्च [बभूव]। भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥ ३२ ॥

सान्निध्यपक्षे हरितालमय्याः
तदेव जातं तिलकक्रियायाः ॥ ३३ ॥
यथाप्रदेशं भुजगेश्वराणां
करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे
तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥
दिवापि निष्ठ्यूतमरीचिभासा
बाल्यादनाविष्कृतलाञ्छनेन ।

शङ्खेति । [शङ्खान्तरे] ललाटास्थिमध्ये [द्योतते] इति तथोक्तम् । "शङ्खो निधौ ललाटास्थ्नि" इत्यमरः । [अन्तर्निविष्टा] मध्यगता [अमला पिङ्गा तारा] कनीनिका यस्य तत्तथोक्तम् । "तारकाक्ष्णः कनीनिका" इत्यमरः । [यत्] [तत् विलोचनमेव] [हरितालमय्याः] वर्णद्रव्यविशेषविकारस्य [तिलकक्रियायाः] तिलकरचनायाः । सन्निधिरेव सान्निध्यं तदेव पक्षः साध्यम् । "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति यादवः । तस्मिन् [ सान्निध्यपक्षे जातम् ] प्रविष्टमित्यर्थः । अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ॥ ३३ ॥

यथेति । [यथाप्रदेशम्] प्रदेशान् प्रकोष्ठादीन् अनतिक्रम्य [आभरणान्तरत्वम्] कङ्कणाद्याभरणविशेषत्वम् [करिष्यताम्] सम्पादयिष्यतां [भुजगेश्वराणां शरीरमात्रम्] शरीरमेव [विकृतिम्] रूपान्तरम् [प्रपेदे] । [फणरत्नशोभाः तथैव तस्थुः] तासां तथैव उपादेयत्वादिति भावः ॥ ३४ ॥

दिवेति । [दिवा] दिने [अपि निष्ठ्यूताः] उद्गीर्णाः [मरीचिभासः] किरणकान्तयो यस्य तेन [बाल्यात्] अल्पतमत्वात्

चन्द्रेण नित्यं प्रतिभिन्नमौलेः
चूड़ामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

इत्यद्भुतैकप्रभवः प्रभावात्
प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते
खड्गे निषिक्तप्रतिमं ददर्श ॥ ३६ ॥

स गोपतिं नन्दिभुजावलम्बी
शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसङ्क्षिप्तबृहत्प्रमाणम्
आरुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

[अनाविष्कृतलाञ्छनेन] अदृश्यमानकलङ्केन इत्यर्थः । [चन्द्रेण नित्यम्] सर्वदा [प्रतिभिन्नमौलेः] सङ्गतमुकुटस्य [हरस्य चूड़ामणेर्ग्रहणम्] स्वीकारः [किम् ?] किमर्थम् ? । चन्द्रचूड़ामणेः देवस्य किम् अन्यैश्चूड़ामणिभिः ? इति भावः ॥ ३५ ॥

इतीति । [इति] इत्थम् [प्रभावात्] सामर्थ्यात् [प्रसिद्धस्य नेपथ्यविधेः] वेशविधानस्य [ विधाता ] निर्माता । अत एव [अद्भुतानाम्] आश्चर्य्याणाम् [एकप्रभवः] मुख्यनिधिः स देवः [आसन्नगणेन] पार्श्वस्थवर्गेण प्रमथगणेन इत्यर्थः [ उपनीते ] आनीते [खड्गे निषक्तप्रतिमम्] सङ्क्रान्तप्रतिविम्बम् [ आत्मानं] [ददर्श] । वीरपुरुषाणाम् एष आचारः ॥ ३६ ॥

स इति । [सः] देवः [नन्दिभुजावलम्बी] नन्दिकेश्वरभुजावलम्बनः सन् [शार्दूलचर्मणा] व्याघ्रचर्मणा [अन्तरितम्] आच्छादितम् [उरु] विशालं [पृष्ठम्] यस्य तं तथोक्तम् ।

तं मातरो देवमनुव्रजन्त्यः
स्ववाहनक्षोभचलावतंसाः।
मुखैः प्रभामण्डलरेणुगौरैः
पद्माकरं चक्रुरिवान्तरीक्षम्॥ ३८॥

तासाञ्च पश्चात् कनकप्रभाणां
काली कपालाभरणा चकाशे।
बलाकिनी नीलपयोदराजी
दूरं पुरःक्षिप्तशतह्रदेव॥ ३९॥

"शार्दूलद्वीपिनो व्याघ्रे" इत्यमरः। [तत्] तस्मिन् देवे [भक्त्या सङ्क्षिप्तम्] सङ्कोचितं [बृहत् प्रमाणम्] यस्य तम् [कैलासमिव] [गोपतिम्] वृषभम् [आरुह्य] [प्रतस्थे] चचाल॥ ३७॥

तमिति। [तं] [देवम् अनुव्रजन्त्यः] अनुगच्छन्त्यः [स्ववाहनानां क्षोभेण] प्रकम्पेण [चलावतंसाः] चलकुण्डलाः [मातरः] सप्त मातृकाः [प्रभामण्डलानि] एव [रेणवः] परागाः तैः [गौरैः] अरुणैः। "गौरोऽरुणे सिते पीते" इति यादवः। [मुखैः] [अन्तरीक्षम्] आकाशम् [पद्माकरमिव चक्रुः]॥३८॥

तासामिति। [कनकप्रभाणाम्] सुवर्णवर्णानां [तासां] मातॄणां [पश्चात् कपालाभरणा] सितकपालालङ्कारेत्यर्थः। [काली] महाकाली देवी [च]। कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम्। [बलाकिनी] बलाकावती। व्रीह्यादित्वात् (५, २,११६ पा०) इनिः। [दूरम्] यथा तथा [पुरः] अग्रे [क्षिप्ताः] प्रसारिताः [शतह्रदाः] विद्युतो यस्याः सा तथोक्ता [नीलपयोदराजी] कालमेघपङ्क्तिः [इव चकाशे]॥ ३९॥

ततो गणैः शूलभृतः पुरोगै-
उदीरितो मङ्गलतूर्य्यघोषः ।
विमानशृङ्गाण्यवगाहमानः
शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥

उपाददे तस्य सहस्ररश्मि-
स्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलि-
र्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥

तत इति। [ततः] अनन्तरं [शूलभृतः] शिवस्य पुरो गच्छन्तीति [पुरोगैः] अग्रेसरैः। अन्यत्रापि दृश्यत इति वक्तव्यमिति (३, २, ४८ पा० वा०) गमेर्डप्रत्ययः। [गणैः] प्रमथैः [उदीरितः] उत्पादितः [मङ्गलतूर्य्यघोषः] मङ्गलवाद्यध्वनिः [विमानशृङ्गाणि अवगाहमानः] सन् [सुरेभ्यः] विमानस्थेभ्यः [सेवावसरं शशंस]। सुराः प्रस्थानतूर्य्यध्वनिमाकर्ण्य अयमेव नः सेवावसर इति आजग्मुः इत्यर्थः॥ ४०॥

सुराणां सेवाप्रकारमेवाह,—

उपेति। [तस्य] हरस्य [सहस्ररश्मिः] सूर्य्यः [त्वष्ट्रा] विश्वकर्मणा [निर्मितं नवमातपत्रम् उपाददे] धृतवान् इत्यर्थः। उत्प्रेक्षते [तत्]तस्य दुकूलात्मकातपत्रस्य प्रान्तलम्बिनः [दुकूलादविदूरमौलिः] तद्दुकूलस्यासन्नमौलिरित्यर्थः। [सः] हरः [उत्तमाङ्गे] शिरसि। "उत्तमाङ्गं शिरः शीर्षम्" इत्यमरः। पतन्ती गङ्गा यस्य सः [पतद्गङ्ग इव बभौ]। तद्दुकूलादित्यत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामिति (२, ३, ३४ पा०) दूरार्थयोगे विकल्पेन पञ्चमी। नाथेनोक्तम् अन्यारादित्यत्र

मूर्त्ते च गङ्गायमुने तदानीं
सचामरे देवमसेविषाताम्।
समुद्रगारूपविपर्य्ययेऽपि
सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥

तमभ्यगच्छत् प्रथमो विधाता
श्रीवत्सलक्ष्मा पुरुषश्च साक्षात्।
जयेति वाचा महिमानमस्य
सम्बर्द्धयन्तौ हविषेव वह्निम् ॥ ४३ ॥

(२, ३, २८ पा०) आराच्छब्दस्यार्थग्रहणार्थत्वात्पञ्चमीति तदनाकरम्। किञ्चास्य शास्त्रोक्तविकल्पापवादत्वात् दूरं ग्रामस्येत्यादि षष्ठीप्रयोगः दूरापास्तः स्यादित्युपेक्षणीयमेव ॥ ४१ ॥

मूर्त्ते इति। गङ्गा च यमुना च [गङ्गायमुने मूर्त्ते च] विग्रहधारिण्यौ [सचामरे] चामरसहिते सत्यौ अत एव [समुद्रगा] नदी तस्याः [रूपम्] स्वरूपं तस्य [विपर्य्यये] अभावे [अपि] हंसपातेन हंससञ्चारेण सह वर्त्तते इति [सहंसपाते इव]। तेन सहेति तुल्ययोगे (२, २, २८ पा०) इति बहुव्रीहिः। वोपसर्जनस्येति (६, ३, २८ पा०) सभावः [लक्ष्यमाणे] दृश्यमाने सत्यौ [तदानीम्] विवाहसमये [देवम् असेविषाताम्] अभजताम्। सेवतेर्लुङ्। गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थाते इत्यर्थः ॥ ४२ ॥

तमिति। [प्रथमः] आद्यः [विधाता] चतुर्मुखः तथा [श्रीवत्सलक्ष्मा] श्रीवत्साङ्कः [पुरुषश्च] विष्णुश्च [साक्षात् तम्] देवम् [अभ्यगच्छत्] सम्मुखम् आययौ किं कुर्वन्तौ [जयेति

एकैव मूर्त्तिर्बिभिदे त्रिधा सा
सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचित्
वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥

तं लोकपालाः पुरुहूतमुख्याः
श्रीलक्षणोत्सर्गविनीतवेशाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञाः
तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥

वाचा] जयशब्देन [अस्य] ईश्वरस्य [महिमानम्] महत्त्वम् [हविषा वह्निमिव संवर्द्धयन्तौ] वृद्धिं गमयन्तौ ॥ ४३ ॥

न चानुचितमेतदुक्तमित्याह,—

एकेति। [सा एकैव मूर्त्तिस्त्रिधा] ब्रह्मविष्णुशिवात्मकत्वेन [बिभिदे]। औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः। अत एव [एषाम्] त्रयाणाम् प्रथमावरयोर्भावः [प्रथमावरत्वम्] ज्येष्ठकनिष्ठभावः [सामान्यम्] साधारणम्। इच्छया सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्च इत्यर्थः। एतदेव विवृणोति,—[कदाचित् हरः विष्णोः आद्यः] कदाचित् [हरिस्तस्याद्यः] कदाचित् [वेधाः तयोः] हरिहरयोः [आद्यः] कदाचित् [तौ] हरिहरौ [अपि] [धातुः] स्रष्टुः [आद्यौ]। एवमेतेषां पौर्वापर्य्यमनियतमिति दर्शितम् ॥ ४४ ॥

तमिति। [पुरुहूतमुख्याः] इन्द्रादयः [लोकपालाः] [श्रीलक्षणानाम्] ऐश्वर्य्यचिह्नानां छत्रचामरवाहनानाम् [उत्सर्गेण] त्यागेन [विनीतवेशाः] अनुल्बणवेशाः सन्तः तथा [दृष्टिप्रदाने] निमित्ते दर्शनप्रदानार्थमित्यर्थः [कृतनन्दिसंज्ञाः] कृता नन्दिनः

कम्पेन मूर्ध्नः शतपत्रयोनिं,
वाचा हरिं, वृत्रहणं, स्मितेन।
आलोकमात्रेण सुरानशेषान्
सम्भावयामास यथाप्रधानम् ॥ ४६ ॥

तस्मै जयाशीः ससृजे पुरस्तात्
सप्तर्षिभिस्तान् स्मितपूर्वमाह।
विवाहयज्ञे विततेऽत्र यूयम्
अध्वर्यवः पूर्ववृता मयेति ॥ ४७ ॥

प्रतिहारस्य संज्ञाः सङ्केतो यैस्ताहशाः मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचना इत्यर्थः। "संज्ञा स्याच्चेतनानाम हस्ताद्यैश्चार्थसूचना।" इत्यमरः। [तद्दर्शिताः] तेन नन्दिना दर्शिताः अयमिन्द्रः प्रणमति, अयं चन्द्र, इत्याद्युक्तिपूर्वकं निवेदिताः [प्राञ्जलयः] कृताञ्जलयः सन्तः [तम्] भवम् [प्रणेमुः] प्रणताः ॥ ४५ ॥

कम्पेनेति। सः देवः [शतपत्रयोनिम्] चतुर्मुखम् [मूर्ध्नः कम्पेन] तथा [हरिं वाचा] सम्भाषणेन वृत्रं हतवन्तं [वृत्रहणम्] इन्द्रम् ब्रह्मभ्रूणवृत्रेषु क्विप् (३, २, ८७ पा०) इति क्विप्। [स्मितेन] मन्दहासेन[अशेषान्सुरान्] [आलोकमात्रेण] दृष्टिमात्रेण इत्थं [यथाप्रधानम्] यथार्हं [सम्भावयामास]॥४६॥

तस्मा इति। [तस्मै] शिवाय [सप्तर्षिभिः]। दिक्संख्ये संज्ञायाम् इति (२, १, ५० पा०) समासः। [पुरस्तात्] अग्रे [जयेति आशीः] [ससृजे] प्रयुक्ता। [तान्] सप्तर्षीन् [स्मितपूर्वमाह]। किमिति। [अत्र वितते] विस्तृते [विवाहः] एव [यज्ञः] तस्मिन् [यूयं मया] [पूर्वम्] एव [वृताः] प्रार्थिताः

विश्वावसुप्राग्रहरैः प्रवीणैः
सङ्गीयमानत्रिपुरावदानः ।
अध्वानमध्वान्तविकारलङ्घ्यः
ततार ताराधिपखण्डधारी ॥ ४८ ॥
खे खेलगामी तमुवाह वाहः
सशब्दचामीकरकिङ्किणीकः ।

[अध्वर्य्यव:] ऋत्विजः [इति] विशेषवाचिना सामान्यमुक्तम्॥४७

विश्वावस्विति । [विश्वावसुः] नाम कश्चिद् गन्धर्वः देवगायकः [तत् प्राग्रहरैः] तत्प्रमुखैः [प्रवीणैः] प्रकृष्टवीणैः निपुणैः वा । "प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः" इत्यमरः । त्रयाणां पुराणां समाहारस्त्रिपुरम् । तद्धितार्थोत्तरपदेत्यादिना (२, १, ५१ पा० ) समाहारसमासः । पात्रादिभ्यः प्रतिषेधो वक्तव्यः स नपुंसकमिति (२, ४, १७ ) सूत्रवृत्तौ (सि० कौ० ३८७ पृ० स्थ० वा० ) इति स्त्रीलिङ्गान्ततानिषेधः । त्रिपुरस्य सम्बन्धि अवदानं पूर्ववृत्तं कर्म विजयरूपम् [त्रिपुरावदानम्] तत् [सङ्गीयमानम्] स्तूयमानं यस्य स तथोक्तः । "अवदानं कर्म वृत्तम्" इत्यमरः । ध्वान्तं तमो मोह इति यावत् तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीति [अध्वान्तविकारलङ्घ्यः ] । विवाहादिकन्तु तस्य लीला इत्यर्थः । [ताराधिपखण्डधारी] चन्द्रशेखरः शम्भुः [अध्वानम्] मार्गम् [ततार] अत्यगच्छत् ॥ ४८ ॥

खे इति । [खे] आकाशे खेलं सुन्दरं गच्छतीति [खेलगामी [सशब्दाः] शब्दायमानाः [चामीकरकिङ्किण्यः] काञ्चनक्षुद्रघण्टिकाः यस्य सः तथोक्तः । "किङ्किणी क्षुद्रघण्टिका"

तटाभिघातादिव लग्नपङ्के
धुन्वन् मुहुः प्रोतघने विषाणे ॥ ४९ ॥

स प्रापदप्राप्तपराभियोगं
नगेन्द्रगुप्तं नगरं मुहूर्त्तात् ।
पुरो विलग्नैर्हरदृष्टिपातैः
सुवर्णसूत्रैरिव कृष्यमाणः ॥ ५० ॥

तस्योपकण्ठे घननीलकण्ठः
कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य्य मार्गात्
आसन्नभूपृष्ठमियाय देवः ॥ ५१ ॥

इत्यमरः । नद्यृतश्चेति कप् । वाह्यते अनेनेति [वाहः] वृषभः । करणे घञ् । [प्रोतघने] स्यूतमेघे अतएव [तटाभिघातात्] रोधोभेदात् [लग्नपङ्के] श्लिष्टकर्दमे [इव] स्थिते [विषाणे] शृङ्गे [मुहुर्धुन्वन्] [तम्] हरम् [उवाह] वहति स्म ॥ ४९ ॥

स इति । [सः] वाहः [अप्राप्तः पराभियोगः] शत्रुसमाक्रान्तिर्यस्य तत्तथोक्तं [नगेन्द्रेण] हिमवता [गुप्तम्] रक्षितम् [नगरम्] ओषधिप्रस्थम् [पुरः] अग्रे [विलग्नैः] सक्रान्तैः [हरदृष्टिपातैः सुवर्णसूत्रैः कृष्यमाण इव] [मुहूर्त्तात् प्रापत्] अन्यथा कथं दूरस्य आशुप्राप्तिः स्यादिति भावः । पुरः प्रसृताः हरदृष्टयः पिङ्गलवर्णत्वात् सौवर्णानि वृषाकर्षणदामानीव प्रलक्ष्यन्त इत्यर्थः ॥ ५० ॥

तस्येति । [तस्य] पुरस्य [उपकण्ठे] अन्तिके घनः मेघ इव नीलः कण्ठो यस्य सः [घननीलकण्ठः] [देवः] [कुतूहलात्]

तमृद्धिमद्बन्धुजनाधिरूढै-
र्वृन्दैर्गजानां गिरिचक्रवर्त्ती ।
प्रत्युज्जगामागमनप्रतीतः
प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

वर्गावुभौ देवमहीधराणां
द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ
भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

दर्शनौत्सुक्यात् [उन्मुखैः पौरैर्दृष्टः] सन् [स्ववाणचिह्नात्] त्रिपुरविजयसमये स्ववाणाङ्कात् [मार्गात्] कुतश्चिदाकाश-देशात् [अवतीर्य] अवरुह्य [आसन्नभूपृष्ठम्] निकटभूतलम् [इयाय] प्राप ॥ ५१ ॥

तमिति । [आगमनेन] शिवागमनेन [प्रतीतः] हृष्टः [गिरिचक्रवर्त्ती] पर्वताधिराजः हिमवान् [ऋद्धिमता] वस्त्रालङ्कारादिसमृद्धेन [बन्धुजनेन अधिरूढैः] अनेन बन्धूनां समस्ताम्यं सूचितम् । [गजानां वृन्दैः] [प्रफुल्लाः] विकासितकुसुमाः [वृक्षाः] येषु तैः [स्वैः] स्वकीयैः [कटकैः] नितम्बैः [इव] [तम्] हरम् [प्रत्युज्जगाम] अभिययौ । "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः ॥ ५२ ॥

वर्गाविति । [दूरविसर्पी] दूरगामी [घोषः] ययोस्तौ देवाश्च महीधराश्च तेषाम् [देवमहीधराणाम्] [उभौ वर्गौ] [उद्घटितापिधाने] अपनीतकवाटे [पुरस्य द्वारे] भिन्नः दीर्णः एकसेतुर्याभ्यां तौ [भिन्नैकसेतू] [पयसामोघौ] प्रवाहौ [इव] [समीयतुः] सङ्गतौ ॥ ५३ ॥

ह्रीमानभूद्भूमिधरो हरेण
त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूरम्
आवर्जितं नात्मशिरो विवेद ॥ ५४ ॥

स प्रीतियोगाद्विकसन्मुखश्रीः
जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन्मन्दिरमृद्धमेनम्
आगुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥

ह्रीमानिति । [भूमिधरः] हिमवान् त्रयो लोकाः [त्रैलोक्यम्] चातुर्वर्ण्यादित्वात् (५, १, १२४ पा० सू० वा०) ष्यञ्-प्रत्ययः । तस्य [वन्द्येन] नमस्कार्य्येण हरेण [कृतप्रणामः] सन् । "ऋत्विक्पितृव्यश्वशुरमातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्य्यात् प्रत्युत्थायाभिवादनम्" इति स्मरणात् । [ह्रीमान-भूत्] महादेवं प्रति स्वयमल्पत्वात् सङ्कोचं प्राप इत्यर्थः । ननु विदितेश्वरमहिम्नः स्वयं प्रागेव प्रणतस्य जामातुः आचारमात्र-स्वीकारे कः सङ्कोच इति शङ्कां निरस्यति,—पूर्वमिति [हि] यस्मात् [सः] हिमवान् [पूर्वम्] प्रागेव [तस्य] ईश्वरस्य [महिम्ना] सामर्थ्येन [दूरम्] अत्यन्तम् [आवर्जितम्] नमितम् [आत्मशिरः न विवेद] सत्यं स्वयं प्रणतत्वानुसन्धानेन सङ्कोचः तदनुसन्धानस्त्वीत्... नास्तीति भावः ॥ ५४ ॥

स इति । [प्रीतियोगात्] सन्तोषसम्बन्धात् [विकसन्मुख-श्रीः] विकसन्ती मुखश्रीर्यस्य स तथोक्तः [सः] हिमवान् जायां मिमीते जानातीति [जामातुः] वरस्य । (६, ३, १०८

तस्मिन् मुहूर्त्ते पुरसुन्दरीणाम्
ईशानसन्दर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं
त्यक्तान्यकार्य्याणि विचेष्टितानि ॥५६॥

आलोकमार्गं सहसा व्रजन्त्या
कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न सम्भावित एव तावत्
करेण रुद्धोऽपि च केशपाशः ॥ ५७ ॥

पा० ) पृषोदरादित्वात्साधुः । "जामाता दुहितुः पतिः" इत्यमरः । [अग्रेसरताम्] पुरोगामित्वम् [उपेत्य] [एनम्] देवम् आगुल्फं पादग्रन्थिपर्य्यन्तं कीर्णानि पर्य्यस्तानि आपणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिन् तत् [आगुल्फकीर्णापणमार्गपुष्पम् ]। "तद्ग्रन्थी घुटिके गुल्फौ" इत्यमरः। [सद्म] सद्मम् [मन्दिरम् ] नगरम्। "मन्दिरं नगरेऽगारे मन्दिरो मकरालये" इति विश्वः। [प्रावेशयत्] ॥ ५५ ॥

तस्मिन्निति। [तस्मिन् मुहूर्त्ते] हरपुरप्रवेशसमये [ईशानस्य सन्दर्शने लालसानाम्] लोलुपानाम्। "लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः" इति यादवः। [ पुरसुन्दरीणाम् ] [प्रासादमालासु] [इत्थम्] वक्ष्यमाणप्रकारेण [त्यक्तान्यकार्य्याणि] विसृष्टकार्य्यान्तराणि [ विचेष्टितानि ] व्यापाराः। नपुंसके भावे क्तः ( ३, ३, ११४ पा० ) इति क्तः। [बभूवुः] आसन् ॥ ५६ ॥

तान्येवाह पञ्चभिः श्लोकैः,—

आलोकेति। [आलोकमार्गम्] दर्शनपथं गवाक्षमित्यर्थः।

प्रसाधिकालम्बितमग्रपादम्
आक्षिप्य काचित् द्रवरागमेव।
उत्सृष्टलीलागतिरागवाक्षात्
अलक्तकाङ्कां पदवीं ततान॥ ५८॥

विलोचनं दक्षिणमञ्जनेन
सम्भाव्य तद्वञ्चितवामनेत्रा।
तथैव वातायनसन्निकर्षं
ययौ शलाकामपरा वहन्ती॥ ५९॥

[सहसा व्रजन्त्या] गच्छन्त्या [कयाचित्] उद्वेष्टनः द्रुतगतिवशात् उन्मुक्तबन्धनः अत एव वान्तमाल्यः उद्गीर्णमाल्यश्च यः सः [उद्वेष्टनवान्तमाल्यः] [करेण रुद्धः] गृहीतः [अपि च] [केशपाशः] केशकलापः। "पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः। [तावत्] आलोकनमार्गप्राप्तिपर्य्यन्तम् [बन्धुम्] बन्धनाय इत्यर्थः। [नः सम्भावितः] न स्मृत [एव]॥५७॥

प्रसाधिकेति। [काचित्] स्त्री [प्रसाधिकया] अलङ्कर्त्र्या [आलम्बितम्] रञ्जनार्थं धृतम् [द्रवरागमेव] आर्द्रालक्तकमेव अग्रश्चासौ पादश्च [अग्रपादः] इति समानाधिकरणसमासः। "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति वामनः। तम् [आक्षिप्य] आकृष्य [उत्सृष्टलीलागतिः] त्यक्तमन्दगमना सती [आ गवाक्षात्] गवाक्षपर्य्यन्तं पदद्वयमेतत्। [पदवीम्-अलक्तकाङ्काम्] लाक्षारसचिह्नाम् [ततान] चकार॥ ५८॥

विलोचनमिति। [अपरा] स्त्री [दक्षिणम्] [विलोचनम्] [अञ्जनेन सम्भाव्य] अलङ्कृत्य [तद्वञ्चितम्] तेन अञ्जनेन वर्जि-

जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

अर्द्धाचिता सत्वरमुत्थितायाः
पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रसना तदानीम्
अङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

तम् [ वामनेत्रम् ] यस्याः सा तथोक्ता सती [ तथैव ] तेनैव रूपेण [ शलाकाम् ] अञ्जनकूर्चिकाम् [ वहन्ती ] बिभ्रती [ वातायनसन्निकर्षम् ] गवाक्षसमीपम् [ ययौ ] दक्षिणग्रहणं सम्भ्रमात् व्युत्क्रमद्योतनार्थं "सव्यं हि पूर्वं मनुष्या अञ्जते" इति श्रुतेः ॥ ५९ ॥

जालान्तरेति । [अन्या] स्त्री [जालान्तरप्रेषितदृष्टिः] गवाक्षमध्यप्रसारितदृष्टिः सती [प्रस्थानेन] गमनेन [भिन्नाम्] त्रुटिताम् [नीवीम्] वस्त्रग्रन्थिम् । "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः । [ न बबन्ध ] न अबध्नात् । किन्तु [नाभिं प्रविष्टा] [आभरणानाम्] अलङ्काराणाम् [प्रभा] यस्य तेन । प्रभैव नाभेरावरणम् अभूत् इति भावः । [हस्तेन वासोऽवलम्ब्य] धृत्वा [तस्थौ] ॥ ६० ॥

अर्द्धेति । [सत्वरम्] सवेगम् [ उत्थितायाः ] [ कस्याश्चित् ] अर्द्धमाचिता मणिभिर्गुम्फिता [अर्द्धाचिता] [दुर्निमिते] संभ्रमात् दुःखेन निक्षिप्ते डुमिञ् प्रक्षेपण इति धातोः कर्मणि क्तः ।

तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन् ॥ ६२ ॥
तावत् पताकाकुलमिन्दुमौलि-
रुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वन्
ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥
तमेकदृश्यं नयनैः पिबन्त्यो
नार्य्यो न जग्मुर्विषयान्तराणि ।

[पदे पदे] प्रतिपदं-वीप्सायां द्विर्भावः [ गलन्ती ] गलद्रत्ना सती [रसना] मेखला [तदानीम्] तस्मिन्नवसरे [अङ्गुष्ठमूले अर्पितम् ] लगितम् [सूत्रम्] एव [शेषः] यस्याः सा [आसीत्] ॥ ६१ ॥

तासामिति । तदानीं [सान्द्रकुतूहलानाम् तासाम्] स्त्रीणाम् [आसवगन्धो गर्भे] येषां तैः [विलोलानि नेत्राणि] एव [भ्रमराः] येषु तैः [मुखैर्व्याप्तान्तराः] छन्नावकाशाः [गवाक्षाः] [सहस्रपत्राभरणा इव आसन् ] कमलालङ्कृता इव स्थिता इत्यर्थः ॥ ६२ ॥

तावदिति । [ तावत् ] तस्मिन्नवसरे [इन्दुमौलिः] ईश्वरः [दिवापि प्रासादशृङ्गाणि] [ ज्योत्स्नाभिः अभिषेकेण ] स्नपनेन [द्विगुणद्युतीनि] द्विरावृत्तकान्तीनि । "गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु" इति वैजयन्ती । [ कुर्वन् ] [पताकाभिराकुलम्] व्याकीर्णम् [उत्तोरणम्] उच्छ्रिततोरणम् [ राजपथं प्रपेदे] ॥ ६३ ॥

तथा हि शेषेन्द्रियवृत्तिरासां
सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥
स्थाने तपो दुश्चरमेतदर्थम्
अपर्णया पेलवयाऽपि तप्तम् ।
या दास्यमप्यस्य लभेत नारी
सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥६५॥

तमिति। एकः एव दृश्यः दर्शनीयः तम् [एकदृश्यम् तम्] ईश्वरम् [नयनैः पिबन्त्यः] अतितृष्णाया पश्यन्त्य इत्यर्थः। [ताः शङ्करं दृष्टिभिरापिबन्त्यः] इति वा पाठः। [नार्यो विषयान्तराणि] ततोऽन्यान् विषयान् शब्दादीन् इत्यर्थः। [न जग्मुः] न विदुः इत्यर्थः। [तथा हि आसाम्] नारीणाम् [शेषेन्द्रियवृत्तिः] श्रोत्रादिप्रवृत्तिः [सर्वात्मना] स्वरूपकार्त्स्न्येन [चक्षुः प्रविष्टेव]। श्रोत्रादीनि इन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरिव प्रविश्य कौतुकात् स्वयमप्येनमुपलभन्ते किमु ?। अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥ ६४ ॥

अथ पौराङ्गनावचनानि आह,—

स्थान इति। [पेलवया] कोमलया [ अपि ] [ अपर्णया ] पार्वत्या एतस्मै शिवाय इदम् [एतदर्थम्]। अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति (२, १, ३६ सू० वा०) विशेष्यनिघ्नत्वम्। [दुश्चरं तपस्तप्तं स्थाने] युक्तम्। कुतः ? [ या नारी अस्य] ईश्वरस्य [दास्यम्] दासीत्वम् [अपि लभेत सा कृतार्था स्यात्]। या अङ्क एव शय्या ताम् [अङ्कशय्याम्] लभेत सा [किमुत] ? कृतार्था इति किमु वक्तव्यमित्यर्थः ॥ ६५ ॥

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥६६॥

न नूनमारूढरुषा शरीरम्
अनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये
सन्न्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥

अनेन सम्बन्धमुपेत्य दिष्ट्या
मनोरथप्रार्थितमीश्वरेण ।

परस्परेणेति । [स्पृहणीयशोभम्] सर्वैराशास्यमानसौन्दर्यम् [इदं द्वन्द्वम्] मिथुनम् । द्वन्द्वं रहस्येत्यादिना (८, १, १५ पा० ) निपातः । [ परस्परेण न अयोजयिष्यत् चेत् ] न योजयेत् यदि [प्रजानां पत्युः] विधातुः [अस्मिन् द्वये] द्वन्द्वे [रूपविधाने] सौन्दर्यनिर्माणे [यत्नः] प्रयासः [विफलोऽभविष्यत्] भवेत् । एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः । लिङ्निमित्ते लृङ् क्रियातिपत्तौ (३,३,१३९ पा०) इति लृङ् ॥६६॥

नेति । [आरूढरुषा] प्ररूढकोपेन [अनेन] हरेण [कुसुमायुधस्य] कामस्य [शरीरं न दग्धं नूनम्] किन्तु [ कामः अमुं देवमुदीक्ष्य] दृष्ट्वा [व्रीडात्] सौन्दर्येण जितोऽस्मीति लज्जया [स्वयमेव सन्न्यस्तदेहः] त्यक्तदेह इति [मन्ये] उत्प्रेक्षा । न अस्याः आकृतेः कोऽप्युपमास्तीति भावः ॥ ६७ ॥

मूर्द्धानमालि ! क्षितिधारणोच्चम्
उच्चैस्तरं वक्ष्यति शैलराजः ॥ ६८ ॥

इत्योषधिप्रस्थविलासिनीनां
शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
केयूरचूर्णीकृतलाजमुष्टिं
हिमालयस्यालयमाससाद ॥ ६९ ॥

काचित्काश्चिदाह,—

अनेनेति । हे [आलि] ! सखि ! । "आलिः सखी वयस्या च" इत्यमरः । [शैलराजः] हिमवान् [दिष्ट्या] इति आनन्देऽव्ययम् । [मनोरथैः प्रार्थितम्] अवरुद्धम् अभिलाषविषयीकृतमित्यर्थः । "प्रार्थना याच्ञावरोधयोः" इत्यभिधानात् । [अनेन] [ईश्वरेण] [सम्बन्धमुपेत्य] अवाप्य [क्षितिधारणेन] [उच्चम्] उन्नतम् [मूर्द्धानम् उच्चैस्तरम्] उन्नततरम् । उच्चैरित्यव्ययात्तरप्प्रत्ययः । मूर्द्ध्नो द्रव्यत्वादामुप्रत्ययान्तो निपातः । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे इत्यादिना (५, ४, ११ पा०) अद्रव्यप्रकर्षे तस्य विधानादिति । [वक्ष्यति] धारयिष्यति । वहतेर्लृट् ॥ ६८ ॥

इतीति । [त्रिनेत्रः] त्र्यम्बकः त्रिनेत्रत्रिनयनशब्दयोः क्षुभ्नादिषु चेति (८, ४, ३९ पा०) णत्वाभावः [इति] इत्थम्, [ओषधिप्रस्थविलासिनीनाम्] सम्बन्धिनीः [श्रोत्रसुखाः] श्रवणमधुराः [कथाः] आलापान् [शृण्वन्] [केयूरैः] अङ्गदैः [चूर्णीकृताः लाजानां मुष्टयः] यस्मिन् तं तथोक्तम् । तत्र अवकीर्णाः आचारलाजाः अन्तराल एव अङ्गदैः चूर्णपेषं पिष्यन्त इति पुरन्ध्रिजनसम्बाधातिशयोक्तिः । [हिमालयस्य] हिमवतः [आलयम्] भवनम् [आससाद] प्राप ॥ ६९ ॥

तत्रावतीर्य्याच्युतदत्तहस्तः
शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन
कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥

तमन्वगिन्द्रप्रमुखाश्च देवाः
सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्य्यालयमभ्यगच्छन्
प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥

तत्रेति । [तत्र] हिमवदालये [अच्युतेन] विष्णुना [दत्तहस्तः] वितीर्णहस्तावलम्बः सन् [शरद्घनात्] शरन्मेघात् शरद्विशेषणात् मेघस्य शुभ्रत्वं गम्यते । [दीधितिमान्] सूर्य्यः [इव] [उक्ष्णः] वृषात् [अवतीर्य्य] [कमलासनेन] [पूर्वम्] अग्रे [क्रान्तानि] प्रविष्टानि [अद्रिपतेः कक्ष्यान्तराणि] गेहप्रकोष्ठान्तराणि [विवेश] । "कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहे प्रकोष्ठके" इति यादवः ॥ ७० ॥

तमिति । [तम्] ईश्वरम् [अन्वक्] अनुपदम् अव्ययमेतत् । "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्" इत्यमरः । [इन्द्रप्रमुखा देवाश्च] सप्त ऋषयः पूर्वे येषां ते [सप्तर्षिपूर्वाः] । न बहुव्रीहौ इति (१, १, २९ पा०) सर्वनामसंज्ञाप्रतिषेधः । [परमर्षयश्च] सनकादिमहर्षयश्च । सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति (२, १, ६१ पा०) तत्पुरुषः । [गणाश्च] प्रमथाश्च [उत्तमार्थाः] महाप्रयोजनाः [प्रशस्तम्] प्रकृष्टम् अमोघमित्यर्थः । आरभ्यत इति [आरम्भः] उपायः तम् [इव गिर्य्यालयम्] हिमवन्मन्दिरम् [अभ्यगच्छन्] प्राविशन्नित्यर्थः ॥७१॥

तत्रेश्वरो विष्टरभाग् यथावत्
सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं
प्रत्यग्रहीत् सर्वममन्त्रवर्ज्जम् ॥ ७२ ॥

दुकूलवासाः स वधूसमीपं
निन्ये विनीतैरवरोधदक्षैः ।
वेलासमीपं स्फुटफेनराजि-
र्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥

तत्रेति । [तत्र] हिमवदालये [ईश्वरो विष्टरभाक्] आसन गतः उपविष्ट इत्यर्थः । [यथावत्] यथार्हं विधिवदित्यर्थः । [सरत्नम्] रत्नसहितम् [अर्घ्यम्] अर्घार्थं जलम् । मधु क्षौद्रमस्मिन्नस्तीति [मधुमत्] गवि भवम् [गव्यञ्च] दधि च मधुपर्कमित्यर्थः । "दधिमधुनी सर्पिर्मध्वलाभ" इति आश्वलायनगृह्यसूत्रात् । [नवे दुकूले च] इति [सर्वम् नगोपनीतम्] हिमवदानीतम् अर्घ्यादिकं मन्त्रान् वर्जयित्वा मन्त्रवर्जं ततो नञ्समासः [अमन्त्रवर्जम्] मन्त्रान् न वर्जयित्वा इत्यर्थः । द्वितीयायाञ्चेति (३, ४, ५३ पा०) णमुल्प्रत्ययः इत्याह—न्यासकारः अनुदात्तं पदमेकवर्जमित्यत्र । [प्रत्यग्रहीत्] स्वीकृतवान् ॥७२॥

दुकूलेति । अथ [दुकूलवासाः] दुकूलं वसान इत्यर्थः । [सः] हरः [विनीतैः] अनुद्धतैः अवरोधेषु ये दक्षाः तैः [अवरोधदक्षैः वधूसमीपं निन्ये] नीतः । कथमिव ? [स्फुटा फेनानाम् राजिः] यस्य सः । उदकमस्यास्तीति [उदन्वान्] समुद्रः । उदन्वानुदधौ चेति (८, २, १३ पा०) निपातनात्साधुः । [नवैः] अचिरोदितैः [चन्द्रपादैः] चन्द्रकिरणैः [वेलासमीपमिव] ॥७३॥

तया प्रवृद्धाननचन्द्रकान्त्या
प्रफुल्लचक्षुः कुमुदः कुमार्य्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्
संसृज्यमानः शरदेव लोकः ॥ ७४ ॥

तयोः समापत्तिषु कातराणि
किञ्चित्व्यवस्थापितसंहृतानि ।
ह्रीयन्त्रणां तत्क्षणमन्वभूवन्
अन्योन्यलोलानि विलोचनानि ॥ ७५ ॥

तयेति। आननं चन्द्र इवेत्युपमितसमासः। [प्रवृद्धा आननचन्द्रस्य कान्तिः] यस्यास्तया तथोक्तया [तया कुमार्य्या शरदा लोक इव संसृज्यमानः] सङ्गच्छमानः [शिवः चक्षूंषि कुमुदानि] इव तानि [प्रफुल्लानि] यस्य सः तथोक्तः चेतः सलिलमिव तत् प्रसन्नं यस्य सः तथोक्तः [प्रसन्नचेतःसलिलोऽभूत्]। शरल्लोकयोरपि यथोचितं विशेषणानि योज्यानि ॥ ७४ ॥

तयोरिति। [तयोः] वधूवरयोः [समापत्तिषु] यदृच्छया सङ्गतिषु [कातराणि] चकितानि। "अधीरे कातरे" इत्यमरः। द्रष्टुमसमर्थानीति भावः। [किञ्चित्] ईषत् व्यवस्थापितानि स्थिरीकृतानि पश्चात् संहृतानि निवर्त्तितानि चेति [व्यवस्थापितसंहृतानि]। पूर्वकालेत्यादिना (२, १, ४९ पा०) तत्पुरुषः। [अन्योऽन्यस्मिन् लोलानि] सतृष्णानि। "लोलश्चलसतृष्णयोः" इत्यमरः। [विलोचनानि] दृष्टयः [तत्क्षणम्] तस्मिन् क्षणे [ह्रीयन्त्रणाम्] ह्रिया निमित्तेन सङ्कोचम् [अन्वभूवन्] ॥ ७५ ॥

तस्याः करं शैलगुरूपनीतं
जग्राह ताम्राङ्गुलिमष्टमूर्त्तिः ।
उमातनौ गूढ़तनोः स्मरस्य
तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६ ॥

रोमोद्गमः प्रादुरभूदुमायाः
स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन
समं विभक्तेव मनोभवस्य ॥ ७७ ॥

तस्या इति । [अष्टमूर्त्तिः] शिवः तस्मात् ईश्वराच्छङ्कत इति [तच्छङ्किनः] तद्भीतस्य इत्यर्थः अतएव [ उमातनौ ] उमाशरीरे [गूढ़तनोः] गुप्तशरीरस्य [स्मरस्य पूर्वम्] [ प्ररोहमिव ] प्रथमाङ्कुरमिव स्थितम् [ शैलगुरूपनीतं ] शैलगुरुणा हिमवता उपनीतं प्रापितम् । अथवा शैलगुरुणा हिमवत्पुरोधसा उपनीतम् [ताम्राङ्गुलिम्] रक्ताङ्गुलिं [ तस्याः ] पार्वत्याः [ करं जग्राह] ॥ ७६ ॥

रोमोद्गमेति । [उमायाः रोमोद्गमः] रोमाञ्चः [प्रादुरभूत्] । पुमान् गौः पुङ्गवः वृषभः । गोरतद्धितलुकीति (५,४, ९२ पा॰) टच् । सः केतुः चिह्नं यस्य सः [पुङ्गवकेतुः] शिवः [स्विन्नाङ्गुलिः] रासीत्] । अत उत्प्रेक्ष्यते [ पाणिसमागमेन ] पाण्योः संस्पर्शेन कर्त्रा [तयोः] वधूवरयोः [ मनोभवस्य वृत्तिः ] अवस्थितिः [समं विभक्तेव] समीकृतेव इत्यर्थः । प्राक्सिद्धस्यापि अनुरागसाम्यस्य सम्प्रति तत्कार्य्यदर्शनात् पाणिसंस्पर्शजातत्वमुत्प्रेक्ष्यते । ननु कन्या तु प्रथमसङ्गमे स्विन्नकरचरणा भवति पुमांस्तु रोमाञ्चितो भवतीति वात्स्यायनेन विपरीतमुक्तमिति चेत् नैष दोषः

प्रयुक्तपाणिग्रहणं यदन्यत्
वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं
किं कथ्यते श्रीरुभयस्य तस्य ॥ ७८ ॥

प्रदक्षिणप्रक्रमणात् कृशानोः
उदर्चिषस्तन्मिथुनं चकाशे ।
मेरोरुपान्तेष्विव वर्त्तमानम्
अन्योन्यसंसक्तमहस्त्रियामम् ॥ ७९ ॥

एभिरनयोर्भावं परीक्षेतेति वाक्यशेषे एभिरिति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेन अनियमावधारणात् । अतएव रघुवंशे अन्यथाभिधानात् स्वोक्तिविरोध इत्यपास्तम् । तदेतत् रघुवंशसञ्जीवन्यां सुव्यक्तमवोचम् सात्त्विकास्तु "स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः ॥" इति ॥ ७७ ॥

प्रयुक्तेति । [यत्] यस्मात्कारणात् [ प्रयुक्तं पाणिग्रहणम् ] यस्य तत्तथोक्तम् । [अन्यत्] । लौकिकं वधूश्च वरश्च [ वधूवरम् ] समाहारे द्वन्द्वैकवद्भावः । [तदानीम्] पाणिग्रहणकाले [अनयोः] उमाशिवयोः [सान्निध्ययोगात्] सन्निधिभावात् [अग्र्याम्] उत्तमाम् [कान्तिम्] शोभाम् [पुष्यति] पुष्णाति [ तस्योभयस्य ] उमामहेश्वररूपस्य मिथुनस्य [ श्रीः किम् कथ्यते ] यत्प्रसादात् अन्यस्य शोभालाभः तस्य शोभा किमु वक्तव्येत्यर्थः । "विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेताम्" इत्यागमः ॥ ७८ ॥

प्रदक्षिणेति । [ तन्मिथुनम् उदर्चिषः ] उन्नतज्वालस्य [ कृशानोः ] कर्मणः [ प्रदक्षिणप्रक्रमणात् ] प्रदक्षिणीकरणात्

तौ दम्पती त्रिः परिणीय वह्निम्
अन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधाः
तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥ ८० ॥

सा लाजधूमाञ्जलिमिष्टगन्धं
गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्याः
मुहूर्त्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥

[चकाशे]। किमिव ? [मेरोरुपान्तेषु] परिसरेषु [ वर्त्तमानम् ] आवर्त्तमानं मेरुं प्रदक्षिणीकुर्वत् इत्यर्थः। [अन्योन्येन संसक्तम्] सङ्गतम् मिथुनस्यापि एतत् विशेषणम्।—अहश्च त्रियामा च [अहस्त्रियामं] रात्रिन्दिवम् [इव]। समाहारे द्वन्द्वैकवद्भावः॥७९॥

ताविति। [सः] पुरस्तादेव हितं विधत्ते इति [पुरोधाः] पुरोहितः [अन्योन्यस्य संस्पर्शेन] स्पर्शसुखेन [ निमीलिताक्षौ तौ] जाया च पतिश्च [ दम्पती ] कर्मभूतौ। जायाशब्दस्य (२, २, ३१ ग० सू०) दम्भावो निपातितः। [ वह्निं त्रिः ] त्रिवारम्। द्वित्रिचतुर्भ्यः सुजिति (५, ४, १८ पा०) सुच्। [परिणीय] परितो नीत्वा प्रदक्षिणीकृत्य इत्यर्थः। नयतेर्द्वि-कर्मकात्ल्यप्। [समिद्धार्चिषि] दीप्तज्वाले [ तस्मिन् ] वह्नौ [वधूं लाजमोक्षम् ] लाजविसर्गं [कारयामास]। हृक्रोरन्यतरस्या-मिति १, ४, ५३ पा०) विकल्पादणिकर्त्तुः कर्मत्वम् ॥ ८० ॥

सेति। [सा] वधूः [गुरोः] पुरोधसः [उपदेशात्] [ इष्टः ] घ्राणतर्पण इत्यर्थः [ गन्धः ] यस्य तं [लाजधूमाञ्जलिं वदनं

तदीषदार्द्रारुणगण्डलेखम्
उच्छ्वासिकालाञ्जनरागमक्ष्णोः।
वधूमुखं क्लान्तयवावतंसम्
आचारधूमग्रहणाद् बभूव ॥ ८२ ॥

वधूं द्विजः प्राह तवैष वत्से!
वह्निर्विवाहं प्रति कर्मसाक्षी।
शिवेन भर्त्रा सह धर्मचर्य्या
कार्य्या त्वया मुक्तविचारयेति ॥ ८३ ॥

निनाय]। [कपोलसंसर्पिणी शिखा] यस्य सः तथोक्तः [स] धूमः [तस्याः] गौर्य्याः [मुक्तत्तकर्णोत्पलतां प्रपेदे]। धूमस्य विभ्रमत्वात् मुक्तत्त्वग्रहणम् ॥ ८१ ॥

तदिति। [तत्] [वधूमुखम्] [आचारधूमग्रहणात्] आचारप्राप्तधूमत्वात् [ईषदार्द्रे] स्विन्ने [अरुणे] च [गण्डलेखे] गण्डस्थले यस्य तत् तथोक्तम् [अक्ष्णोः] [उच्छ्वासी] उद्गच्छन् [कालाञ्जनस्य रागः] रञ्जनं यस्य तत् तथोक्तं [क्लान्तो यवावतंसः] यवाङ्कुरकर्णपूरो यस्य तत्तथाभूतं [बभूव]। "लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्" इति प्रयोगवृत्तिकारः ॥ ८२ ॥

वधूमिति। अथ [वधूं द्विजः] पुरोधाः [प्राह]। किमिति? हे [वत्से! एष वह्निः तव विवाहं प्रति] विवाहकर्मणीत्यर्थः। [कर्मसाक्षी] कर्मद्रष्टा [भर्त्रा शिवेन सह] [मुक्तविचारया] निर्विचारया [त्वया धर्मचर्य्या] धर्माचरणं [कार्य्या] कर्त्तव्या [इति]। अयञ्च प्राजापत्यविवाहो द्रष्टव्यः। यथाह आश्वलायनः,—"सहधर्मञ्चरेदिति प्राजापत्य" इति ॥ ८३ ॥

आलोचनान्तं श्रवणे वितत्य
पीतं गुरोस्तद्वचनं भवान्या।
निदाघकालोल्वणतापयेव
माहेन्द्रमम्भः प्रथमं पृथिव्या ॥ ८४ ॥
ध्रुवेण भर्त्रा ध्रुवदर्शनाय
प्रयुज्यमाना प्रियदर्शनेन।
सा दृष्ट इत्याननमुन्नमय्य
ह्रीसन्नकण्ठी कथमप्युवाच ॥ ८५ ॥
इत्थं विधिज्ञेन पुरोहितेन
प्रयुक्तपाणिग्रहणोपचारौ।

आलोचनान्तमिति। भवस्य पत्न्या [भवान्या]। इन्द्रवरुण-भवशर्वरुद्रेत्यादिना (४, १, ४८ पा०) ङीप् आनुगागमश्च। [आलोचनान्तम्] नेत्रान्तपर्य्यन्तम् आङ्मर्य्यादाभिविध्योः(२,१, १३ पा०) इत्यव्ययीभावः। [श्रवणे] श्रोत्रे [वितत्य] विस्तार्य्य [तत्] पूर्वोक्तं [गुरोः] याज्ञिकस्य [वचनम्] सह धर्मं चरेति वाक्यं [निदाघकाले] ग्रीष्मकाले [उल्वणतापया] उत्कटसन्तापया [पृथिव्या] [प्रथमम्] आद्यं [माहेन्द्रं] पार्जन्यम् [अम्भ इव, पीतम्] अत्यादरेण शुश्राव इत्यर्थः॥ ८४ ॥

ध्रुवेणेति। प्रियं दर्शनं यस्य कर्मभूतस्य तेन [प्रियदर्शनेन ध्रुवेण] शाश्वतेन [भर्त्रा] [ध्रुवस्य] नक्षत्रविशेषस्य [दर्शनाय]। "ध्रुवो भभेदे क्लीवन्तु निश्चिते शाश्वते त्रिषु" इत्यमरः। [प्रयुज्यमाना] दृश्यतामिति प्रेर्य्यमाणा [ह्रीसन्नकण्ठी] ह्रिया हीनस्वरा [सा] वधूः [कथमपि आननमुन्नमय्य दृष्ट इत्युवाच] ॥ ८५ ॥

प्रणेमतुस्तौ पितरौ प्रजानां
पद्मासनस्थाय पितामहाय ॥ ८६ ॥
वधूर्विधात्रा प्रतिनन्द्यते स्म
कल्याणि ! वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्टमूर्त्तौ
त्वाशंसचिन्तास्तिमितो बभूव ॥ ८७ ॥
क्लृप्तोपचारां चतुरस्रवेदीं
तावेत्य पश्चात् कनकासनस्थौ ।

इत्यमिति। [इत्थम्] अनेन प्रकारेण। इदमस्थमुरिति (५, ३, २४ पा०) थमुप्रत्ययः। [विधिज्ञेन] विवाहप्रयोगज्ञेन शास्त्रज्ञेनेत्यर्थः। [पुरोहितेन] हैमवतेन [प्रयुक्तपाणिग्रहणोपचारौ] कृतविवाहकर्माणौ [प्रजानां पितरौ तौ] उमामहेश्वरौ [पद्मासनस्थाय] पद्मासनोपविष्टाय पितॄणां पित्रे [पितामहाय] ब्रह्मणे। "पितामहोविरिञ्चौ स्यात्तातस्य जनकेऽपि च" इति विश्वः। पितृव्यमातुलमातामहपितामहा इति (४, २, ३६ पा०) निपातनात्साधुः। [प्रणेमतुः] नमश्चक्रतुः। पितामहस्य पित्रो रपि पूज्यत्वादिति भावः ॥ ८६ ॥

वधूरिति। [वधूः] कन्या [विधात्रा] ब्रह्मणा हे [कल्याणि !] शोभने ! वीरः प्रसवोऽपत्यं यस्याः सा [वीरप्रसवा] वीरसूः [भवेति] [प्रतिनन्द्यते] [स्म] आशिषमुक्तेत्यर्थः। [सः] विधाता [वाचस्पतिः] वागीश्वरः [अपि सन्]। कस्कादिषु (८, ३, ४८ पा०) पाठात्साधुः। [अष्टमूर्त्तौ] शिवे [तु] [आशास्यम्] आकाङ्क्ष्यं तत्र [चिन्ता] विचारः तस्याम् [स्तिमितः] मन्दः [बभूव]। तस्य निरीहस्य आशास्याभावात् आशिषि स्तिमितत्वमित्यर्थः ॥ ८७ ॥

जायापती लौकिकमेषणीयम्
आर्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥

पत्रान्तलग्नैर्जलबिन्दुजालैः
आकृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्य्यायतनालदण्डम्
आधत्त लक्ष्मीः कमलातपत्रम् ॥८९॥

द्विधा प्रयुक्तेन च वाङ्मयेन
सरस्वती तन्मिथुनं नुनाव ।

क्लृप्तेति। [तौ] [जायापती] वधूवरौ [ पश्चात् ] नमस्कारानन्तरम् [क्लृप्ताः] रचिताः [ उपचाराः ] पुष्परचनादयो यस्यां तां [चतुरस्रवेदीम् एत्य] प्राप्य [कनकासनस्थौ] सन्तौ [ लौकिकम् ] लोके विदितम् आचारप्राप्तमित्यर्थः। अतएव [एषणीयम् ] आशास्यम्। "तथापि लौकिकाचारं मनसापि न लङ्घयेत्" इति शास्त्रादवश्यकर्त्तव्यमित्यर्थः। इषेरिच्छार्थादनीयर् प्रत्ययः। [ आर्द्राक्षतारोपणम् अन्वभूताम् ] ॥ ८८ ॥

पत्रान्तेति। [लक्ष्मीः] श्रीदेवी [ पत्रान्तेषु ] दलप्रान्तेषु [लग्नैर्जलबिन्दुजालैः] [आकृष्टा] आहृता [ मुक्ताफलजालेन] प्रान्तलम्बिना मुक्ताकलापेन या [शोभा] येन तत् तथोक्तम् [आयतम्] दीर्घम् [नालम्] एव [दण्डः] यस्य तत् [ कमलम् ] एव [आतपत्रम्] तत् [तयोः उपरि आधत्त] दधौ ॥ ८९ ॥

द्विधेति। अथ [ सरस्वती ] वाग्देवी [ द्विधा ] संस्कृतप्राकृतरूपेण द्वैविध्येन [प्रयुक्तेन] उच्चारितेन [वाङ्मयेन च] शब्दजालेनच [तन्मिथुनं नुनाव] तुष्टाव। णु स्तुताविति धातोर्लिट्

संस्कारपूतेन वरं वरेण्यं
बधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥
तौ सन्धिषु व्यञ्जितवृत्तिभेदं
रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्त्तं
प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥

केन? कमित्याह संस्कारेति,—[संस्कारेण] शास्त्रव्युत्पत्त्या [पूतेन] प्रकृतिप्रत्ययविभागशुद्धेन संस्कृतेनेत्यर्थः। [वरेण्यम्] वरणीयं श्लाघ्यमित्यर्थः। वृणोतेरौणादिकः (वृञ एन्य इति ३, ९८ सू०) एन्यप्रत्ययः। [वरम्] वोढारं शिवम्, [सुखेन ग्राह्यम्] सुबोधम् [निबन्धनम्] रचना यस्य तेन वाङ्मयेन प्राकृतभाषया इत्यर्थः। [बधूम्] नुनाव इत्यनेन सम्बन्धः ॥९०॥

ताविति। [तौ] दम्पती [सन्धिषु] मुखादिनिर्वहणान्तेषु पञ्चसन्धिषु। तदुक्तं दशरूपके,—"मुखं प्रतिमुखं गर्भः सावमर्षोपसंहृतिः" इति। [व्यञ्जितवृत्तिभेदम्] स्फुटीकृतकौशिक्यादिवृत्तिविशेषम् रसानुगुण्येन इति शेषः। तदुक्तं भूपालेन,—"कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्त्वती। रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः। शृङ्गारादिषु भावज्ञैः रसेष्विष्टा तु भारती ॥" तथा। कौशिक्यारभटी चैव सात्त्वती भारती तथा। चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितम्" ॥ इति। [रसान्तरेषु] शृङ्गारादिरसभेदेषु "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः। "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः ॥" इति। [प्रतिबद्धरागम्] प्रतिनियमेन प्रवर्त्तितः वसन्त-

देवास्तदन्ते हरमूढभार्य्यं
किरीटबद्धाञ्जलयो निपत्य ।
शापावसाने प्रतिपन्नमूर्त्तेः
ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥
तस्यानुमेने भगवान् विमन्युः
व्यापारमात्मन्यपि सायकानाम् ।

ललितादिरागो यस्मिन् तम्, यस्मिन् रसे यो रागो विहितस्त-दनुसारेण प्रयुक्तरागमित्यर्थः। यथाह कोहलः,—"रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते। शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्त्तिताः। भयानके च बीभत्से शान्ते गेयो नपुंसके॥" इति। [ललिताङ्गहारम्] मधुराङ्गविक्षेपम् "अङ्गहारोऽङ्ग-विक्षेपः" इत्यमरः। आदौ भवम् [आद्यम्] रूपकान्तर-प्रकृतिभूतमित्यर्थः। तदुक्तम्,—"आहुः प्रकरणादीनां नाटक-प्रकृतिं बुधाः" इति। [अप्सरसाम्] उर्वश्यादीनाम् प्रयुज्यत इति [प्रयोगः] रूपकं नाटकमित्यर्थः। आद्यमिति विशेषणात्। तम् [मुहूर्त्तमपश्यताम्] दृष्टवन्तौ। पाघ्राध्मास्थेत्यादिना (७, ३, ७८ पा०) दृशेः पश्यादेशः॥ ९१ ॥

देवा इति। [देवाः] इन्द्रादयः। [तदन्ते] तस्य प्रयोगदर्शन-स्यान्ते अवसाने [ऊढभार्य्यम्] परिणीतदारम् [हरम्] [किरी-टेषु बद्धाः अञ्जलयः] येषां ते तथोक्ताः सन्तः [निपत्य] प्रणम्य [शापावसाने प्रतिपन्नमूर्त्तेः] लब्धशरीरस्य "परिणेष्यति पार्वतीं यदेत्यादिना" शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः। [पञ्च-शरस्य] कामस्य कर्त्तुः [सेवां ययाचिरे]। पुनः समासादितशरी-रस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुः इत्यर्थः। दुह्याचु-पचित्यादिना द्विकर्मकत्वम् ॥ ९२ ॥

कालप्रयुक्ता खलु कार्य्य-(-काल)-विद्भिः
विज्ञापना भर्तृषु सिद्धिमेति ॥ ९३ ॥
अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण ।
कनकलशयुक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात्॥९४॥

तस्येति। [विमन्युः] विगतक्रोधः [भगवान्] ईश्वरः ...त्मन्यपि] [तस्य] कामस्य [सायकानाम् व्यापारमनुमेने]। ...थाहि [कार्य्यविद्भिः] कार्य्यज्ञैः अथवा [कालविद्भिः] अव-...रज्ञैः [काले] योग्यावसरे [प्रयुक्ता] अनुष्ठिता [भर्तृषु] ...षु विषये [विज्ञापना] [सिद्धिमेति खलु] सफला भवती-...र्थः। अयमेव अस्य स्मरसेवास्वीकारः यत् आत्मन्यपि तत्-...यिकव्यापारम् अङ्गीकृतवानिति ॥ ९३ ॥

अथेति। [अथेन्दुमौलिः] ईश्वरः [तान् विबुधगणान् ...सृज्य] [क्षितिधरपतिकन्याम्] पार्वतीम् [करेण आद-...नः]। [कनककलसयुक्तम्] मङ्गलार्थमन्तर्निहितहेममयपूर्ण-...म्भम् [भक्तयः] पुष्पादिरचनाः तासाम् [शोभया सनाथम्] ...हितमित्यर्थः। [क्षितिविरचितशय्यम्] क्षितौ विरचिता ...स्थण्डिले कल्पिता शय्या तल्पं यस्मिन् तत् तथोक्तम्। [कौतु-...कागारमागात्] शय्यागृहं जगाम। अत आश्वलायनः,—"अत ...ऊर्द्धमक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्यातीम्" ...ति। अत ऊर्द्धं विवाहादूर्द्धम् आत्रिरात्रादिति शेषः। "त्रिरात्रं ...द्वादशरात्रं वा" इति वचनात्। तथा कामशास्त्रेऽपि,—"अथ ...रिरात्रौ प्रक्रमेणैव किञ्चित्तिस्त्रषु च रजनीषु स्तब्धभावा

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः ।
अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥९५॥

इति श्रीकालिदासकृतौ कुमारसम्भवे महाकाव्ये
उमापरिणयोनाम सप्तमः सर्गः ॥

दुनोति । त्रिदिनमिह न भिन्द्याद् ब्रह्मचर्य्यं न चास्या हृदयमननुरुध्य स्वेच्छया नर्म कुर्य्यात्" ॥ ९४ ॥

नवेति । [तत्र] कौतुकागारे [ईशः] ईश्वरः [नवपरिणयेन] नवोद्वाहेन या [लज्जा] सा [भूषणम्] यस्यास्ताम् । अत एव [तत्] तेन ईश्वरेण [कृताक्षेपम्] कृताकर्षणम् उन्नमितमिति यावत् । [वदनमपहरन्तीम्] साचीकुर्वन्तीम् अयं लज्जानुभावः । अनुभावान्तरमाह,—[शयनसखीभ्यः अपि] शयने सहशायिनीभ्योऽपि नर्मसहचरीभ्योऽपीत्यर्थः । [कथञ्चित्] कृच्छ्रेण [दत्तवाचम्] दत्तोत्तराम् [गौरीम्] [प्रमथाः] भृङ्गीरीटिप्रभृतयः हास्यरसाधिदेवताः पशुपतेः पारिषदाः । यथाह भरतः,—"शृङ्गारो विष्णुदेवत्यो हास्यः प्रमथदैवत" इति । "प्रमथाः स्युः पारिषदा" इत्यमरः । तेषाम् [मुखविकारैः] मुखविकृतचेष्टितैः [गूढम्] अप्रकाशम् [हासयामास] हासाद्युपायैर्लज्जामपाकर्त्तुं प्रवृत्त इत्यर्थः । यथाह गोनर्दः,—"हासेन मधुना नर्मवचसा लज्जितां प्रियाम् । विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैः" इति ॥ ९५ ॥

इतिश्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां कुमारसम्भवव्याख्यायां सञ्जीवनीसमाख्यायां
सप्तमः सर्गः ।

